रिपुरुधिरनिषेकेणैव शोणाङ्घ्रिशालिन्
दह दह नरसिंहासह्यवीर्याहितं मे ॥ २

तव घनघनघोषो घोरमाघ्राय जङ्घा-
परिघमलघुमूरुव्याजतेजोगिरिं च ।
घनविघटितमागाद्दैत्यजङ्घालसङ्घो
दह दह नरसिंहासह्यवीर्याहितं मे ॥ ३

कटकिकटकराजद्धाटकाग्र्यस्थलाभा
प्रकटपटतटित्ते सत्कटिस्थाऽतिपट्वी ।
कटुककटुकदुष्टाटोपदृष्टिप्रमुष्टौ
दह दह नरसिंहासह्यवीर्याहितं मे ॥ ४

प्रखरनखरवज्रोत्खातरूक्षादिवक्षः
शिखरिशिखररक्तैराक्तसन्दोहदेह ।
सुवलिभशुभकुक्षे भद्रगम्भीरनाभे
दह दह नरसिंहासह्यवीर्याहितं मे ॥ ५

स्फुरयति तव साक्षात्सैव नक्षत्रमाला
क्षपितदितिजवक्षोव्याप्तनक्षत्रमार्गम् ।
अरिदरधर जान्वासक्तहस्तद्वयाहो
दह दह नरसिंहासह्यवीर्याहितं मे ॥ ६

कटुविकटसटौघोद्धट्टनाद् भ्रष्टभूयो-
घनपटलविशालाकाशलब्धावकाशम् ।
करपरिघविमर्दप्रोद्यमं ध्यायतस्ते
दह दह नरसिंहासह्यवीर्याहितं मे ॥ ७

हयलुठदलघिष्ठोत्कण्ठदष्टोष्ठविद्युत्-
सट शठकठिनोरः पीठभित्सुष्ठु निष्ठाम् ।

पठति नु तव कण्ठाधिष्ठघोरान्त्रमाला
दह दह नरसिंहासह्यवीर्याहितं मे ॥ ८

हतबहुमिहिराभासह्यसंहाररंहो
हुतवह बहुहेतिह्रेषिकानन्तहेति ।
अहितविहितमोहं संवहन् सैंहमास्यं
दह दह नरसिंहासह्यवीर्याहितं मे ॥ ९

गुरुगुरुगिरिराजत्कन्दरान्तर्गते वा
दिनमणिमणिशृङ्गे वान्तवह्निप्रदीप्ते ।
दधदतिकटुदंष्ट्रे भीषणोज्जिह्ववक्त्रे
दह दह नरसिंहासह्यवीर्याहितं मे ॥ १०

अपरितविबुधाब्धिध्यानधैर्यं विदध्य-
द्विविधविबुधधीश्रद्धापितेन्द्रारिनाशम् ।
निदधदतिकटाहोद्धट्टनेद्धाट्टहासं
दह दह नरसिंहासह्यवीर्याहितं मे ॥ ११

त्रिभुवनतृणमात्रत्राणतृष्णं तु नेत्र-
त्रयमतिलघितार्चिर्विष्टपाविष्टपादम् ।
नवतररविरत्नं धारयन् रूक्षवीक्षं
दह दह नरसिंहासह्यवीर्याहितं मे ॥ १२

भ्रमदभिभवभूभृद्भूरिभूभारसद्भिद्
भिदभिनव (विभवभ्रू) विदभ्रूविभ्रमादभ्रशुभ्र ।
ऋभुभवभयभेत्तर्भासि भोभोविभाभिः
दह दह नरसिंहासह्यवीर्याहितं मे ॥ १३

श्रवणखचितचञ्चत्कुण्डलोच्चण्ड (लोल) गण्ड
भ्रुकुटिकटुललाटश्रेष्ठनासारुणोष्ठ।
वरद सुरद राजत्केशरोत्सारितारे
दह दह नरसिंहासह्यवीर्याहितं मे।। १४

कचि (प्रवि) कचकचराजद्रत्नकोटीरशालिन्
गलगतगलदुस्रोदाररत्नाङ्गदाढ्य।
कनककटककाञ्चीशिंजिनीमुद्रिकावन्
दह दह नरसिंहासह्यवीर्याहितं मे।। १५

अरिदरमसिखेटौ बाणचापे गदां सन्-
मुसलमपि कराभ्यामंकुशं पाशवर्यम्।
करयुगल धृतान्त्रस्रग्विभिन्नारिवक्षो
दह दह नरसिंहासह्यवीर्याहितं मे।। १६

चट चट चट दूरं मोहय भ्रामयारीन्
कडि कडि कडि कामं ज्वालय स्फोटयस्व।
जहि जहि जहि वेगं शात्रवं सानुबन्धं
दह दह नरसिंहासह्यवीर्याहितं मे।। १७

विधिभवविबुधेशभ्रामकाग्निस्फुलिङ्ग-
प्रसविविकटदंष्ट्रोज्जिह्ववक्त्र त्रिनेत्र।
कल कल कल कामं पाहि मां ते सुभक्तं
दह दह नरसिंहासह्यवीर्याहितं मे।। १८

कुरु कुरु करुणां तां साङ्कुरां दैत्यपोते
दिश दिश विशदां मे शाश्वतीं देव दृष्टिम्।
जय जय जय मूर्तेऽनार्त जेतव्यपक्षं
दह दह नरसिंहासह्यवीर्याहितं मे।। १९

स्तुतिरियमहितघ्नी सेविता नारसिंही
तनुरिव परिशान्ता मालिनी साभितोऽलम्।
तदखिलगुरुमाग्र्यश्रीदरूपा लसद्भिः
सुनियमनयकृत्यैः सद्गुणैर्नित्ययुक्ता॥ २०

लिकुचतिलकसूनुः सद्धितार्थानुसारी
नरहरिनुतिमेतां शत्रुसंहारहेतुम्।
अकृत सकलपापध्वंसिनीं यः पठेत्तां
व्रजति नृहरिलोकं कामलोभाद्यसक्तः॥ २१

—*—

## नृसिंहस्तुतिः

सुरासुरशिरोरत्नकान्तिविच्छुरिताङ्घ्रये।
नमस्त्रिभुवनेशाय हरये सिंहरूपिणे॥ १

शत्रोः प्राणानिलाः पञ्च वयं दश जयोऽत्र कः।
इति कोपादिवाताम्राः पान्तु वो नृहरेर्नखाः॥ २

प्रोज्ज्वलज्ज्वलनज्वालाविकटोरुसटाच्छटः।
श्वासक्षिप्तकुलक्ष्माभृत्पातु वो नरकेसरी॥ ३

व्याधूतकेसरसटाविकरालवक्त्रं
हस्ताग्रविस्फुरितशङ्खगदासिचक्रम्।
आविष्कृतं सपदि येन नृसिंहरूपं
नारायणं तमपि विश्वसृजं नमामि॥ ४

दैत्यास्थिपञ्जरविदारणलब्धरन्ध्ररक्ताम्बुनिर्जरसरिद्घनजातपङ्काः।
बालेन्दुकोटिकुटिलाः शुकचञ्चुभासा रक्षन्तु सिंहवपुषो नखरा हरेर्वः॥ ५

दिश्यात्सुखं नरहरिर्भुवनैकवीरो यस्याहवे दितिसुतोद्दलनोद्यतस्य।
क्रोधोद्धतं मुखमवेक्षितुमक्षमत्वं जानेऽभवन्निजनखेष्वपि यन्नतास्ते ॥ ६

वपुर्दलनसंभ्रमात्स्वनखरं प्रविष्टे रिपौ
क्व यात इति विस्मयात्प्रहितलोचनः सर्वतः।
वृथेति करताडनान्निपतितं पुरो दानवं
निरीक्ष्य भुवि रेणुवज्जयति जातहासो हरिः ॥ ७

चटच्चटिति चर्मणि च्छमिति चोच्छलच्छोणिते
धगद्धगिति मेदसि स्फुटरवेऽस्थिनि ष्ठागिति।
पुनातु भवतो हरेरमरवैरिवक्षःस्थल
क्वणत्करजपञ्जरक्रकचकाषजन्माऽनलः ॥ ८

ससत्वरमितस्ततस्ततविहस्तहस्ताटवी-
निकृत्तसुरशत्रुहृत्क्षतजसिक्तवक्षःस्थलः।
स्फुरद्धरगभस्तिभिः स्थगितसप्तसप्तिद्युतिः
समस्तनिगमस्तुतो नृहरिरस्तु नः स्वस्तये ॥ ९

चञ्चच्चण्डनखाग्रभेदविगलद्दैत्येन्द्रवक्षःक्षरद्
रक्ताभ्यक्तसुपाटलोद्भटसदासंभ्रान्तभीमाननः।
तिर्यक्कण्ठकठोरघोषघटनासर्वाङ्गखर्वीभवद्
दिङ्मातङ्गनिरीक्षितो विजयते वैकुण्ठकण्ठीरवः ॥ १०

दंष्ट्रासंकटवक्त्रकन्दरललज्जिह्वस्य हव्याशन-
ज्वालाभासुरभूरिकेसरसटाभारस्य दैत्यद्रुहः।
व्यावल्गद्बलवद्धिरण्यकशिपुक्रोडस्थलास्फालन
स्फारप्रस्फुटदस्थिपञ्जररवक्रूरा नखाः पान्तु वः ॥ ११

सोमार्धायितनिष्पिधानदशनः संध्यायितान्तर्मुखो
बालार्कायितलोचनः सुरधनुर्लेखायितभ्रूलतः।

अन्तर्नादनिरोधपीवरगलत्त्वक्कूपनिर्यत्तडित्-
तारस्फारसटावरुद्धगगनः पायान्नृसिंहः स वः ॥ १२

विद्युच्चक्रकरालकेसरसटाभारस्य दैत्यद्रुहः
शोणन्नेत्रहुताशडम्बरभृतः सिंहाकृतेः शार्ङ्गिणः ।
विस्फूर्जद्गलगर्जितर्जितककुम्मातङ्गदर्पोदयाः
संरम्भाः सुखयन्तु वः खरनखक्षुण्णद्विषद्वक्षसः ॥ १३

दैत्यानामधिपे नखाङ्कुरकुटीकोणप्रविष्टात्मनि
स्फारीभूतकरालकेसरसटासंघातघोराकृतेः ।
सक्रोधं च सविस्मयं च सगुरुव्रीडं च सान्तःस्मितं
क्रीडाकेसरिणो हरेर्विजयते तत्कालमालोकितम् ॥ १४

किं किं सिंहस्ततः किं नरसदृशवपुर्देव चित्रं गृहीतो
नैतादृक्कापि जीवोऽद्भुतमुपनय मे देव संप्राप्त एषः ।
चापं चापं न चापीत्यहहहहहहहा कर्कशत्वं नखानां
इत्थं दैत्येन्द्रवक्षः खरनखमुखरैर्जल्पितवान्यः स वोऽव्यात् ॥ १५

भूयः कण्ठावधूतिव्यतिकरतरलोत्तंसनक्षत्रमाला-
बालेन्दुक्षुद्रघण्टारणितदशदिशादन्तिचीत्कारकारी ।
अव्याद्वो दैत्यराजप्रथमयमपुरीयानघण्टानिनादो
नादो दिग्भित्तिभेदप्रसरसरभसः कूटकण्ठीरवस्य ॥ १६

अन्तःक्रोधोज्जिहानज्वलनभवशिखाकारजिह्वावलीढ
प्रौढब्रह्माण्डभाण्डः पृथुभुवनगुहागर्भगम्भीरनादः ।
दृप्यत्पारीन्द्रमूर्तिर्मुरजिदवतु वः सुप्रभामण्डलीभिः
कुर्वन्निर्धूमधूमध्वजनिचितमिव व्योम रोमच्छटानाम् ॥ १७

पायान्मायामृगेन्द्रो जगदखिलमसौ यत्तनूदर्चिरर्चिः
ज्वालाजालावलीढं बत भुवि सकलं व्याकुलं किं न भूयात् ।

न स्याच्चेदाशु तस्याधिकविकटसटाकोटिभिः पात्यमानात्
इन्दोरानन्दकन्दात्तदुपरि तुहिनासारसंदोहवृष्टिः ॥ १८

आदित्याः किं दशैते प्रलयभयकृतः स्वीकृताकाशदेशाः
किं वोल्कामण्डलानि त्रिभुवनदहनायोद्यतानीति भीतैः ।
पायासुर्नारसिंहं वपुरमरगणैर्बिभ्रतः शार्ङ्गपाणेः
दृष्टाद्दसासुरोरस्थलदरणगलद्रक्तरक्ता नखा वः ॥ १९

—*—

## अमृतसंजीवन धन्वन्तरि स्तोत्रम्

नमो नमो विश्वविभावनाय नमो नमो लोकसुखप्रदाय ।
नमो नमो विश्वसृजेश्वराय नमो नमो मुक्तिवरप्रदाय ॥ १

नमो नमस्तेऽखिललोकपाय नमो नमस्तेऽखिलकामदाय ।
नमो नमस्तेऽखिलकारणाय नमो नमस्तेऽखिलरक्षकाय ॥ २

नमो नमस्ते सकलार्तिहर्त्रे नमो नमस्ते विरुजः प्रकर्त्रे ।
नमो नमस्तेऽखिलविश्वधर्त्रे नमो नमस्तेऽखिललोकभर्त्रे ॥ ३

सृष्टं देव चराचरं जगदिदं ब्रह्मस्वरूपेण ते
सर्वं तत्परिपाल्यते जगदिदं विष्णुस्वरूपेण ते ।
विश्वं संह्रियते तदेव निखिलं रुद्रस्वरूपेण ते
संसिच्यामृतशीकरैर्हर महारिष्टं चिरं जीवय ॥ ४

यो धन्वन्तरिसंज्ञया निगदितः क्षीराब्धितो निःसृतो
हस्ताभ्यां जनजीवनाय कलशं पीयूषपूर्णं दधत् ।
आयुर्वेदमरीरचज्जनरुजां नाशाय स त्वं मुदा
संसिच्यामृतशीकरैर्हर महारिष्टं चिरं जीवय ॥ ५

स्त्रीरूपं वरभूषणाम्बरधरं त्रैलोक्यसंमोहनं
कृत्वा पाययति स्म यः सुरगणान्पीयूषमत्युत्तमम्।
चक्रे दैत्यगणान् सुधाविरहितान् संमोह्य स त्वं मुदा
संसिच्यामृतशीकरैर्हर महारिष्टं चिरं जीवय।। ६

चाक्षुषोदधिसंप्लाव भूवेदप झषाकृते।
सिंच सिंचामृतकणैः चिरं जीवय जीवय।। ७

पृष्ठमन्दरनिर्घूर्णनिद्राक्ष कमठाकृते।
सिंच सिंचामृतकणैः चिरं जीवय जीवय।। ८

धरोद्धार हिरण्याक्षघात क्रोडाकृते प्रभो।
सिंच सिंचामृतकणैः चिरं जीवय जीवय।। ९

भक्तत्रासविनाशात्तचण्डत्व नृहरे विभो।
सिंच सिंचामृतकणैः चिरं जीवय जीवय।। १०

याच्ञाच्छलबलित्रासमुक्तनिर्जर वामन।
सिंच सिंचामृतकणैः चिरं जीवय जीवय।। ११

क्षत्रियारण्यसंछेदकुठारकर रैणुक।
सिंच सिंचामृतकणैः चिरं जीवय जीवय।। १२

रक्षोराजप्रतापाब्धिशोषणाशुग राघव।
सिंच सिंचामृतकणैः चिरं जीवय जीवय।। १३

भूभरासुरसन्दोहकालाग्ने रुक्मिणीपते।
सिंच सिंचामृतकणैः चिरं जीवय जीवय।। १४

वेदमार्गरतानर्हविभ्रान्त्यै बुद्धरूपधृक्।
सिंच सिंचामृतकणैः चिरं जीवय जीवय।। १५

कलिवर्णाश्रमास्पष्टधर्मर्द्धयै कल्किरूपभाक्।
सिंच सिंचामृतकणैः चिरं जीवय जीवय।। १६

असाध्याः कष्टसाध्या ये महारोगा भयंकराः।
छिन्धि तानाशु चक्रेण चिरं जीवय जीवय।। १७

अल्पमृत्युं चापमृत्युं महोत्पातानुपद्रवान्।
भिन्धि भिन्धि गदाघातैः चिरं जीवय जीवय।। १८

अहं न जाने किमपि त्वदन्यत् समाश्रये नाथ पदाम्बुजं ते।
कुरुष्व तद्यन्मनसीप्सितं ते सुकर्मणा केन समक्षमीयाम्। १९

त्वमेव तातो जननी त्वमेव त्वमेव नाथश्च त्वमेव बन्धुः।
विद्याधनागारकुलं त्वमेव त्वमेव सर्वं मम देवदेव।। २०

न मेऽपराधं प्रविलोकय प्रभोऽपराधसिन्धोश्च दयानिधिस्त्वम्।
तातेन दुष्टोऽपि सुतः सुरक्ष्यते दयालुता तेऽवतु सर्वदाऽस्मान्।।

अहह विस्मर नाथ न मां सदा करुणया निजया परिपूरितः।
भुवि भवान् यदि मे नहि रक्षकः कथमहो मम जीवनमत्र वै।। २२

दह दह कृपया त्वं व्याधिजालं विशालं
हर हर करवालं चाल्पमृत्योः करालम्।
निजजनपरिपालं त्वां भजे भावयालं
कुरु कुरु बहुकालं जीवितं मे सदाऽलम्।। २३

क्लीं श्रीं क्लीं श्रीं नमो भगवते
जनार्दनाय सकलदुरितानि नाशय नाशय।
क्ष्रौं आरोग्यं कुरु करु। ह्रीं दीर्घमायुर्देहि स्वाहा।। २४

।। फलश्रुतिः ।।

अस्य धारणतो जापादल्पमृत्युः प्रशाम्यति ।
गर्भरक्षाकरं स्त्रीणां बालानां जीवनं परम् ।। २५

सर्वे रोगाः प्रशाम्यन्ति सर्वा बाधा प्रशाम्यति ।
कुदृष्टिजं भयं नश्येत् तथा प्रेतादिजं भयम् ।। २६

सुदर्शनसंहितोक्तं

—*—

## वामनस्तोत्रम्

अदितिरुवाच–
नमस्ते देवदेवेश सर्वव्यापिन् जनार्दन ।
सत्त्वादिगुणभेदेन लोकव्यापारकारिणे ।। १

नमस्ते बहुरूपाय अरूपाय नमो नमः ।
सर्वैकाद्भुतरूपाय निर्गुणाय गुणात्मने ।। २

नमस्ते लोकनाथाय परमज्ञानरूपिणे ।
सद्भक्तजनवात्सल्यशालिने मङ्गलात्मने ।। ३

यस्यावताररूपाणि ह्यर्चयन्ति मुनीश्वराः ।
तमादिपुरुषं देवं नमामीष्टार्थसिद्धये ।। ४

यं न जानन्ति श्रुतयो यं न जानन्ति सूरयः ।
तं नमामि जगद्धेतुं मायिनं तममायिनम् ।। ५

यस्यावलोकनं चित्रं मायोपद्रववारणम् ।
जगद्रूपं जगत्पालं तं वन्दे पद्मजाधवम् ।। ६

यो देवस्त्यक्तसङ्गानां शान्तानां करुणार्णवः ।
करोति ह्यात्मना सङ्गं तं वन्दे सङ्गवर्जितम् ।। ७

यत्पादाब्जजलक्लिन्नसेवारञ्जितमस्तकाः ।
अवापुः परमां सिद्धिं तं वन्दे सर्ववन्दितम् ।। ८

यज्ञेश्वरं यज्ञभुजं यज्ञकर्मसु निष्ठितम् ।
नमामि यज्ञफलदं यज्ञकर्मप्रबोधकम् ।। ९

अजामिलोऽपि पापात्मा यन्नामोच्चारणादनु ।
प्राप्तवान्परमं धाम तं वन्दे लोकसाक्षिणम् ।। १०

ब्रह्माद्या अपि ये देवा यन्मायापाशयन्त्रिताः ।
न जानन्ति परं भावं तं वन्दे सर्वनायकम् ।। ११

हृत्पद्मनिलयोऽज्ञानां दूरस्थ इव भाति यः ।
प्रमाणातीतसद्भावं तं वन्दे ज्ञानसाक्षिणम् ।। १२

यन्मुखाद्ब्राह्मणो जातो बाहुभ्यां क्षत्रियोऽजनि ।
तथैव ऊरुतो वैश्यः पद्भ्यां शूद्रो अजायत ।। १३

मनसश्चन्द्रमा जातो जातः सूर्यश्च चक्षुषः ।
मुखादिन्द्रस्तथाऽग्निश्च प्राणाद्वायुरजायत ।। १४

त्वमिन्द्रः पवनः सोमस्त्वमीशानस्त्वमन्तकः ।
त्वमग्निर्निर्ऋतिश्चैव वरुणस्त्वं दिवाकरः ।। १५

देवाश्च स्थावराश्चैव पिशाचाश्चैव राक्षसाः ।
गिरयः सिद्धगन्धर्वा नद्यो भूमिश्च सागराः ।। १६

त्वमेव जगतामीशो यन्नामास्ति परात्परः ।
त्वद्रूपमखिलं तस्मात्पुत्रान्मे पाहि श्रीहरे ।। १७

इति स्तुत्वा देवधात्री देवं नत्वा पुनः पुनः।
उवाच प्राञ्जलिर्भूत्वा हर्षाश्रुक्षालितस्तनी ॥ १८

अनुग्राह्यास्मि देवेश हरे सर्वादिकारण।
अकण्टकश्रियं देहि मत्सुतानां दिवौकसाम् ॥ १९

अन्तर्यामिञ्जगद्रूप सर्वभूतपरेश्वर।
तवाज्ञातं किमस्तीह किं मां मोहयसि प्रभो ॥ २०

तथापि तव वक्ष्यामि यन्मे मनसि वर्तते।
वृथापुत्रास्मि देवेश रक्षोभिः परिपीडिता ॥ २१

एतान्न हन्तुमिच्छामि मत्सुता दितिजा यतः।
तानहत्वा श्रियं देहि मत्सुतानामुवाच सा ॥ २२

इत्युक्तो देवदेवस्तु पुनः प्रीतिमुपागतः।
उवाच हर्षयन्साध्वीं कृपयाऽभिपरिप्लुतः ॥ २३

श्रीभगवानुवच–
प्रीतोऽस्मि देवि भद्रं ते भविष्यामि सुतस्तव।
यतः सपत्नीतनयेष्वपि वात्सल्यशालिनी ॥ २४

त्वया च मे कृतं स्तोत्रं पठन्ति भुवि मानवाः।
तेषां पुत्रा धनं संपन्न हीयन्ते कदाचन ॥ २५

अन्ते मत्पदमाप्नोति यद्विष्णोः परमं शुभम् ॥ २६

(पद्मपुराणतः)

—*—

## वामनस्तोत्रम्

अदितिरुवाच–

यज्ञेश यज्ञपुरुषाच्युत तीर्थपाद
तीर्थश्रवः श्रवणमङ्गलनामधेय।
आपन्नलोकवृजिनोपशमोदयाऽऽद्य
शं नः कृधीश भगवन्नसि दीननाथः ॥ १

विश्वाय विश्वभवनस्थितिसंयमाय
स्वैरं गृहीतपुरुशक्तिगुणाय भूम्ने।
स्वस्थाय शश्वदुपबृंहितपूर्णबोध-
व्यापादितात्मतमसे हरये नमस्ते ॥ २

आयुः परं वपुरभीष्टमतुल्यलक्ष्मीः
द्यौर्भूरसाः सकलयोगगुणास्त्रिवर्गः।
ज्ञानं च केवलमनन्त भवन्ति दृष्टात्-
त्वत्तो नृणां किमु सपत्नजयादिराशीः ॥ ३

श्रीमद्भागवततः

—*—

## वामनस्तुतिः

अव्याद्वो वामनो यस्य कौस्तुभप्रतिबिम्बिता।
कौतुकालोकिनी जाता जाठरीव जगत्त्रयी॥ १

अङ्घ्रिदण्डो हरेरूर्ध्वमुत्क्षिप्तो बलिनिग्रहे।
विधिविष्टरपद्मस्य नालदण्डो मुदेऽस्तु नः ॥ २

खर्वग्रन्थिविमुक्तसंधिविलसद्वक्षःस्फुरत्कौस्तुभं
निर्यन्नाभिसरोजकुड्मलपुटीगम्भीरसामध्वनि।
पात्रावाप्तिसमुत्सुकेन बलिना सानन्दमालोकितं
पायाद्वः क्रमवर्धमानमहिमाश्चर्यं मुरारेर्वपुः ॥ ३

हस्ते शस्त्रकिणाङ्कितोऽरुणविभाकिर्मीरितोरःस्थलो
नाभिप्रेङ्खदलिर्विलोचनयुगप्रोद्भूतशीतातपः।
बाहूर्मिश्रितवह्निरेष तदिति व्याक्षिप्य वाक्यं कवेः
तारैरध्ययनैर्हरन्बलिमनः पायाज्जगद्वामनः ॥ ४

स्वस्ति स्वागतमर्थ्यहं वद विभो किं दीयतां मेदिनी
का मात्रा मम विक्रमत्रयपदं दत्तं जलं दीयताम्।
मा देहीत्युशनाब्रवीद्धरिरयं पात्रं किमस्मात्परं
चेत्येवं बलिनार्चितो मखमुखे पायात्स वो वामनः ॥ ५

स्वामी सन्भुवनत्रयस्य विकृतिं नीतोऽसि किं याच्ञया
यद्वा विश्वसृजा त्वयैव न कृतं तद्दीयतां ते कुतः।
दानं श्रेष्ठतमाय तुभ्यमतुलं बन्धाय नो मुक्तये
विज्ञप्तो बलिना निरुत्तरतया ह्रीतो हरिः पातु वः ॥ ६

ब्रह्माण्डच्छत्रदण्डः शतधृतिभवनाम्भोरुहो नालदण्डः
क्षोणीनौकूपदण्डः क्षरदमरसरित्पट्टिकाकेतुदण्डः।
ज्योतिश्चक्राक्षदण्डस्त्रिभुवनविजयस्तम्भदण्डोऽङ्घ्रिदण्डः
श्रेयस्त्रैविक्रमस्ते वितरतु विबुधद्वेषिणां कालदण्डः ॥ ७

यस्मादाक्रामतो द्यां गरुडमणिशिलाकेतुदण्डायमानात्
आश्च्योतन्त्याबभासे सुरसरिदमला वैजयन्तीव कान्ता।
भूमिष्ठो यस्तथान्यो भुवनगृहमहास्तम्भशोभां दधानः
पातामेतौ पयोजोदरललिततलौ पङ्कजाक्षस्य पादौ ॥ ८

कस्त्वं ब्रह्मन्नपूर्वः क च तव वसतिर्याखिला ब्रह्मसृष्टिः
कस्ते नाथो ह्यनाथः क स तव जनको नैव तातं स्मरामि।
किं तेऽभीष्टं ददामि त्रिपदपरिमिता भूमिरल्पं किमेतत्
त्रैलोक्यं भावगर्भं बलिमिदमवदद्वामनो वः स पायात्॥ ९

—*—

## परशुरामस्तुतिः

कुलाचला यस्य महीं द्विजेभ्यः प्रयच्छतः सीमदृषत्त्वमापुः।
बभूवुरुत्सर्गजलं समुद्राः स रैणुकेयः श्रियमातनोतु॥ १

किं दोर्भ्यां किमु कार्मुकोपनिषदा भर्गप्रसादेन किं
किं वेदाधिगमेन भास्वति भृगोर्वंशे च किं जन्मना।
किं दानेन ममाद्भुतेन तपसा पीडां कृतान्तोऽपि चेत्
विप्राणां कुरुतेऽन्तरित्यनुशयो रामस्य पुष्णातु वः॥ २

नाशिष्यः किमभूद्भवः किमभवन्नापुत्रिणी रेणुका
नाभूद्विश्वमकार्मुकं किमिति वः प्रीणातु रामत्रपा।
विप्राणां प्रतिमन्दिरं मणिगणोन्मिश्राणि दण्डाहते-
नाब्धीनां स मया यमोऽपि महिषेणाम्भांसि नोद्वाहितः॥ ३

पायाद्वो जमदग्निवंशतिलको वीरव्रतालङ्कृतो
रामो नाम मुनीश्वरो नृपवधे भास्वत्कुठारायुधः।
येनाशेषहताहिताङ्गरुधिरैः संतर्पिताः पूर्वजाः
भक्त्या चाश्वमखे समुद्रवसना भूर्हन्तकारीकृता॥ ४

द्वारे कल्पतरुं गृहे सुरगवीं चिन्तामणीनङ्गदे
पीयूषं सरसीषु विप्रवदने विद्याश्चतस्रो दश।

एवं कर्तुमयं तपस्यति भृगोर्वंशावतंसो मुनिः
पायाद्वोऽखिलराजकक्षयकरो भूदेवभूषामणिः ॥ ५

नो संध्यां समुपासते यदि तदा लोकापवादाद्भयं
सा चेत्स्वीक्रियते भविष्यति तदा राजन्यबीजे नतिः ।
इत्थं चिन्तयतश्चिरं भृगुपतेर्निश्वासकोष्णीकृतो
नेत्रान्तःप्रतिबिम्बशोणसलिलः संध्याञ्जलिः पातु वः ॥ ६

—*—

## श्रीरामप्रातःस्मरणम्

प्रातः स्मरामि रघुनाथमुखारविन्दं
मन्दस्मितं मधुरभाषि विशालभालम् ।
कर्णावलम्बिचलकुण्डलशोभिगण्डं
कर्णांतदीर्घनयनं नयनाभिरामम् ॥ १

प्रातर्भजामि रघुनाथकरारविन्दं
रक्षोगणाय भयदं वरदं निजेभ्यः ।
यद्राजसंसदि विभज्य महेशचापं
सीताकरग्रहणमङ्गलमाप सद्यः ॥ २

प्रातर्नमामि रघुनाथपदारविन्दं
पद्माङ्कुशादिशुभरेखि सुखावहं मे ।
योगीन्द्रमानसमधुव्रतसेव्यमानं
शापापहं सपदि गौतमधर्मपत्न्याः ॥ ३

प्रातर्वदामि वचसा रघुनाथनाम
वाग्दोषहारि सकलं शमलं करोति ।

यत्पार्वती स्वपतिना सह भोक्तुकामा
प्रीत्या सहस्रहरिनामसमं जजाप ॥ ४

प्रातः श्रये श्रुतिनुतां रघुनाथमूर्तिं
नीलाम्बुजोत्पलसितेतररत्ननीलाम्।
आमुक्तमौक्तिकविशेषविभूषणाढ्यां
ध्येयां समस्तमुनिभिर्जनमुक्तिहेतुम् ॥ ५

यः श्लोकपञ्चकमिदं प्रयतः पठेत्तु
नित्यं प्रभातसमये पुरुषः प्रबुद्धः ।
श्रीरामकिङ्करजनेषु स एव मुख्यो
भूत्वा प्रयाति हरिलोकमनन्यलभ्यम् ॥ ६

—*—

श्रीवेदान्तदेशिककृतम्

## रघुवीरगद्यम्

जयत्याश्रित सन्त्रास ध्वान्त विध्वंसनोदयः ।
प्रभावान् सीतया देव्या परम-व्योम भास्करः ॥

जय जय महावीर ! महाधीर धौरेय ! देवासुरसमरसमय समुदित निखिल निर्जर निर्धारित निरवधिक माहात्म्य ! दशवदन दमित दैवत परिषदभ्यर्थित दाशरथिभाव ! दिनकर कुल कमल दिवाकर ! दिविषदधिपतिरण सहचरण चतुर दशरथ चरम ऋण विमोचन ! कोसल - सुता कुमारभाव कञ्चुकित कारणाकार ! कौमार केलि गोपायित कौशिकाध्वर ! रणाध्वर धुर्य भव्य दिव्यास्त्र बृन्द वन्दित ! प्रणत जन विमत विमथन दुर्ललित दोर्ललित !

तनुतरविशिख विताडन विशरारुशरारुताटका ताटकेय ! जड- किरण शकल धर जटिल नट पतिमकुट नटनपटु विबुध सरिदति बहुलमधु गलन ललित

पदनलिन रज उपमृदित निजवृजिन जहदुपल तनुरुचिर परममुनिवर - युवति नुत ! कुशिक-सुत कथित विदित नव विविध कथ ! मैथिल नगरी सुलोचना लोचन चकोर चन्द्र ! खण्डपरशुकोदण्डप्रकाण्ड खण्डन शौण्ड भुजदण्ड ! चण्डकर किरण-मण्डल बोधित पुण्डरीकवनरुचिलुण्टाक-लोचन ! मोचित जनक हृदय शङ्कातङ्क ! परिहृतनिखिल नरपतिवरण जनक दुहितृ कुच तट विहरणसमुचित करतल ! शतकोटि शतगुण कठिन परशुधरमुनिवर कर धृत दुरवनमतम-निज धनुराकर्षण प्रकाशित पारमेष्ठ्य!

क्रतु-हर शिखरि कन्दुक विहृतिमुख जगदरुन्तुदजित हरिदन्त दन्तुरोदन्त दश - वदन दमन कुशल दश-शत-भुज नृपति कुल - रुधिर झर भरित पृथुतर तटाकतर्पित पितृक भृगु-पति सुगति विहति कर नत परुडिषु परिघ !

अनृत भय मुषित हृदय पितृवचन पालन प्रतिज्ञावज्ञात यौवराज्य !

निषाद राजसौहृद सूचित सौशील्य सागर ! भरद्वाजशासन परिगृहीत विचित्र चित्रकूट गिरिकटकतटरम्यावसथ ! अनन्य शासनीय ! प्रणतभरतमकुट तट सुघटित पादुकाग्र्याभिषेक निर्वर्तित सर्वलोक योगक्षेम !

पिशित रुचि विहित दुरित वल-मथन तनय बलिभुगनुगति सरभस शयन तृण शकल परिपतन भय चकित सकल सुर मुनिवर बहुमत महास्त्र सामर्थ्य !

द्रुहिण हरवल-मथन दुरालक्ष्य शर लक्ष्य ! दण्डका तपोवन जङ्गम पारिजात ! विराध हरिण शार्दूल ! विलुलित बहुफल मख कलम रजनि-चर मृग मृगयारम्भ संभृत चीरभृदनुरोध !

त्रिशिरः शिरस्त्रितयतिमिर निरास-वासर-कर ! दूषण जलनिधि शोषण तोषित ऋषि-गण घोषित विजय घोषण ! खरतर खर तरुखण्डन चण्ड

पवन ! द्विसप्त रक्षः संहस्र नल-वन विलोलन महा-कलभ ! असहाय शूर ! अनपाय साहस ! महित महा-मृग दर्शन मुदित मैथिली दृढ-तर परिरम्भण विभव विरोपित विकटवीर व्रण ! मारीच माया मृग चर्म परिकर्मित निर्भर दर्भास्तरण ! विक्रम यशोलाभ विक्रीत जीवित गृध्र-राज देह दिधक्षा लक्षित भक्त-जन दाक्षिण्य ! कल्पित विबुध-भाव कबन्धाभिनन्दित !

अवन्ध्य महिम मुनिजन भजन मुषित हृदय कलुष शबरी मोक्ष साक्षीभूत! प्रभञ्जन-तनय भावुक भाषित रञ्जितहृदय ! तरणि-सुत शरणागति परतन्त्रीकृत स्वातन्त्र्य ! दृढ घटित कैलास कोटि विकट दुन्दुभि कङ्काल कूट दूर विक्षेप दक्ष दक्षिणेतर पादाङ्गुष्ठ दर चलन विश्वस्त सुहृदाशय ! अति पृथुल बहु विटपि गिरि धरणि विवर युगपदुदय विवृत चित्र पुङ्ख वैचित्र्य ! विपुल भुज शैल मूल निबिड निपीडित रावण रणरणक जनक चतुरुदधि विहरण चतुर कपि-कुल पति हृदय विशालशिलातल दारण दारुण शिलीमुख !

अपार पारावार परिखा परिवृत परपुर परिसृत दव दहन जवन पवन-भव कपिवर परिष्वङ्ग भावित सर्वस्वदान ! अहित सहोदर रक्षः परिग्रह विसंवादि विविध सचिव विप्रलम्भ समय संरम्भ समुज्जृम्भित सर्वेश्वर भाव ! सकृत्प्रपन्न जन संरक्षण दीक्षित ! वीर !

सत्यव्रत ! प्रतिशयन भूमिका भूषित पयोधिपुलिन ! प्रलय शिखिपरुष विशिख शिखा शोषिताकूपार वारि पूर ! प्रबल रिपु कलह कुतुक चटुल कपि - कुलकर-तल तुलित हृत गिरिनिकर साधित सेतु-पथ सीमा सीमन्तित समुद्र ! द्रुत गति तरु मृग वरूथिनी निरुद्ध लङ्कावरोध वेपथु लास्य लीलोपदेश देशिक धनुर्ज्याघोष ! गगन - चर - कनक - गिरि गरिम-धर निगम-मय निज-गरुड गरुदनिल लव गलित विष-वदन शर

कदन ! अकृत चर वनचर रण करण वैलक्ष्य कूणिताक्ष बहुविध रक्षो बलाध्यक्ष वक्षः कवाट पाटन पटिम साटोप कोपावलेप ! कटुरटद् अटनि टङ्कृति चटुल कठोर कार्मुक ! विशङ्कट विशिख विताडन विघटित मकुट विह्वल विश्रवस्तनय विश्रम समय विश्राणन विख्यात विक्रम ! कुम्भकर्ण कुल गिरि विदलन दम्भोलि भूत निःशङ्ककङ्कपत्र !

अभिचरण हुतवह परिचरण विघटन सरभसपरिपतदपरिमित कपिबल जलधिलहरि कलकलरव कुपित मघवजिदभिहनन कृदनुज साक्षिकराक्षस द्वन्द्व-युद्ध ! अप्रतिद्वन्द्व पौरुष ! त्र्यम्बक समधिक घोरास्त्राडम्बर ! सारथि हृत रथ सत्रप शात्रव सत्यापित प्रताप !

शित शर कृत लवन दशमुख मुख दशक निपतन पुनरुदय दरगलित जनित दर तरल हरि-हय नयन नलिन-वन रुचिखचित निपतित सुर-तरु कुसुम वितति सुरभित रथ पथ !

अखिल जगदधिक भुज बल वर बल दश-लपन लपन दशक लवन जनित कदन परवश रजनि-चर युवति विलपन वचन समविषय निगम शिखर निकर मुखर मुख मुनिवर परिपणित ! अभिगत शतमख हुतवह पितृपति निर्ऋति वरुण पवन धनद गिरिश प्रमुख सुरपति नुति मुदित ! अमित मति विधिविदित कथित निज विभव जलधि पृषत लव ! विगतभय विबुध विबोधित वीरशयन शायित वानर पृतनौघ ! स्व समय विघटित सुघटित सहृदय सहधर्मचारिणीक !

विभीषण वशंवदीकृतलङ्कैश्वर्य ! निष्पन्न कृत्य ! खपुष्पितरिपुपक्ष ! पुष्पक रभस गति गोष्पदी-कृत गगनार्णव ! प्रतिज्ञार्णव तरण कृत क्षण भरत मनोरथ संहित सिंहासनाधिरूढ ! स्वामिन् ! राघवसिंह ! हाटकगिरि कटकलडह पादपीठ निकट तट परिलुठित निखिल नृपति किरीट कोटि विध मणिगण किरण निकर नीराजित चरण राजीव ! दिव्य

भौमायोध्याधिदैवत ! पितृवध कुपित परशु-धर मुनि विहित नृपहनन कदन पूर्वकालप्रभव शत गुण प्रतिष्ठापित धार्मिक राजवंश !

शुभ चरित रत भरत खर्वित गर्वगन्धर्व यूथ गीत विजय गाथा शत ! शासित मधु-सुत शत्रुघ्न सेवित ! कुश लव परिगृहीत कुल गाथा विशेष ! विधि वश परिणमदमर भणितिकविवर रचित निज चरित निबन्धन निशमन निर्वृत ! सर्वजन सम्मानित ! पुनरुपस्थापित विमान वर विश्राणन प्रीणित वैश्रवण विश्रावित यशः प्रपञ्च ! पञ्चतापन्न मुनि कुमार सञ्जीवनामृत ! त्रेतायुग प्रवर्तित कार्तयुग वृतान्त ! अविकल बहु सुवर्ण हय - मखसहस्रनिर्वहण निर्वर्तित निज वर्णाश्रम धर्म ! सर्वकर्म समाराध्य सनातन धर्म ! साकेत जनपद जनि धनिक जङ्गम तदितर जन्तुजात दिव्यगति दान दर्शित नित्य निस्सीम वैभव ! भव तपन तापित भक्तजन भद्राराम ! श्रीरामभद्र ! नमस्ते पुनस्ते नमः ।।

चतुर्मुखेश्वरमुखैः पुत्र पौत्रादि शालिने ।
नमः सीतासमेताय रामाय गृह मेधिने ।।

कविकथक सिंहकथितं कठोर सुकुमार गुम्भ गम्भीरम् ।
भवभय भेषजमेतत् पठत महावीरवैभवं सुधियः ।।

—*—

## राघवाष्टकम्

राघवं करुणाकरं मुनिसेवितं सुखवन्दितं
जानकीवदनारविन्ददिवाकरं गुणभाजनम् ।
वालिसूनु भृदीक्षणं हनुमत्प्रियं कमलेक्षणं
यातुधानभयङ्करं प्रणमामि राघवकुञ्जरम् ।। १

राम राम नमोऽस्तु ते जय रामभद्र नमोऽस्तु ते
 रामचन्द्र नमोऽस्तु ते जय राघवाय नमोऽस्तु ते।
देवदेव नमोऽस्तु ते जय देवराज नमोऽस्तु ते
 वासुदेव नमोऽस्तु ते जय वीरराज नमोऽस्तुते ॥ २

*अयं श्लोकः प्रतिश्लोकान्ते आवर्तनीयः ।*

मैथिलीकुचभूषणामलनीलमौक्तिकमीश्वरं
 रावणानुजपालनं रघुपुङ्गवं मम दैवतम्।
मेदिनीतनयामुखाम्बुज बोधकारिदिवाकरं
 सूर्यवंशविवर्धनं प्रणमामि राघवकुञ्जरम् ॥ ३

राम राम नमोऽस्तु ते

हेमकुण्डलमण्डितामल गण्डदेशमरिन्दमं
 शातकुम्भमयूरनेत्र विभूषणेन विभूषितम्।
चारुनूपुरहारकौस्तुभ कर्णभूषणभूषितं
 भानुवंशविवर्धनं प्रणमामि राघवकुञ्जरम् ॥ ४

राम राम नमोऽस्तु ते

दण्डकाख्यवने रतं सुरसिद्धयोगिगणाश्रयं
 शिष्टपालनतत्परं धृतिशालिवालिकृतस्तुतिम्।
कुम्भकर्णभुजाभुजङ्ग विकर्तने सुविशारदं
 लक्ष्मणानुजवत्सलं प्रणमामि राघवकुञ्जरम् ॥ ५

राम राम नमोऽस्तु ते

केतकीकरवीरजातिसुगन्धमाल्यसुशोभितं
 श्रीधरं मिथिलात्मजाकुचकुङ्कुमारुणवक्षसम्।
देवदेवमशेषभूतमनोहरं जगतां पतिं
 दासभूतजनावनं प्रणमामि राघवकुञ्जरम् ॥ ६ राम राम नमोऽस्तुते।

यागदानसमाधिहोमजपादिकर्मकरैर्द्विजैः
वेदपारगतैरहर्निशमादरेण सुपूर्जितम्।
ताटकावधधीरमङ्गदनाथवालिनिषूदनं
पैतृकोदितपालकं प्रणमामि राघवकुञ्जरम्॥ ७

राम राम नमोऽस्तु ते।

लीलया खरदूषणादि निशाचरासुविनाशनं
रावणान्तकमच्युतं हरियूथकोटि समावृतम्।
नीरजाननमम्बुजांघ्रियुगं हरिं भुवनाश्रयं
देवकार्यविचक्षणं प्रणमामि राघवकुञ्जरम्। ८

राम राम नमोऽस्तु ते।

कौशिकेन सुशिक्षितास्त्रकलापमायतलोचनं
चारुहास मनाथबन्धुमशेषलोकनिवासिनम्।
वासवादिसुरारिरावणशासनं च परां गतिं
नीलमेघनिभाकृतिं प्रणमामि राघवकुञ्जरम्॥ ९

राम राम नमोऽस्तु ते।

राघवाष्टकमिष्टसिद्धिदमच्युतालय साधकं
भुक्तिमुक्तिफलप्रदं धनधान्यपुत्रविवर्धनम्।
रामचन्द्रकृपाकटाक्षदमादरेण सदा पठेत्
रामचन्द्र पदाम्बुजद्वयसन्ततर्पितमानसः॥ १०

राम राम नमोऽस्तु ते।

—*—

## रामचन्द्रस्तुतिः

वन्दामहे महेशानचण्डकोदण्डखण्डनम्।
जानकीहृदयानन्दचन्दनं रघुनन्दनम्॥ १

नमो रामपदाम्भोजं रेणवो यत्र सन्ततम्।
कुर्वन्ति कुमुदप्रीतिमरण्यगृहमेधिनः ॥ २

स्वर्णैणाजिनशयनो योजितनयनो दशास्यदिग्भागे।
मुहुरवलोकितचापः कोऽपि दुरापः स नीलिमा शरणम्॥ ३

अधिपञ्चवटीकुटीरवर्तिस्फुटितेन्दीवरसुन्दरोरुमूर्तिः।
अपि लक्ष्मणलोचनैकसख्यं भजत ब्रह्म सरोरुहायताक्षम्॥ ४

कनकनिकषभासा सीतयाऽऽलिङ्गिताङ्गो
नवकुवलयदामश्यामवर्णाभिरामः।
अभिनव इव विद्युन्मण्डितो मेघखण्डः
शमयतु मम तापं सर्वतो रामचन्द्रः ॥ ५

परिणयविधौ भङ्क्त्वानङ्गद्विषो धनुरग्रतो
जनकसुतया दत्तां कण्ठे स्रजं हृदि धारयन्।
कुसुमधनुषा पाशेनेव प्रसह्य वशीकृतो
ऽवनतवदनो रामः पायात्त्रपाविनयान्वितः ॥ ६

रामो राजमणिः सदा विजयते, रामं रमेशं भजे;
रामेणाभिहता निशाचरचमूः, रामाय तस्मै नमः।
रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहं
रामे चित्तलयः सदा भवतु मे भो राम मामुद्धर॥ ७

यो रामो न जघान वक्षसि रणे तं रावणं सायकैः
हृद्यस्य प्रतिवासरं वसति सा तस्या ह्यहं राघवः ।
मय्यास्ते भुवनावली परिवृता द्वीपैः समं सप्तभिः
स श्रेयो विदधातु नस्त्रिभुवनत्राणैकचिन्तापरः ॥ ८

राज्यं येन पटान्तलग्नतृणवत्त्यक्तं गुरोराज्ञया
पाथेयं परिगृह्य कार्मुकवरं घोरं वनं प्रस्थितः ।
स्वाधीनः शशिमौलिचापविषये प्राप्तो न वै विक्रियां
पायाद्वः स विभीषणाग्रजनिहा रामाभिधानो हरिः ॥ ९

कारुण्यामृतनीरमाश्रितजनश्रीचातकानन्ददं
शार्ङ्गाखिण्डलचापमम्बुजभवाग्नीन्द्रादिबर्हीष्टदम् ।
चारुस्मेरमुखोल्लसज्जनकजासौदामिनीशोभितं
श्रीरामाम्बुदमाश्रयेऽखिलजगत्संसारतापापहम् ॥ १०

कूर्मो मूलवदालवालवदपांराशिर्लतावद्दिशो
मेघाः पल्लववत्प्रसूनफलवन्नक्षत्रसूर्येन्दवः ।
स्वामिन्व्योमतरुः क्रमे मम कियाञ्छ्रुत्वेति गां मारुतेः
सीतान्वेषणमादिशन्दिशतु वो रामः सलज्जः श्रियम् ॥ ११

एतौ द्वौ दशकण्ठकण्ठकदलीकान्तारकान्तिच्छिदौ
वैदेहीकुचकुम्भकुङ्कुमरजः सान्द्रारुणाङ्काङ्कितौ ।
लोकत्राणविधानसाधुसवनप्रारम्भयूपौ भुजौ
देयास्तामुरुविक्रमौ रघुपतेः श्रेयांसि भूयांसि वः ॥ १२

बालक्रीडनमिन्दुशेखरधनुर्भङ्गावधि प्रह्वता
ताते काननसेवनावधि कृपा सुग्रीवसख्यावधि ।
आज्ञा वारिधिबन्धनावधि यशो लङ्केशनाशावधि
श्रीरामस्य पुनातु लोकवशता जानक्युपेक्षावधि ॥ १३

कल्याणानां निधानं कलिमलमथनं पावनं पावनानां
पाथेयं यन्मुमुक्षोः सपदि परपदप्राप्तये प्रस्थितस्य ।
विश्रामस्थानमेकं कविवरवचसां जीवनं सज्जनानां
बीजं धर्मद्रुमस्य प्रभवतु भवतां भूतये रामनाम ॥ १४

कल्याणोल्लाससीमा कलयतु कुशलं कालमेघाभिरामा
काचित्साकेतधामा भवगहनगतिक्लान्तिहारिप्रणामा ।
सौन्दर्यह्रीणकामा धृतजनकसुतासादरापाङ्गधामा
दिक्षु प्रख्यातभूमा दिविषदभिनुता देवता रामनामा ॥ १५

योऽद्धा योद्धावधीत्तान्सपदि पलभुजः संपराये परा ये
येनायेनाश्रितानां स्तुतिरवनमितेशानचापेन चापे ।
लङ्कालङ्कारहर्ता ककुभि ककुभि यः कान्तया सीतयासीत्
ऊनो दूनोऽथ हृष्टः स विभुरवतु वः स्वःसभार्यः सभार्यः ॥ १६

ऋक्षाणां भूरिधाम्नां श्रितमधिपतिना प्रस्फुरद्भीमतारं
स्फारं नेत्रानलेन प्रसभनियमितोच्चापमीनध्वजेन ।
रामायत्तं पुरारेः कुमुदशुचि लसन्नीलसुग्रीवमङ्गं
प्लावङ्गं वापि सैन्यं दशवदनशिरश्छेदहेतु श्रियेऽस्तु ॥ १७

यस्तीर्थानामुपास्त्या गलितमलभरं मन्यते स्म स्वमेवं
नाज्ञासीज्जज्ञिरे यन्ममचरणरजःपादपूतान्यमूनि ।
पादस्पर्शेन कुर्वञ्झटिति विघटितग्रावभावामहल्यां
कौसल्यासूनुरूनं व्यपनयतु स वः श्रेयसा च श्रिया च ॥ १८

ध्यायेदाजानु बाहुं धृतशरधनुषं बद्धपद्मासनस्थं
पीतं वासो वसानं नवकमलरुचा स्पर्धिनेत्रं प्रसन्नम् ।
वामाङ्कारूढ सीतामुखकमल मिलल्लोचनं नीरदाभं
नानालङ्कार दीप्तं दधतमुरुजटामण्डलं रामचन्द्रम् ॥ १९

—*—

शिवकृतं

# श्रीरामचन्द्राष्टकम्

सुग्रीवमित्रं परमं पवित्रं सीताकलत्रं नवमेघगात्रम्।
कारुण्यपात्रं शतपत्रनेत्रं श्रीरामचन्द्रं सततं नमामि॥ १

संसारपारं निगमप्रचारं धर्मावतारं हृतभूमिभारम्।
सदाऽविकारं सुखसिन्धुसारं श्रीरामचन्द्रं सततं नमामि॥ २

लक्ष्मीविलासं जगतां निवासं लङ्काविनाशं भुवनप्रकाशम्।
भूदेववासं शरदिन्दुहासं श्रीरामचन्द्रं सततं नमामि॥ ३

मन्दारमालं वचने रसालं गुणैर्विशालं हतसप्ततालम्।
क्रव्यादकालं सुरलोकपालं श्रीरामचन्द्रं सततं नमामि॥ ४

वेदान्तगानं सकलैः समानं हृतारिमानं त्रिदशप्रधानम्।
गजेन्द्रयानं विगतावसानं श्रीरामचन्द्रं सततं नमामि॥ ५

श्यामाभिरामं नयनाभिरामं गुणाभिरामं वचनाभिरामम्।
विश्वप्रणामं कृतभक्तकामं श्रीरामचन्द्रं सततं नमामि॥ ६

लीलाशरीरं रणरङ्गधीरं विश्वैकसारं रघुवंशहारम्।
गम्भीरनादं जितसर्ववादं श्रीरामचन्द्रं सततं नमामि॥ ७

खले कृतान्तं स्वजने विनीतं सामोपगीतं मनसा प्रतीतम्।
रागेण गीतं वचनादतीतं श्रीरामचन्द्रं सततं नमामि॥ ८

श्रीरामचन्द्रस्य वराष्टकं तं मयेरितं देवि मनोहरं ये।
पठन्ति शृण्वन्ति गृणन्ति भक्त्या ते स्वीयकामान्प्रलभन्ति नित्यम्॥ ९

—*—

अमरदासकृतम्

# रामचन्द्राष्टकम्

ओं चिदाकारो धाता परमसुखदा पावनतनुः
मुनीन्द्रैर्योगीन्द्रैर्यतिपतिसुरेन्द्रैर्हनुमता।
सदा सेव्यः पूर्णो जनकतनयाङ्गः सुरगुरुः
रमानाथो रामो रमतु मम चित्ते तु सततम्॥ १

मुकुन्दो गोविन्दो जनकतनयालालितपदः
पदं प्राप्ता यस्याधमकुलभवा चापि शबरी।
गिराऽतीतोऽगम्यो विमलधिषणैर्वेदवचसा
रमानाथो रामो रमतु मम चित्ते तु सततम्॥ २

धराधीशोऽधीशः सुरनरवराणां रघुपतिः
किरीटी केयूरी कनककपिशः शोभितवपुः।
समासीनः पीठे रविशतनिभे शान्तमनसो
रमानाथो रामो रमतु मम चित्ते तु सततम्॥ ३

वरेण्यः शारण्यः कपिपतिसखा शान्तविधुरो
ललाटेकाश्मीरो रुचिरगतिभङ्गः शशिमुखः।
नराकारो रामो यतिपतिनुतः संसृतिहरो
रमानाथो रामो रमतु मम चित्ते तु सततम्॥ ४

विरूपाक्षः काश्यामुपदिशति यन्नाम शिवदं
सहस्रं यन्नाम्नां पठति गिरिजा प्रत्युषसि वै।
कलौ के गायंतीश्वरविधिमुखा यस्य चरितं
रमानाथो रामो रमतु मम चित्ते तु सततम्॥ ५

परो धीरोऽधीरोऽसुरकुलभवश्चासुरहरः
परात्मा सर्वज्ञो नरसुरगणैर्गीतसुयशाः ।
अहल्याशापघ्नः शरकर अजः कौशिकसखा
रमानाथो रामो रमतु मम चित्ते तु सततम् ॥ ६

हृषीकेशः शौरिर्धरणिधरशायी मधुरिपुः
उपेन्द्रो वैकुण्ठो गजरिपुहरस्तुष्टमनसः ।
बलिध्वंसी वीरो दशरथसुतो नीतिनिपुणो
रमानाथो रामो रमतु मम चित्ते तु सततम् ॥ ७

कविः सौमित्रीड्यः कपटमृगघाती वनचरो
रणश्लाघी दान्तो धरणिभरहर्ता सुरनुतः ।
अमानी मानज्ञो निखिलजनपूज्यो हृदिशयो
रमानाथो रामो रमतु मम चित्ते तु सततम् ॥ ८

इदं रामस्तोत्रं वरममरदासेन रचितं
उषःकाले भक्त्या यदि पठति यो भावसहितम् ।
मनुष्यः स क्षिप्रं जनिमृतिभयं तापजनकं
परित्यज्य श्रेष्ठं रघुपतिपदं याति शिवदम् ॥ ९

—*—

श्री वेदान्तदेशिककृतं

# श्रीरामपादुकास्तोत्रम्

सन्तः श्रीरङ्ग-पृथ्वीश-चरणत्राण-शेखराः ।
जयन्ति भुवन-त्राण पदपङ्कज-रेणवः ॥ १

वन्दे विष्णुपदासक्तं तमृषिं तां च पादुकाम् ।
यथार्था शठजित्संज्ञा मच्चित्तविजयाद्ययोः ॥ २

वन्दे तद्रङ्गनाथस्य मान्यं पादुकयोर्युगम्।
उन्नतानामवनतिः नतानां यत्र चोन्नतिः ॥ ३

भजामः पादुके याभ्यां भरतस्याग्रजस्तदा।
प्रायः प्रति-प्रयाणाय प्रास्थानिकमकल्पयत्॥ ४

प्रशस्ते राम-पादाभ्यां पादुके पर्युपास्महे।
आनृशंस्यं ययोरासीत् आश्रितेष्वनवग्रहम्॥ ५

अधीष्टे पादुका सा मे यस्याः साकेत-वासिभिः।
अन्वय-व्यतिरेकाभ्यां अन्वमीयत वैभवम्॥ ६

पाहि नः पादुके यस्याः विधास्यन्नभिषेचनम्।
आभिषेचनिकं भाण्डं चक्रे रामः प्रदक्षिणम्॥ ७

अभिषेकोत्सवात् तस्मात् यस्या निर्यातनोत्सवः।
अत्यरिच्यत तां वन्दे भव्यां भरत-देवताम्॥ ८

नमस्ते पादुके ! पुंसां संसारार्णव-सेतवे।
पदारोहस्य वेदान्ताः वन्दि-वैतालिकाः स्वयम्॥ ९

शौरेः शृङ्गार-चेष्टानां प्रसूतिं पादुकां भजे।
यामेष भुङ्क्ते शुद्धान्तात् पूर्वं पश्चादपि प्रभुः ॥ १०

अग्रतस्ते गमिष्यामि मृद्नन्ती कुश-कण्टकान्।
इति सीताऽपि यद्वृत्तिं इयेष प्रणमामि ताम्॥ ११

शौरेः सञ्चारकालेषु पुष्पवृष्टिर्दिवश्च्युता।
पर्यवस्यति यत्रैव प्रपद्ये तां पदावनीम्॥ १२

पान्तु वः पद्मनाभस्य पादुका-केलिपांसवः।
अहल्या-देह-निर्माण-पर्याय परमाणवः ॥ १३

श्रुतीनां भूषणानां ते शङ्के रङ्गेन्द्र-पादुके।
मिथः सङ्घर्ष-सञ्जातं रजः किमपि शिञ्जितम्॥ १४

उदर्चिषस्ते रङ्गेन्द्र-पदावनि ! बहिर्मणीन्।
अन्तर्मणिरवं श्रुत्वा मन्ये रोमाञ्चिताकृतीन्॥ १५

मुख-बाहूरू-पादेभ्यो वर्णान् सृष्टवतः प्रभोः।
प्रपद्ये पादुकां रत्नैः व्यक्त-वर्ण-व्यवस्थितिम्॥ १६

प्रपद्ये रङ्गनाथस्य पादुकां पद्मरागिणीम्।
पदेक-नियतां तस्य पद्मवासामिवापराम्॥ १७

बद्धानां यत्र नित्यानां मुक्तानामीश्वरस्य च।
प्रत्यक्षं शेष-शेषित्वं सा मे सिद्ध्यतु पादुका॥ १८

वन्दे गारुत्मतीं वृत्त्या मणिस्तोमैश्च पादुकाम्।
यया नित्यं तुलस्येव हरितत्वं प्रकाश्यते॥ १९

हरिणा हरिनीलैश्च प्रतियत्नवर्ती सदा।
अयत्न-लभ्य-निर्वाणां आश्रये मणिपादुकाम्॥ २०

शौरेः शुद्धान्त-नारीणां विहार-मणि-दर्पणम्।
प्रसत्तेरिव संस्थानं पदत्राणमुपास्महे॥ २१

कल्याण-प्रकृतिं वन्दे भजन्तीं काञ्चन-श्रियम्।
पदार्हां पादुकां शौरेः पद एव निवेशिताम्॥ २२

सृष्टं भूमावनन्तेन नित्यं शेष-समाधिना।
अहं संभावयामि त्वां आत्मानमिव पादुके !॥ २३

प्रपद्ये पादुकारूपं प्रणवस्य कला-द्वयम्।
ओतं मितमिदं यस्मिन् अनन्तस्यापि तत्पदम्॥ २४

अणोरणीयसीं विष्णोः महतोऽपि महीयसीम्।
प्रपद्ये पादुकां नित्यं तत्पदेनैव सम्मिताम्॥ २५

उदग्र-यन्त्रिकां वन्दे पादुकां यन्निवेशनात्।
उपर्यपि पदं विष्णोः प्रत्यादिष्ट-प्रसाधनम्॥ २६

सूचयन्तीं स्वरेखाभिः अनालेख्य-सरस्वतीम्।
अलेखनीय-सौन्दर्यां आश्रये शौरिपादुकाम्॥ २७

कलासु काष्ठामातिष्ठन् भूम्ने सम्बन्धिनामपि।
पादुका रङ्गधुर्यस्य भरताराध्यतां गता॥ २८

विधौ प्रवृत्ते यद्द्रव्यं गुण-संस्कार-नामभिः।
श्रेयस्साधनमाम्नातं तत्पदत्रं तथास्तु मे॥ २९

प्रतिष्ठां सर्वचित्राणां प्रपद्ये मणिपादुकाम्।
विचित्र-जगदाधारो विष्णुर्यत्र प्रतिष्ठितः॥ ३०

प्रपद्ये पादुकां देवीं परविद्यामिव स्वयम्।
यामर्पयति दीनानां दयमानो जगद्गुरुः॥ ३१

उपाख्यातं तथात्वेन वसिष्ठाद्यैर्महर्षिभिः।
उपायफलयोः काष्ठां उपासे रामपादुकाम्॥ ३२

जयति यतिराज-सूक्तिः जयति मुकुन्दस्य पादुका-युगळी।
तदुभयधनास्त्रिवेदीं अवन्ध्ययन्तो जयन्ति भुवि सन्तः॥ ३३

—*—

अहल्याकृतं

# रामस्तोत्रम्

अहो कृतार्थाऽस्मि जगन्निवास ते पादाब्जसंलग्नरजःकणादहम्।
स्पृशामि यत्पद्मजशङ्करादिभिर्विमृग्यते रन्धितमानसैः सदा॥ १

अहो विचित्रं तव राम चेष्टितं मनुष्यभावेन विमोहितं जगत्।
चलस्यजस्रं चरणादिवर्जितः संपूर्ण आनन्दमयोऽतिमायिकः॥ २

यत्पादपङ्कजपरागपवित्रगात्रा
भागीरथी भवविरिञ्चिमुखान्पुनाति।
साक्षात्स एव मम दृग्विषयो यदास्ते
किं वर्ण्यते मम पुराकृतभागधेयम्॥ ३

मर्त्यावतारे मनुजाकृतिं हरिं रामाभिधेयं रमणीयदेहिनम्।
धनुर्धरं पद्मविशाललोचनं भजामि नित्यं न परान्भजिष्ये॥ ४

यत्पादपङ्कजरजः श्रुतिभिर्विमृग्यं
यन्नाभिपङ्कजभवः कमलासनश्च।
यन्नामसाररसिको भगवान्पुरारिः
तं रामचन्द्रमनिशं हृदि भावयामि॥ ५

यस्यावतारचरितानि विरिञ्चिलोके
गायन्ति नारदमुखा भवपद्मजाद्याः।
आनन्दजाश्रुपरिषिक्तकुचाग्रसीमा
वागीश्वरी च तमहं शरणं प्रपद्ये॥ ६

सोऽयं परात्मा पुरुषः पुराण एषः स्वयं ज्योतिरनंत आद्यः।
मायातनुं लोकविमोहनीयां धत्ते परानुग्रह एष रामः॥ ७

अयं हि विश्वोद्भवसंयमानामेकः स्वमायागुणबिम्बितो यः।
विरिञ्चिविष्णवीश्वरनामभेदान् धत्ते स्वतन्त्रः परिपूर्ण आत्मा॥ ८

नमोऽस्तु ते राम तवाङ्घ्रिपङ्कजं श्रिया धृतं वक्षसि लालितं प्रियात्।
आक्रान्तमेकेन जगत्त्रयं पुरा ध्येयं मुनीन्द्रै रभिमान वर्जितैः॥ ९

जगतामादिभूतस्त्वं जगत्त्वं जगदाश्रयः।
सर्वभूतेष्वसंबद्ध एको भाति भवान्परः॥ १०

ओंकारवाच्यस्त्वं राम वाचामविषयः पुमान्।
वाच्यवाचकभेदेन भवानेव जगन्मयः॥ ११

कार्यकारणकर्तृत्वफलसाधनभेदतः।
एको विभासि राम त्वं मायया बहुरूपया॥ १२

त्वन्मायामोहितधियस्त्वां न जानन्ति तत्त्वतः।
मानुषं त्वाऽभिमन्यन्ते मायिनं परमेश्वरम्॥ १३

आकाशवत्त्वं सर्वत्र बहिरन्तर्गतोऽमलः।
असङ्गो ह्यचलो नित्यः शुद्धो बुद्धः सदव्ययः॥ १४

योषिन्मूढाहमज्ञा ते तत्त्वं जाने कथं विभो।
तस्मात्ते शतशो राम नमस्कुर्यामनन्यधीः॥ १५

देव मे यत्र कुत्रापि स्थिताया अपि सर्वदा।
त्वत्पादकमले सक्ता भक्तिरेव सदाऽस्तु मे॥ १६

नमस्ते पुरुषाध्यक्ष नमस्ते भक्तवत्सल।
नमस्तेऽस्तु हृषीकेश नारायण नमोऽस्तु ते॥ १७

भवभयहरमेकं भानुकोटिप्रकाशं
करधृतशरचापं कालमेघावभासम्।

कनकरुचिरवस्त्रं रत्नवत्कुण्डलाढ्यं
कमलविशदनेत्रं सानुजं राममीडे ॥ १८

अहल्यया कृतं स्तोत्रं यः पठेद्भक्तिसंयुतः ।
स मुच्यतेऽखिलैः पापैः परं ब्रह्माधिगच्छति ॥ २०

पुत्राद्यर्थे पठेद्भक्त्या रामं हृदि निधाय च ।
संवत्सरेण लभते वन्ध्या अपि सुपुत्रकम् ॥ २१

सर्वान्कामानवाप्नोति रामचन्द्रप्रसादतः ॥ २२

ब्रह्मघ्नो गुरुतल्पगोऽपि पुरुषः स्तेयी सुरापोऽपि वा
मातृभ्रातृविहिंसकोऽपि सततं भोगैकबद्धादरः ।
नित्यं स्तोत्रमिदं जपन्रघुपतिं भक्त्या हृदिस्थं स्मरन्
ध्यायन्मुक्तिमुपैति किं पुनरसौ स्वाचारयुक्तो नरः ॥ २३

—अध्यात्मरामायणतः

—*—

इन्द्रकृतं

## रामस्तोत्रम्

भजेऽहं सदा राममिन्दीवराभं भवारण्यदावानलाभाभिधानम् ।
भवानीहृदा भावितानन्दरूपं भवाभावहेतुं भवादिप्रपन्नम् ॥ १

सुरानीकदुःखौघनाशैकहेतुं नराकारदेहं निराकारमीड्यम् ।
परेशं परानन्दरूपं वरेण्यं हरिं राममीशं भजे भारनाशम् ॥ २

प्रपन्नाखिलानन्ददोहं प्रपन्नं प्रपन्नार्तिनिःशेषनाशाभिधानम् ।
तपोयोगयोगीशभावाभिभाव्यं कपीशादिमित्रं भजे राममित्रम् ॥ ३

सदा भोगभाजां सुदूरे विभातं सदा योगभाजामदूरे विभातम्।
चिदानन्दकन्दं सदा राघवेशं विदेहात्मजानन्दरूपं प्रपद्ये ॥ ४

महायोगमायाविशेषानुयुक्तो विभासीश लीलानराकारवृत्तिः।
त्वदानन्दलीलाकथापूर्णकर्णाः सदानन्दरूपा भवन्तीह लोके॥ ५

अहं मानपानाभिमत्तप्रमत्तो न वेदाखिलेशाभिमानाभिमानः।
इदानीं भवत्पादपद्मप्रसादात्त्रिलोकाधिपत्याभिमानो विनष्टः ॥ ६

स्फुरद्रत्नकेयूरहाराभिरामं धराभारभूतासुरानीकदावम्।
शरच्चन्द्र वक्त्रं लसत्पद्मनेत्रं दुरावारपारं भजे राघवेशम्॥ ७

सुराधीशनीलाभ्रनीलाङ्गकान्तिं विराधादिरक्षोवधाल्लोकशान्तिम्।
किरीटादिशोभं पुरारातिलाभं भजे रामचन्द्रं रघूणामधीशम्॥ ८

लसच्चन्द्रकोटिप्रकाशादिपीठे समासीनमेकं समाधाय सीताम्।
स्फुरद्धेमवर्णां तडित्पुञ्जभासां भजे रामचन्द्रं निवृत्तार्तितन्द्रम्॥ ९

(श्रीमदध्यात्मरामायणे)

—*—

जटायुकृतं

## रामस्तोत्रम्

जटायुरुवाच—

अगणितगुणमप्रमेयमाद्यं सकलजगत्स्थितिसंयमादिहेतुम्।
उपरमपरमं परात्मभूतं सततमहं प्रणतोऽस्मि रामचन्द्रम्॥ १

निरवधिसुखमिन्दिराकटाक्षं क्षपितसुरेन्द्रचतुर्मुखादिदुःखम्।
नरवरमनिशं नतोऽस्मि रामं वरदमहं वरचापबाणहस्तम्॥ २

त्रिभुवनकमनीयरूपमीड्यं रविशतभासुरमीहितप्रदानम्।
शरणदमनिशं सुरागमूले कृतनिलयं रघुनन्दनं प्रपद्ये॥ ३

भवविपिनदवाग्निनामधेयं भवमुखदैवतदैवतं दयालुम्।
दनुजपतिसहस्रकोटिनाशं रवितनयासदृशं हरिं प्रपद्ये॥ ४

अविरतभवभावनातिदूरं भवविमुखैर्मुनिभिः सदैव दृश्यम्।
भवजलधिसुतारणाङ्घ्रिपोतं शरणमहं रघुनन्दनं प्रपद्ये॥ ५

गिरिश गिरिसुतामनोनिवासं गिरिवरधारिणमीहिताभिरामम्।
सुरवरदनुजेन्द्रसेविताङ्घ्रिं सुरवरदं रघुनायकं प्रपद्ये॥ ६

परधनपरदारवर्जितानां परगुणभूतिषु तुष्टमानसानाम्।
परहितनिरतात्मनां सुसेव्यं रघुवरमम्बुजलोचनं प्रपद्ये॥ ७

स्मितरुचिरविकासिताननाब्जमतिसुलभं सुरराजनीलनीलम्।
सितजलरुहचारुनेत्रशोभं रघुपतिमीशगुरोर्गुरुं प्रपद्ये॥ ८

हरिकमलजशम्भुरूपभेदात्त्वमिह विभासि गुणत्रयानुवृत्तः।
रविरिव जलपूरितोदपात्रेष्वमरपतिस्तुतिपात्रमीशमीडे॥ ९

रतिपतिशतकोटिसुन्दराङ्गं शतपथगोचरभावनाविदूरम्।
यतिपतिहृदये सदा विभातं रघुपतिमार्तिहरं प्रभुं प्रपद्ये॥ १०

(श्रीमदध्यात्मरामायणे)

—*—

ब्रह्मदेवकृता

## रामस्तुतिः

वन्दे देवं विष्णुमशेषस्थितिहेतुं त्वामध्यात्मज्ञानिभिरन्तर्हृदि भाव्यम्।
हेयाहेयद्वन्द्वविहीनं परमेकं सत्तामात्रं सर्वहृदिस्थं दृशिरूपम्॥ १

प्राणापानौ निश्चयबुद्ध्या हृदि रुद्ध्वा
छित्त्वा सर्वं संशयबन्धं विषयौघान्।
पश्यन्तीशं यं गतमोहा यतयस्तं
वन्दे रामं रत्नकिरीटं रविभासम्॥ २

मायातीतं माधवमाद्यं जगदादिं मानातीतं मोहविनाशं मुनिवंद्यम्।
योगिध्येयं योगविधानं परिपूर्णं वन्दे रामं रञ्जितलोकं रमणीयम्॥ ३

भावाभावप्रत्ययहीनं भवमुख्यैर्भोगासक्तैरर्चितपादाम्बुजयुग्मम्।
नित्यं शुद्धं बुद्धमनन्तं प्रणवाख्यं वन्दे रामं वीरमशेषासुरदावम्॥ ४

त्वं मे नाथो नाथितकार्याखिलकारी
मानातीतो माधवरूपोऽखिलधारी।
भक्त्या गम्यो भावितरूपो भवहारी
योगाभ्यासैर्भावितचेतःसहचारी॥ ५

त्वामाद्यन्तं लोकततीनां परमीशं लोकानां नो लौकिकमानैरधिगम्यम्।
भक्तिश्रद्धाभावसमेतैर्भजनीयं वन्दे रामं सुन्दरमिन्दीवरनीलम्॥ ६

को वा ज्ञातुं त्वामतिमानं गतमानं मानासक्तो माधवशक्तो मुनिमान्यम्।
बृन्दारण्ये वन्दितवृन्दारकवृन्दं वन्दे रामं भवमुखवन्द्यं सुखकन्दम्॥ ७

नानाशास्त्रैर्वेदकदम्बैः प्रतिपाद्यं नित्यानन्दं निर्विषयज्ञानमनादिम्।
मत्सेवार्थं मानुषभावं प्रतिपन्नं वन्दे रामं मरकतवर्णं मथुरेशम्॥८

श्रद्धायुक्तो यः पठतीमं स्तवमाद्यं
ब्राह्मं ब्रह्मज्ञानविधानं भुवि मर्त्यः।
रामं श्यामं कामितकामप्रदमीशं
ध्यात्वा ध्याता पातकजालैर्विगतः स्यात्॥ ९

(श्रीमदध्यात्मरामायणे)

—*—

## श्री महादेवकृता

# रामस्तुतिः

नमोऽस्तु रामाय सशक्तिकाय नीलोत्पलश्यामलकोमलाय।
किरीटहाराङ्गदभूषणाय सिंहासनस्थाय महाप्रभाय॥ १

त्वमादिमध्यान्तविहीन एकः सृजस्यवस्यत्सि च लोकजातम्।
स्वमायया तेन न लिप्यसे त्वं यत्स्वे सुखेऽजस्ररतोऽनवद्यः॥ २

लीलां विधत्से गुणसंवृतस्त्वं प्रसन्नभक्तानुविधानहेतोः।
नानावतारैः सुरमानुषाद्यैः प्रतीयसे ज्ञानिभिरेव नित्यम्॥ ३

स्वांशेन लोकं सकलं विधाय तं बिभर्षि च त्वं तदधः फणीश्वरः।
उपर्यधो भान्वनिलोडुपौषधीप्रवर्षरूपोऽवसि नैकधा जगत्॥ ४

त्वमिह देहभृतां शिखिरूपः पचसि भक्तमशेषमजस्रम्।
पवनपञ्चकरूपसहायो जगदखण्डमनेन बिभर्षि॥ ५

चन्द्रसूर्यशिखिमध्यगतं यत्तेज ईश चिदशेषतनूनाम्।
प्राभवत्तनुभृतामिह धैर्यं शौर्यमात्रमखिलं तव सत्त्वम्॥ ६

त्वं विरिंचिशिवविष्णुविभेदात्कालकर्मशशिसूर्यविभागात्।
वादिनां पृथगिवेश विभासि ब्रह्मनिश्चितमनन्यदिहैकम्॥ ७

मत्स्यादिरूपेण यथा त्वमेकः श्रुतौ पुराणेषु च लोकसिद्धः।
तथैव सर्वं सदसद्विभागस्त्वमेव नान्यद्भवतो विभाति॥ ८

यद्यत्समुत्पन्नमनन्तसृष्टावुत्पस्त्यते यच्च भवच्च यच्च।
न दृश्यते स्थावरजङ्गमादौ त्वया विनाऽतः परतः परस्त्वम्॥ ९

तत्त्वं न जानन्ति परात्मनस्ते जनाः समस्तास्तव माययातः।
त्वद्भक्तसेवामलमानसानां विभाति तत्त्वं परमेकमैशम्॥ १०

ब्रह्मादयस्ते न विदुः स्वरूपं चिदात्मतत्त्वं बहिरर्थभावाः ।
ततो बुधस्त्वामिदमेव रूपं भक्त्या भजन्मुक्तिमुपैत्यदुःखः ।। ११

अहं भवन्नामगुणैः कृतार्थो वसामि काश्यामनिशं भवान्या ।
मुमूर्षमाणस्य विमुक्तयेऽहं दिशामि मन्त्रं तव राम नाम ।। १२

इमं स्तवं नित्यमनन्यभक्त्या शृण्वन्ति गायन्ति लिखन्ति ये वै ।
ते सर्वसौख्यं परमं च लब्ध्वा भवत्पदं यान्तु भवत्प्रसादात् ।। १३

—*—

नारदोक्तः

## रामस्तवराजः

अस्य श्रीरामचन्द्रस्तवराजस्तोत्रमन्त्रस्य सनत्कुमार ऋषिः । श्रीरामो देवता । अनुष्टुप् छन्दः । सीता बीजम् । हनूमान् शक्तिः । श्री रामप्रीत्यर्थे जपे विनियोगः ।।

व्यास उवाच—

स्तवराजं पुरा प्रोक्तं नारदेन च धीमता ।
तत्सर्वं संप्रवक्ष्यामि हरिध्यानपुरःसरम् ।। १

तापत्रयाग्निशमनं सर्वाघौघनिकृन्तनम् ।
दारिद्र्यदुःखशमनं सर्वसंपत्करं शिवम् ।। २

विज्ञानफलदं दिव्यं मोक्षैकफलसाधनम् ।
नमस्कृत्य प्रवक्ष्यामि रामं कृष्णं जगन्मयम् ।। ३

अयोध्यानगरे रम्ये रत्नमण्डपमध्यगे ।
स्मरेत्कल्पतरोर्मूले रत्नसिंहासनं शुभम् ।। ४

तन्मध्येऽष्टदलं पद्मं नानारत्नैश्च वेष्टितम्।
स्मरेन्मध्ये दाशरथिं सहस्रादित्यतेजसम्॥ ५

पितुरङ्कगतं राममिन्द्रनीलमणिप्रभम्।
कोमलाङ्गं विशालाक्षं विद्युद्वर्णाम्बरावृतम्॥ ६

भानुकोटिप्रतीकाशं किरीटेन विराजितम्।
रत्नग्रैवेयकेयूररत्नकुण्डलमण्डितम्॥ ७

रत्नकङ्कणमञ्जीरकटिसूत्रैरलङ्कृतम्।
श्रीवत्सकौस्तुभोरस्कं मुक्ताहारोपशोभितम्॥ ८

दिव्यरत्नसमायुक्तमुद्रिकाभिरलङ्कृतम्।
राघवं द्विभुजं बालं राममीषत्स्मिताननम्॥ ९

तुलसीकुन्दमन्दारपुष्पमाल्यैरलङ्कृतम्।
कर्पूरागरुकस्तूरीदिव्यगन्धानुलेपनम्॥ १०

योगशास्त्रेष्वभिरतं योगेशं योगदायकम्।
सदा भरतसौमित्रशत्रुघ्नैरुपशोभितम्॥ ११

विद्याधरसुराधीश सिद्धगन्धर्वकिन्नरैः।
योगीन्द्रैर्नारदाद्यैश्च स्तूयमानमहर्निशम्॥ १२

विश्वामित्रवसिष्ठादिमुनिभिः परिसेवितम्।
सनकादिमुनिश्रेष्ठैर्योगिवृन्दैश्च सेवितम्॥ १३

रामं रघुवरं वीरं धनुर्वेदविशारदम्।
मङ्गलायतनं देवं रामं राजीवलोचनम्॥ १४

सर्वशास्त्रार्थतत्त्वज्ञमानन्दकरसुन्दरम्।
कौसल्यानन्दनं रामं धनुर्बाणधरं हरिम्॥ १५

एवं संचिन्तयन्विष्णुं यज्ज्योतिरमलं विभुम्।
प्रहृष्टमानसो भूत्वा मुनिवर्यः स नारदः ॥ १६

सर्वलोकहितार्थाय तुष्टाव रघुनन्दनम्।
कृताञ्जलिपुटो भूत्वा चिन्तयन्नद्भुतं हरिम्॥ १७

यदेकं यत्परं नित्यं यदनन्तं चिदात्मकम्।
यदेकं व्यापकं लोके तद्रूपं चिन्तयाम्यहम्॥ १८

विज्ञानहेतुं विमलायताक्षं प्रज्ञानरूपं स्वसुखैकहेतुम्।
श्रीरामचन्द्रं हरिमादिदेवं परात्परं राममहं भजामि॥ १९

कविं पुराणं पुरुषं पुरस्तात्सनातनं योगिनमीशितारम्।
अणोरणीयांसमनन्तवीर्यं प्राणेश्वरं राममसौ ददर्श॥ २०

नारद उवाच—

नारायणं जगन्नाथमभिरामं जगत्पतिम्।
कविं पुराणं वागीशं रामं दशरथात्मजम्॥ २१

राजराजं रघुवरं कौसल्यानन्दवर्धनम्।
भर्गं वरेण्यं विश्वेशं रघुनाथं जगद्गुरुम्॥ २२

सत्यं सत्यप्रियं श्रेष्ठं जानकीवल्लभं विभुम्।
सौमित्रिपूर्वजं शान्तं कामदं कमलेक्षणम्॥ २३

आदित्यं रविमीशानं घृणिं सूर्यमनामयम्।
आनन्दरूपिणं सौम्यं राघवं करुणामयम्॥ २४

जामदग्न्यं तपोमूर्तिं रामं परशुधारिणम्।
वाक्पतिं वरदं वाच्यं श्रीपतिं पक्षिवाहनम्॥ २५

श्रीशार्ङ्गधारिणं रामं चिन्मयानन्दविग्रहम्।
हलधृग्विष्णुमीशानं बलरामं कृपानिधिम्॥ २६

श्रीवल्लभं कृपानाथं जगन्मोहनमच्युतम्।
मत्स्यकूर्मवराहादिरूपधारिणमव्ययम्॥ २७

वासुदेवं जगद्योनिमनादिनिधनं हरिम्।
गोविन्दं गोपतिं विष्णुं गोपीजनमनोहरम्॥ २८

गोगोपालपरीवारं गोपकन्यासमावृतम्।
विद्युत्पुञ्जप्रतीकाशं रामं कृष्णं जगन्मयम्॥ २९

गोगोपिकासमाकीर्णं वेणुवादनतत्परम्।
कामरूपं कलावन्तं कामिनीकामदं विभुम्॥ ३०

मन्मथं मथुरानाथं माधवं मकरध्वजम्।
श्रीधरं श्रीकरं श्रीशं श्रीनिवासं परात्परम्॥ ३१

भूतेशं भूपतिं भद्रं विभूतिं भूतिभूषणम्।
सर्वदुःखहरं वीरं दुष्टदानववैरिणम्॥ ३२

श्रीनृसिंहं महाबाहुं महान्तं दीप्ततेजसम्।
चिदानन्दमयं नित्यं प्रणवं ज्योतिरूपिणम्॥ ३३

आदित्यमण्डलगतं निश्चितार्थस्वरूपिणम्।
भक्तप्रियं पद्मनेत्रं भक्तानामीप्सितप्रदम्॥ ३४

कौसल्येयं कलामूर्तिं काकुत्स्थं कमलाप्रियम्।
सिंहासने समासीनं नित्यव्रतमकल्मषम्॥ ३५

विश्वामित्रप्रियं दान्तं स्वदारनियतव्रतम्।
यज्ञेशं यज्ञपुरुषं यज्ञपालनतत्परम्॥ ३६

सत्यसन्धं जितक्रोधं शरणागतवत्सलम्।
सर्वक्लेशापहरणं विभीषणवरप्रदम्॥ ३७

दशग्रीवहरं रौद्रं केशवं केशिमर्दनम्।
वालिप्रमथनं वीरं सुग्रीवेप्सितराज्यदम्॥ ३८

नरवानरदेवैश्च सेवितं हनुमत्प्रियम्।
शुद्धं सूक्ष्मं परं शान्तं तारकब्रह्मरूपिणम्॥ ३९

सर्वभूतात्मभूतस्थं सर्वाधारं सनातनम्।
सर्वकारणकर्तारं निदानं प्रकृतेः परम्॥४०

निरामयं निराभासं निरवद्यं निरञ्जनम्।
नित्यानन्दं निराकारमद्वैतं तमसः परम्॥ ४१

परात्परतरं तत्त्वं सत्यानन्दं चिदात्मकम्।
मनसा शिरसा नित्यं प्रणमामि रघूत्तमम्॥ ४२

सूर्यमण्डलमध्यस्थं रामं सीतासमन्वितम्।
नमामि पुण्डरीकाक्षममेयं गुरुतत्परम्॥ ४३

नमोऽस्तु वासुदेवाय ज्योतिषां पतये नमः।
नमोऽस्तु रामदेवाय जगदानन्दरूपिणे॥ ४४

नमो वेदान्तनिष्ठाय योगिने ब्रह्मवादिने।
मायामयनिरासाय प्रपन्नजनसेविने॥ ४५

वन्दामहे महेशानचण्डकोदण्डखण्डनम्।
जानकीहृदयानन्दवर्धनं रघुनन्दनम्॥ ४६

उत्फुल्लामलकोमलोत्पलदलश्यामाय रामाय ते
कामाय प्रमदामनोहरगुणग्रामाय रामात्मने।

योगारूढमुनीन्द्रमानससरोहंसाय संसारवि-
ध्वंसाय स्फुरदोजसे रघुकुलोत्तंसाय पुंसे नमः ॥ ४७

भवोद्भवं वेदविदां वरिष्ठमादित्यचन्द्रानलसुप्रभावम्।
सर्वात्मकं सर्वगतस्वरूपं नमामि रामं तमसः परस्तात्॥ ४८

निरञ्जनं निष्प्रतिमं निरीहं निराश्रयं निष्कलमप्रपञ्चम्।
नित्यं ध्रुवं निर्विषयस्वरूपं निरन्तरं राममहं भजामि॥ ४९

भवाब्धिपोतं भरताग्रजं तं भक्तप्रियं भानुकुलप्रदीपम्।
भूतत्रिनाथं भुवनाधिपं तं भजामि रामं भवरोगवैद्यम्॥ ५०

सर्वाधिपत्यं समराङ्गधीरं सत्यं चिदानन्दमयस्वरूपम्।
सत्यं शिवं शान्तिमयं शरण्यं सनातनं राममहं भजामि॥ ५१

कार्यक्रियाकारणमप्रमेयं कविं पुराणं कमलायताक्षम्।
कुमारवेद्यं करुणामयं तं कल्पद्रुमं राममहं भजामि॥ ५२

त्रैलोक्यनाथं सरसीरुहाक्षं दयानिधिं द्वन्द्वविनाशहेतुम्।
महाबलं वेदविधिं सुरेशं सनातनं राममहं भजामि॥ ५३

वेदान्तवेद्यं कविमीशितारमनादिमध्यान्तमचिन्त्यमाद्यम्।
अगोचरं निर्मलमेकरूपं नमामि रामं तमसः परस्तात्॥ ५४

अशेषवेदात्मकमादिसंज्ञमजं हरिं विष्णुमनन्तमाद्यम्।
अपारसंवित्सुखमेकरूपं परात्परं राममहं भजामि॥ ५५

तत्त्वस्वरूपं पुरुषं पुराणं स्वतेजसा पूरितविश्वमेकम्।
राजाधिराजं रविमण्डलस्थं विश्वेश्वरं राममहं भजामि॥ ५६

लोकाभिरामं रघुवंशनाथं हरिं चिदानन्दमयं मुकुन्दम्।
अशेषविद्याधिपतिं कवीन्द्रं नमामि रामं तमसः परस्तात्॥ ५७

योगीन्द्रसंघैश्च सुसेव्यमानं नारायणं निर्मलमादिदेवम्।
नतोऽस्मि नित्यं जगदेकनाथमादित्यवर्णं तमसः परस्तात्॥ ५८

विभूतिदं विश्वसृजं विरामं राजेन्द्रमीशं रघुवंशनाथम्।
अचिन्त्यमव्यक्तमनन्तमूर्तिं ज्योतिर्मयं राममहं भजामि॥ ५९

अशेषसंसारविहारहीनमादित्यगं पूर्णसुखाभिरामम्।
समस्तसाक्षिं तमसः परस्तान्नारायणं विष्णुमहं भजामि॥ ६०

मुनीन्द्रगुह्यं परिपूर्णकामं कलानिधिं कल्मषनाशहेतुम्।
परात्परं यत्परमं पवित्रं नमामि रामं महतो महान्तम्॥ ६१

ब्रह्मा विष्णुश्च रुद्रश्च देवेन्द्रो देवतास्तथा।
आदित्यादिग्रहाश्चैव त्वमेव रघुनन्दन॥ ६२

तापसा ऋषयः सिद्धाः साध्याश्च मरुतस्तथा।
विप्रा वेदास्तथा यज्ञाः पुराणधर्मसंहिताः॥ ६३

वर्णाश्रमास्तथा धर्मा वर्णधर्मास्तथैव च।
यक्षराक्षसगन्धर्वा दिक्पाला दिग्गजादयः॥ ६४

सनकादिमुनिश्रेष्ठास्त्वमेव रघुपुङ्गव।
वसवोऽष्टौ त्रयः काला रुद्रा एकादश स्मृताः॥ ६५

तारका दश दिक् चैव त्वमेव रघुनन्दन।
सप्तद्वीपाः समुद्राश्च नगा नद्यस्तथा द्रुमाः॥ ६६

स्थावरा जङ्गमाश्चैव त्वमेव रघुनायक।
देवतिर्यङ्मनुष्याणां दानवानां तथैव च॥ ६७

माता पिता तथा भ्राता त्वमेव रघुवल्लभ।
सर्वेषां त्वं परं ब्रह्म त्वन्मयं सर्वमेव हि॥ ६८

त्वमक्षरं परं ज्योतिस्त्वमेव पुरुषोत्तम।
त्वमेव तारकं ब्रह्म त्वत्तोऽन्यन्नैव किंचन॥ ६९

शान्तं सर्वगतं सूक्ष्मं परं ब्रह्म सनातनम्।
राजीवलोचनं रामं प्रणमामि जगत्पतिम्॥ ७०

व्यास उवाच—
ततः प्रसन्नः श्रीरामः प्रोवाच मुनिपुङ्गवम्।
तुष्टोऽस्मि मुनिशार्दूल वृणीष्व वरमुत्तमम्॥ ७१

नारद उवाच—
यदि तुष्टोऽसि सर्वज्ञ श्रीराम करुणानिधे।
त्वन्मूर्तिदर्शनेनैव कृतार्थोऽहं च सर्वदा॥ ७२

धन्योऽहं कृतकृत्योऽहं पुण्योऽहं पुरुषोत्तम।
अद्य मे सफलं जन्म जीवितं सफलं च मे॥ ७३

अद्य मे सफलं ज्ञानमद्य मे सफलं तपः।
अद्य मे सफलं कर्म त्वत्पादाम्भोजदर्शनात्।
अद्य मे सफलं सर्वं त्वन्नामस्मरणं तथा॥ ७४

त्वत्पादाम्भोरुहद्वन्द्वसद्भक्तिं देहि राघव।
ततः परमसंप्रीतः स रामः प्राह नारदम्॥ ७५

श्रीराम उवाच—
मुनिवर्य महाभाग मुने त्विष्टं ददामि ते। 6
यत्त्वया चेप्सितं सर्वं मनसा तद्भविष्यति॥ ७६

नारद उवाच—
वरं न याचे रघुनाथ युष्मत्पदाब्जभक्तिः सततं ममास्तु।
इदं प्रियं नाथ परं प्रयाचे पुनः पुनस्त्वामिदमेव याचे॥ ७७

व्यास उवाच—

इत्येवमीडितो रामः प्रादात्तस्मै वरान्तरम्।
वीरो रामो महातेजाः सच्चिदानन्दविग्रहः ॥ ७८

अद्वैतममलं ज्ञानं स्वनामस्मरणं तथा।
अन्तर्दधौ जगन्नाथः पुरतस्तस्य राघवः ॥ ७९

कथितं ब्रह्मपुत्रेण वेदानां सारमुत्तमम्।
गुह्याद्गुह्यतमं दिव्यं तव स्नेहात्प्रकीर्तितम्॥ ८०

यः पठेच्छृणुयाद्वापि त्रिसन्ध्यं श्रद्धयान्वितः।
ब्रह्महत्यादिपापानि तत्समानि बहूनि च॥ ८१

स्वर्णस्तेयं सुरापानं गुरुतल्पगतिस्तथा।
गोवधाद्युपपापानि अनृतात्संभवानि च॥ ८२

सर्वैः प्रमुच्यते पापैः कल्पायुतशतोद्भवैः।
मानसं वाचिकं पापं कर्मणा समुपार्जितम्॥ ८३

श्रीरामस्मरणेनैव तत्क्षणान्नश्यति ध्रुवम्।
इदं सत्यमिदं सत्यं सत्यमेतदिहोच्यते॥ ८४

रामः सत्यं परं ब्रह्म रामात्किंचिन्न विद्यते।
तस्माद्रामस्वरूपं हि सत्यं सत्यमिदं जगत्॥ ८५

श्रीरामचन्द्र रघुपुङ्गव राजवर्य राजेन्द्र राम रघुनायक राघवेश।
राजाधिराज रघुनन्दन रामचन्द्र दासोऽहमद्य भवतः शरणा गतोऽस्मि॥

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डले
मध्ये पुष्पकृतासने मणिमये वीरासने संस्थितम्।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनीन्द्रैः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम्॥ ८७

रामं रत्नकिरीटकुण्डलयुतं केयूरहारान्वितं
सीतालङ्कृतवामभागममलं सिंहासनस्थं विभुम्।
सुग्रीवादिहरीश्वरैः सुरगणैः संसेव्यानं सदा
विश्वामित्रपराशरादिमुनिभिः संस्तूयमानं प्रभुम्॥ ८८

सकलगुणनिधानं योगिभिः स्तूयमानं
भुजविजितसमानं राक्षसेन्द्रादिमानम्।
महितनृपभयानं सीतया शोभमानं
स्मर हृदय विमानं ब्रह्म रामाभिधानम्॥ ८९

रघुवर तव मूर्तिर्मामके मानसाब्जे
नरकगतिहरं ते नामधेयं मुखे मे।
अनिशमतुलभक्त्या मस्तकं त्वत्पदाब्जे
भवजलनिधिमग्नं रक्ष मामार्तबन्धो॥ ९०

रामरत्नमहं वन्दे चित्रकूटपतिं हरिम्।
कौसल्याभक्तिसम्भूतं जानकी कण्ठभूषणम्॥ ९१

(श्री सनत्कुमारसंहितायां। शिवकृतमिति केचित्।

—*—

व्यासकृतम्

## रामाष्टकम्।

भजे विशेषसुन्दरं समस्तपापखण्डनम्।
स्वभक्तचित्तरञ्जनं सदैव राममद्वयम्॥ १

जटाकलापशोभितं समस्तपापनाशकम्।
स्वभक्तभीतिभञ्जनं भजे ह राममद्वयम्॥ २

निजस्वरूपबोधकं कृपाकरं भवापहम्।
समं शिवं निरञ्जनं भजे ह राममद्वयम्।। ३

सहप्रपञ्चकल्पितं ह्यनामरूपवास्तवम्।
निराकृतिं निरामयं भजे ह राममद्वयम्।। ४

निष्प्रपञ्चनिर्विकल्पनिर्मलं निरामयम्।
चिदेकरूपसन्ततं भजे ह राममद्वयम्।। ५

भवाब्धिपोतरूपकं ह्यशेषदेहकल्पितम्।
गुणाकरं कृपाकरं भजे ह राममद्वयम्।। ६

महावाक्यबोधकैर्विराजमानवाक्पदैः।
परब्रह्म व्यापकं भजे ह राममद्वयम्।। ७

शिवप्रदं सुखप्रदं भवच्छिदं भ्रमापहम्।
विराजमानदैशिकं भजे ह राममद्वयम्।। ८

रामाष्टकं पठति यः सुकरं सुपुण्यं व्यासेन भाषितमिदं शृणुते मनुष्यः।
विद्यां श्रियं विपुलसौख्यमनन्तकीर्तिं संप्राप्य देहविलये लभते च मोक्षम्।।

—*—

ब्रह्मानन्दस्वामिविरचितम्

## रामाष्टकम्

कृतार्थदेववन्दनं दिनेशवंशनन्दनम्।
सुशोभिभालचन्दनं नमामि राममीश्वरम्।। १

मुनीन्द्रयज्ञकारकं शिलाविपत्तिहारकम्।
महाधनुर्विदारकं नमामि राममीश्वरम्।। २

स्वतातवाक्यकारिणं तपोवने विहारिणम्।
करेषुचापधारिणं नमामि राममीश्वरम्॥ ३

कुरङ्गमुक्तसायकं जटायुमोक्षदायकम्।
प्रविद्धकीशनायकं नमामि राममीश्वरम्॥ ४

प्लवङ्गसङ्गसंमतिं निबद्धनिम्नगापतिम्।
दशास्यवंशसंक्षतिं नमामि राममीश्वरम्॥ ५

विदीनदेवहर्षणं कपीप्सितार्थवर्षणम्।
स्वबन्धुशोककर्षणं नमामि राममीश्वरम्॥ ६

गतारिराज्यरक्षणं प्रजाजनार्तिभक्षणम्।
कृतास्तमोहलक्षणं नमामि राममीश्वरम्॥ ७

हृताखिलाचलाभरं स्वधामनीतनागरम्।
जगत्तमोदिवाकरं नमामि राममीश्वरम्॥ ८

इदं समाहितात्मना नरो रघूत्तमाष्टकम्।
पठन्निरन्तरं भयं भवोद्भवं न विन्दते॥ ९

—*—

अच्युतयतिविरचितं

# श्रीसीतारामाष्टकम्

ब्रह्ममहेन्द्रसुरेन्द्रमरुद्गणरुद्रमुनीन्द्रगणैरतिरम्यं
क्षीरसरित्पतितीरमुपेत्य नुतं हि सतामवितारमुदारम्।
भूमिभरप्रशमार्थमथ प्रथितप्रकटीकृतचिद्घनमूर्तिं
त्वां भजतो रघुनन्दन देहि दयाघन मे स्वपदाम्बुजदास्यम्॥ १

पद्मदलायतलोचन हे रघुवंशविभूषण देव दयालो
निर्मलनीरदनीलतनोऽखिललोकहृदम्बुजभासक भानो।
कोमलगात्र पवित्रपदाब्जरजःकणपावितगौतमकान्त
त्वां भजतो रघुनन्दन देहि दयाघन मे स्वपदाम्बुजदास्यम् ॥ २

पूर्ण परात्पर पालय मामतिदीनमनाथमनन्त सुखाब्धे
प्रावृडदभ्रतटित्सुमनोहरपीतवराम्बर राम नमस्ते।
कामविभञ्जन कान्ततरानन काञ्चनभूषण रत्नकिरीटं
त्वां भजतो रघुनन्दन देहि दयाघन मे स्वपदाम्बुजदास्यम्॥ ३

दिव्यशरच्छशिकान्तिहरोज्ज्वलमौक्तिकमाल विशालसुमौले
कोटिरविप्रभ चारुचरित्र पवित्रविचित्रधनुःशरपाणे।
चण्डमहाभुजदण्डविखण्डितराक्षसराजमहागजदण्डं
त्वां भजतो रघुनन्दन देहि दयाघन मे स्वपदाम्बुजदास्यम्॥ ४

दोष विहिंस्रभुजङ्गसहस्रसुरोममहानलकीलकलापे
जन्मजरामरणोर्मिमनोमदमन्मथनक्रविचक्रभवाब्धौ।
दुःखनिधौ च चिरं पतितं कृपयाऽद्य समुद्धर राम ततो मां
त्वां भजतो रघुनन्दन देहि दयाघन मे स्वपदाम्बुजदास्यम्॥ ५

संसृतिघोरमदोत्कटकुञ्जरतृट्क्षुदनीरदपिण्डिततुण्डं
दण्डकरोन्मथितं च रजस्तम उन्मदमोहपदोज्झितमार्तम्।
दीनमनन्यगतिं कृपणं शरणागतमाशु विमोचय मूढं
त्वां भजतो रघुनन्दन देहि दयाघन मे स्वपदाम्बुजदास्यम्॥ ६

जन्मशतार्जितपापसमन्वितहृत्कमले पतिते पशुकल्पे
हे रघुवीर महारणधीर दयां कुरु मय्यतिमन्दमनीषे।
त्वं जननी भगिनी च पिता मम तावदसि त्ववितासि कृपालो
त्वां भजतो रघुनन्दन देहि दयाघन मे स्वपदाम्बुजदास्यम्॥ ७

त्वां तु दयालुमकिञ्चनवत्सलमुत्पलहारमपारमुदारं
राम विहाय कमन्यमनामयमीश जनं शरणं ननु यायाम्।
त्वत्पदपद्ममतः श्रितमेव मुदा खलु देव सदाऽव ससीतं
त्वां भजतो रघुनन्दन देहि दयाघन मे स्वपदाम्बुजदास्यम्॥ ८

यः करुणामृतसिन्धुरनाथजनोत्तमबन्धुरजोत्तमकारी
भक्तभयोर्मिभवाब्धितरी सरयूतटिनीतटचारुविहारी।
तस्य रघुप्रवरस्य निरन्तरमष्टकमेतदनिष्टहरं वै
यस्तु पठेदमरः स नरो लभतेऽच्युतरामपदाम्बुजदास्यम् ॥ ९

—*—

# श्रीसीतारामस्तोत्रम्

## हनुमत्कृतम्

अयोध्यापुरनेतारं मिथिलापुरनायिकाम्।
राघवाणामलङ्कारं वैदेहानामलङ्क्रियाम्॥ १

रघूणां कुलदीपं च निमीनां कुलदीपिकाम्।
सूर्यवंशसमुद्भूतं सोमवंशसमुद्भवाम्॥ २

पुत्रं दशरथस्याद्यं पुत्रीं जनकभूपतेः।
वसिष्ठानुमताचारं शतानन्दमतानुगाम्॥ ३

कौसल्यागर्भसम्भूतं वेदिगर्भोदितां स्वयम्।
पुण्डरीकविशालाक्षं स्फुरदिन्दीवरेक्षणाम्॥ ४

चन्द्रकान्ताननाम्भोजं चन्द्रबिम्बोपमाननाम्।
मत्तमातङ्गगमनं मत्तहंसवधूगताम्॥ ५

चन्दनार्द्रभुजामध्यं कुङ्कुमार्द्रभुजस्थलीम्।
चापालङ्कृत हस्ताब्जं पद्मालङ्कृत पाणिकाम्॥ ६

शरणागत गोप्तारं प्रणिपात प्रसादिकाम्।
कालमेघनिभं रामं कार्तस्वर समप्रभाम्॥ ७

दिव्यसिंहासनासीनं दिव्यस्रग्वस्त्रभूषणाम्।
अनुक्षणं कटाक्षाभ्यां अन्योन्येक्षणकांक्षिणौ॥ ८

अन्योन्यसदृशाकारौ त्रैलोक्यगृहदम्पती।
इमौ युवां प्रणम्याहं भजाम्यद्य कृतार्थताम्॥ ९

अनेन स्तौति यः स्तुत्यं रामं सीता च भक्तितः।
तस्य तौ तनुतां पुण्याः संपदः सकलार्थदाः॥ १०

अस्य श्रीरामचन्द्रस्य जानक्याश्च विशेषतः।
कृतं हनुमता पुण्यं स्तोत्रं सद्योविमुक्तिदम्॥
यः पठेत्प्रातरुत्थाय सर्वान्कामानवाप्नुयात्॥ ११

—*—

श्रीभरद्वाजमहर्षिप्रणीतः

## श्रीरामचन्द्रवेदपादस्तवः

श्रीमद्रामं रघूत्तंसं सच्चिदानन्दलक्षणम्।
भवन्तं करुणावन्तं गाये त्वां मनसा गिरा॥ १

रामे दूर्वादलश्यामे जानकी कनकोज्ज्वला।
भाति मद्दैवते मेघे विद्युल्लेखेव भास्वरा॥ २

त्वदन्यं न भजे राम निष्कामोऽन्ये भजन्तु तान्।
भक्तेभ्यो ये पुरा देवा आयुः कीर्तिं प्रजां ददुः॥ ३

भजनं पूजनं राम करिष्यामि तवानिशम्।
श्रियं नेच्छामि संसारात् भयं विन्दति मामिह ॥ ४

श्रीराम जानकीजाने भुवने भवने वने।
स्वभक्तकुलजातानां अस्माकं भविता भव ॥ ५

राम रामेति रामेति वदन्तं विकलं भवान्।
यमदूतैरनुक्रान्तं वत्सं गौरिव धावति ॥ ६

स्वच्छन्दचारिणं दीनं राम रामेति वादिनम्।
भवान्मामनुनिम्नेन यथा वारीव धावति ॥ ७

राम त्वं हृदये येषां सुखं लभ्यं वनेऽपि तैः।
मण्डं च नवनीतं च क्षीरं सर्पिर्मधूदकम् ॥ ८

प्रार्थये त्वां रघूत्तंस मा भून्मम कदाचन।
सर्वतीर्थेषु सर्वत्र पापेभ्यश्च प्रतिग्रहः ॥ ९

सर्वे मदर्थं कुरुतोपकारं श्रीराममाकर्णय कर्ण नित्यम्।
मूर्धन्नमालोकय नेत्र जिह्वे स्तुहि श्रुतं गर्तसदं युवानम् ॥ १०

भवान् रघूत्तंस तु दैवतं मे यं सच्चिदानन्दघनस्वरूपम्।
एकं परं ब्रह्म वदन्ति नित्यं वेदान्तविज्ञानसुनिश्चितार्थाः ॥ ११

भवत्कृपापाङ्गविलोकितेन वैकुण्ठवासः क्रियते जनेन।
ज्ञात्वा भवन्तं शरणागतोऽस्मि यस्मात्परं नापरमस्ति किञ्चित् ॥ १२

दीनान्भवद्भक्तकुलप्रसूतान्भवत्पादाराधनहीनचित्तान्।
अनाथबन्धो करुणैकसिन्धो पितेव पुत्रान् प्रति नो जुषस्व ॥ १३

भवान् भयव्याघ्रभयाभिभूतं जराभिभूतं सह लक्ष्मणेन।
सदैव मां रक्षतु राघवेश पश्चात्पुरस्तादधरादुदक्तात् ॥ १४

कामाद्यपथ्येन विवर्धमानं रोगं मदीयं भवनामधेयम्।
दूरीकुरु त्वं यदहं त्रिलोक्यां भिषक्तमं त्वां भिषजां शृणोमि ॥ १५

श्रीरामचन्द्रः स जयत्यजस्रं लङ्कापुरीद्रोणगिरौ पयोधौ।
यस्य प्रसादादभवद्धनूमान् अणोरणीयान् महतो महीयान्॥ १६

श्रीराम रामेति रघूत्तमेति नामानि जल्पेद्यदि तस्य तत्क्षणात्।
दिशो द्रवन्त्येव युयुत्सवः सदा भियं दधाना हृदयेषु शत्रवः ॥ १७

अनादिमव्यक्तमनन्तमाद्यं स्वयं परं ज्योतिषमप्रमेयम्।
विलोकये दाशरथे कदा त्वां आदित्यवर्णं तमसः परस्तात्॥ १८

श्रीराघव स्वीयपदारविन्दे सेवां भवान्नः सततं ददातु।
वयं स्वजन्मान्तरसंचितानि ययाति विश्वा दुरिता तरेम॥ १९

भो चित्त चेत्कामयसे विभूतिं तमेव संप्रार्थय वीरमेकम्।
रघूत्तमं श्रीरमणं सदा यः श्रीणामुदारो धरुणो रयीणाम्। २०

वन्देऽरविन्देक्षणमम्बुदाभमाकर्णनेत्रं सुकुमारगात्रम्।
यं जानकी हर्षयती वनेपि प्रियं सखायं परिषस्वजाना॥ २१

सीताजाने नैव जाने त्वदन्यं त्यक्तश्रीस्त्रीपुत्रकामः सदाऽहम्।
त्वां स्मृत्वाऽन्ते देवयानाधिरूढ स्तत्त्वायामि ब्रह्मणा वन्दमानः ॥ २२

अहं भरद्वाजमुनिर्निरन्तरं श्रीराममेकं जगदेकनायकम्।
संवर्णये काव्यरसादिवित्तमं कविं कवीनामुपमश्रवस्तमम्॥ २३

पठन्ति स्तुतिं ये नरा ऋद्धिकामाः समृद्धिं चिरायुष्यमायुष्यकामाः।
लभन्ते ह निस्संशयं पुत्रकामाः लभन्ते ह पुत्रान् लभन्ते ह पुत्रान्॥ २४

वेदपादाभिधस्तोत्रं स्नात्वा भक्त्या सकृन्नरः।
यः पठेद्राघवस्याग्रे जीवाति शरदः शतम्॥ २५

—*—

# सप्तर्षिरामायणम्

कश्यपः -

जातः श्री रघुनायको दशरथान्मुन्याश्रयात्ताटकां
हत्वा रक्षितकौशिकक्रतुवरः कृत्वाप्यहल्यां शुभाम्।
भङ्क्त्वा रुद्रशरासनं जनकजां पाणौ गृहीत्वा ततो
जित्वार्धाध्वनि भार्गवं पुनरगात् सीतासमेतः पुरीम्॥ १

अत्रिः -

दास्या मन्थरया दयारहितया दुर्भेदिता कैकयी
श्रीरामप्रथमाभिषेकसमये माताऽप्ययाचद्वरौ।
भर्तारं, भरतः प्रशास्तु धरणीं रामो वनं गच्छता-
दित्याकर्ण्य स चोत्तरं न हि ददौ दुःखेन मूर्च्छां गतः॥ २

भरद्वाजः -

श्रीरामः पितृशासनाद्वनमगात् सौमित्रिसीतान्वितो
गङ्गां प्राप्य जटां निबद्ध्य सगुहः सच्चित्रकूटे वसन्।
कृत्वा तत्र पितृक्रियां सभरतो दत्वाऽभयं दण्डके
प्राप्यागस्त्यमुनीश्वरं तदुदितं धृत्वा धनुश्चाक्षयम्॥ ३

विश्वामित्रः -

गत्वा पञ्चवटीमगस्त्यवचनाद्दत्वाऽभयं मौनिनां
छित्वा शूर्पणखाऽस्यकर्णयुगलं त्रातुं समस्तान् मुनीन्।
हत्वा तं च खरं सुवर्णहरिणं भित्वा तथा वालिनं
तारारत्नमवैरिराज्यमकरोत् सर्वं च सुग्रीवसात्॥ ४

गौतमः -

दूतो दाशरथेः सलीलमुदधिं तीर्त्वा हनूमान् महान्
 दृष्ट्वाऽशोकवने स्थितां जनकजां दत्वाऽङ्गुलेर्मुद्रिकाम्।
अक्षादीनसुरान्निहत्य महतीं लङ्कां च दग्ध्वा पुनः
 श्रीरामं च समेत्य देव जननी दृष्टा मयेत्यब्रवीत्॥ ५

जमदग्निः -

रामो बद्धपयोनिधिः कपिवरैर्वीरैर्नलाद्यैर्वृतो
 लङ्कां प्राप्य सकुम्भकर्णतनुजं हत्वा रणे रावणम्।
तस्यां न्यस्य विभीषणं पुनरसौ सीतापतिः पुष्पका-
 रूढः सन् पुरमागतः सभरतः सिंहासनस्थो बभौ॥ ६

वसिष्ठः -

श्रीरामो हयमेधमुख्यमखकृत् सम्यक् प्रजाः पालयन्
 कृत्वा राज्यमथानुजैश्च सुचिरं भूरि स्वधर्मान्वितौ।
पुत्रौ भ्रातृसमन्वितौ कुशलवौ संस्थाप्य भूमण्डले
 सोऽयोध्यापुरवासिभिश्च सरयूस्नातः प्रपेदे दिवम्॥ ७

सर्वे ऋषयः -

श्रीरामस्य कथासुधातिमधुरान् श्लोकानिमानुत्तमान्
 ये शृण्वन्ति पठन्ति च प्रतिदिनं तेऽघौघविध्वंसिनः।
श्रीमन्तो बहुपुत्रपुत्रसहिता भुक्त्वेह भोगांश्चिरं
 भोगान्ते तु सदार्चितं सुरगणैर्विष्णोर्लभन्ते पदम्॥ ८

—*—

# श्रीरामाष्टप्रासस्तुतिः

कर्ता कञ्जभवात्मना त्रिजगतां भर्ता मुकुन्दात्मना
हर्ता यश्च हरात्मनाघमखिलं स्मर्ता च यस्योज्झति।
धर्तारं धनुषः शरैस्सह तमादर्तारमार्तान्वयं
सर्तारोप्यपथे श्रिता रघुपतिं वर्तामहे निर्भयाः ॥ १

कारागारसमानसंसृतिनिराकाराय सच्चिन्मयं
धीरा यं शरणं व्रजन्ति भुवने नीरागमोहस्मयाः।
तारादेवरमुख्यवानरपरीवाराय नीराकर-
स्फाराटोपहराय रावणजिते वीराय तस्मै नमः ॥ २

किं देवैरितरैः प्रपन्नभरणे सन्देहकृद्भिर्नृणां
विन्देयं यदि तान् विमूढ इति मां निन्देयुरार्या न किम्।
किं देयं किमदेयमित्यविदुरं तं देहिनामिष्टदं
वन्दे कञ्चन वञ्चनामृगरिपुं मन्देतरश्रेयसे ॥ ३

गात्रेषु श्रममग्निमान्द्यमुदरे नेत्रे जडत्वं सह
श्रोत्रेणादिशती जरा विशति चेत् कोऽत्रेरयेन्मास्त्विति।
दात्रे यत्तु नमोऽधुनाऽपि कलये स्तोत्रेण वित्ताशया
मैत्रे जन्मजुषे कुले कृतनतिर्नेत्रे तदुज्झाम्यहम् ॥ ४

जातो यो मिहिरान्वये नियमिना नीतो मखं रक्षितुं
शातोदर्यपि येन गौतममुनेः पूतोपलत्वं जहौ।
छातोमापतिकार्मुकं सदसि यं सीतोपलेभे पतिं
नातो राघवतोऽपरं शरणमित्यातोद्यमाघोषये ॥ ५

नाहं पुत्रकलत्रमित्रविषये स्नेहं विहातुं क्षमः
साहङ्कारमिदं मनश्च न कृतोत्साहं गुरूपासने।

देहं नश्वरमन्तकस्य न दया हा हन्त तेनोज्झितुं
मोहं नौमि रुचा विडम्बितपयोवाहं रघूणां पतिम् ॥ ६

श्रीहीनं व्यथयन्ति ये धनमदादेहीति याहीति तान्
वाहीकानिव न स्मराम्यपि पतीन् दोहीयसीनां गवाम् ।
देहीतीरितमन्तरेण ददते यो ह्रीहितं देहिनां
पाहीति ब्रुवतो रघूद्वह दयावाही स सेव्योऽसि मे ॥ ७

श्रुत्वा वेदशिरांसि तन्निगदितं मत्वा यथावन्नरः
स्मृत्वाऽभीक्ष्णमिदं लभेत विशयं हित्वाऽऽत्मसाक्षात्कृतिम् ।
यत्त्वाह क्रममित्थमागमशिरस्तत्त्वावबोधोदये
सत्वाकार तदेव राम सुलभं न त्वामनत्वा नृणाम् ॥ ८

हन्तुं प्राक्तनदुष्कृतानि जगतां मन्तुं भृशानित्यतां
कन्तुं जेतुममुत्र चेह समुपारन्तुं फलेष्वादरात् ।
यन्तुं सेन्द्रियजातमागमशिरो गन्तुं च वक्त्राद्गुरोः
तन्तुं चण्डकरान्वयस्य कलये तं तुङ्गचापं प्रभुम् ॥ ९

—*—

## श्रीरामकृष्णयुगलस्तुतिः

त्रातः काकोदरो येन द्रोग्धापि करुणात्मना ।
पूतनामारणख्यातः स मेऽस्तु शरणं प्रभुः ॥ १

मर्दितरावणकंसौ सरयूयमुनाविहारिणौ देवौ ।
अर्पितविप्रकुमारौ हरिपतिहरिकेतनप्रियौ वन्दे ॥ २

यः पूतनामारणलब्धकीर्तिः काकोदरो येन विनीतदर्पः ।
यशोदयालङ्कृतमूर्तिरव्यात्पतिर्यदूनामथवा रघूणाम् ॥ ३

—*—

## बलरामस्तुतिः

निष्पात्याशु हिमांशुमण्डलमधः पीत्वा तदन्तः सुधां
कृत्वैनं चषकं हसन्निति हलापानाय कौतूहलात्।
भो देव द्विजराजि मादृशि सुरास्पर्शोऽपि न श्रेयसे
मां मुञ्चेति तदर्थितो हलधरः पायादपायाज्जगत्॥ १

प्रेमोन्मामितरेवतीमुखगतामास्वाद्य कादम्बरीं
उन्मत्तं क्वचिदुत्पतत्क्वचिदपि भ्राम्यत्क्वचित्प्रस्खलत्।
रक्तापाङ्गमधीरलाङ्गलमलिश्यामाम्बराडम्बरं
क्लेशं नः कवलीकरोतु सकलं पाकाभिरामं महः॥ २

उष्णालु क्वचिदर्कधामनि मनाङ् निद्रालु शीतानिले
हालानां गृहयालु चुम्बदसकृल्लज्जालु जायामुखम्।
नित्यं निष्पतयालु तिर्यगवनीशय्याशयालु क्षणं
गीतेभ्यः स्पृहयालु धाम धवलं दीने दयालु श्रये॥ ३

—*—

श्रीनिम्बार्काचार्यविरचितं

## श्रीकृष्णप्रातःस्मरणम्

प्रातः स्मरामि युगकेलिरसाभिषिक्तं
बृन्दावनं सुरमणीयमुदारवृक्षम्।
सौरीप्रवाहवृतमात्मगुणप्रकाशं
युग्मांध्रिरेणुकणिकाञ्चितसर्वसत्वम्॥ १

प्रातः स्मरामि दधिघोषविनीतनिद्रं
निद्रावसान रमणीयमुखानुरागम्।

उन्निद्रपद्मनयनं नवनीरदाभं
हृद्यानवद्यललनाञ्चितवामभागम्।। २

प्रातः स्मरामि शयनोत्थितयुग्मरूपं
सर्वेश्वरं सुखकरं रसिकेशभूषम्।
अन्योन्यकेलिरसचिह्नचमत्कृताङ्गं
सख्यावृतं सुरतकाममनोहरञ्च।। ३

प्रातर्भजे सुरतसारपयोधिचिह्न
गण्डस्थलेन नयनेन च सन्दधानौ।
रत्याद्यशेषशुभदौ समुपेतकामौ
श्रीराधिकावरपुरन्दरपुण्यपुञ्जौ।। ४

प्रातर्धरामि हृदयेन हृदीक्षणीयं
युग्मस्वरूपमनिशं सुमनोरमञ्च।
लावण्यधामललनाभिरुपेयमानं
उत्थाप्यमानमनुमेयमशेषवेषैः।। ५

प्रातर्ब्रवीमि युगलौ वपुषाभिरामौ
राधामुकुन्दपशुपालसुतौ वरिष्ठौ।
गोविन्दचन्द्रवृषभानुसुतावरिष्ठौ
सर्वेश्वरौ स्वजनपालनतत्परेशौ।। ६

प्रातर्नमामि युगलाङ्घ्रिसरोजकोशं
अष्टाङ्गयुक्तवपुषा भवदुःखदारम्।
बृन्दावने सुविचरन्तमुदारचिह्नं
लक्ष्म्या उरोज धृतकुङ्कुमरागपुष्टम्।। ७

प्रातर्नमामि वृषभानुसुतापदाब्जं
नेत्रालिभिः परिणुतं व्रजसुन्दरीणाम्।
प्रेमातुरेण हरिणा सुविशारदेन
श्रीमद्व्रजेशतनयेन सदाभिवन्द्यम्॥ ८

सञ्चिन्तनीय मनुमृग्यमभीष्टदोहं
संसारतापशमनं चरणं महार्हम्।
नन्दात्मजस्य सततं मनसा गिरा च
संसेवयामि वपुषा प्रणयेन रम्यम्॥ ९

—*—

वेदकृता

## श्रीकृष्णस्तुतिः

जय जय जह्यजामजित दोषगृभीतगुणां
त्वमसि यदात्मना समवरुद्धसमस्तभगः।
अगजगदोकसामखिलशक्त्यवबोधक ते
क्वचिदजयाऽत्मना च चरतोऽनुचरेन्निगमः॥ १

बृहदुपलब्धमेतदवयन्त्यवशेषतया
यत उदयास्तमयौ विकृतेर्मृदिवाविकृतात्।
अत ऋषयो दधुस्त्वयि मनोवचनाचरितं
कथमयथा भवन्ति भुवि दत्तपदानि नृणाम्॥ २

इति तव सूरयस्त्र्यधिपतेऽखिललोकमल 7
क्षपणकथामृताब्धिमवगाह्य तपांसि जहुः।
किमुत पुनः स्वधामविधुताशयकालगुणाः
परम भजन्ति ये पदमजस्रसुखानुभवम्॥ ३

दृतय इव श्वसन्त्यसुभृतो यदि तेऽनुविधा
महदहमादयोऽण्डमसृजन् यदनुग्रहतः ।
पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः
सदसतः परं त्वमथ यदेष्ववशेषमृतम् ॥ ४

उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः
परिसरपद्धतिं हृदयमारुणयो दहरम् ।
तत उदगादनन्त तव धाम शिरः परमं
पुनरिह यत्समेत्य न पतन्ति कृतान्तमुखे ॥ ५

स्वकृतविचित्रयोनिषु विशन्निव हेतुतया
तरतमतश्चकास्स्यनलवत्स्वकृतानुकृतिः ।
अथ वितथास्वमूष्ववितथं तव धाम समं
विरजधियोऽन्वयन्त्यभिविपण्यव एकरसम् ॥ ६

स्वकृतपुरेष्वमीष्वबहिरन्तरसंवरणं
तव पुरुषं वदन्त्यखिलशक्तिधृतोऽम्शकृतम् ।
इति नृगतिं विविच्य कवयो निगमावपनं
भवत उपासतेऽङ्घ्रिमभवं भुवि विश्वसिताः ॥ ७

दुरवगमात्मतत्त्वनिगमाय तवात्ततनोः
चरितमहामृताब्धिपरिवर्तपरिश्रमणाः ।
न परिलषन्ति केचिदपवर्गमपीश्वर ते
चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ॥ ८

त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियवत्
चरति तथोन्मुखे त्वयि हिते प्रिय आत्मनि च ।
न बत रमन्त्यहो असदुपासनयात्महनो
यदनुशया भ्रमन्त्युरुभये कुशरीरभृतः ॥ ९

निभृतमरुन्मनोऽक्षदृढयोगयुजो हृदि यन्-
मुनय उपासते तदरयोऽपि ययुः स्मरणात्।
स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधियो
वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाः ॥ १०

क इह नु वेद बतावरजन्मलयोऽग्रसरं
यत उदगादृषिर्यमनु देवगणा उभये।
तर्हि न सन्न चासदुभयं न च कालजवः
किमपि न तत्र शास्त्रमवकृष्य शयीत यदा ॥॥ ११

जनिमसतः सतो मृतिमुतात्मनि ये च भिदां
विपणमृतं स्मरन्त्युपदिशन्ति त आरुपितैः।
त्रिगुणमयः पुमानिति भिदा यदबोधकृता
त्वयि न ततः परत्र स भवेदवबोधरसे ॥ १२

सदिव मनस्त्रिवृत्त्वयि विभात्यसदामनुजात्
सदभिमृशन्त्यशेषमिदमात्मतयाऽऽत्मविदः ।
न हि विकृतिं त्यजन्ति कनकस्य तदात्मतया
स्वकृतमनुप्रविष्टमिदमात्मतयावसितम् ॥ १३

तव परि ये चरन्त्यखिलसत्त्वनिकेततया
त उत पदाक्रमन्त्यविगणय्य शिरो निर्ऋतेः।
परिवयसे पशूनिव गिरा विबुधानपि तान्
त्वयि कृतसौहृदाः खलु पुनन्ति न ये विमुखाः ॥ १४

त्वमकरणः स्वराडखिलकारकशक्तिधरः
तव बलिमुद्वहन्ति समदन्त्यजयाऽनिमिषाः ।
वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो
विदधति यत्र ये त्वधिकृता भवतश्चकिताः ॥ १५

स्थिरचरजातयः स्युरजोत्थनिमित्तयुजो
विहर उदीक्षया यदि परस्य विमुक्त ततः ।
नहि परमस्य कश्चिदपरो न परश्च भवेत्
वियत इवापदस्य तव शून्यतुलां दधतः ॥ १६

अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगताः
तर्हि न शास्यतति नियमो ध्रुव नेतरथा ।
अजनि च यन्मयं तदविमुच्य यिन्तृ भवेत्
सममनुजानतां यदमतं मतदुष्टतया ॥ १७

न घटत उद्भवः प्रकृतिपूरुषयोरजयोः
उभययुजा भन्त्यसुभृतो जलबुद्बुदवत् ।
त्वयि त इमे ततो विविधनामगुणैः परमे
सरित इवार्णवे मधुनि लिल्युरशेषरसाः ॥ १८

नृषु तव मायया भ्रमममीष्ववगत्य भृशं
त्वयि सुधियोऽभवे दधति भावमनुप्रभवम् ।
कथमनुवर्ततां भवभयं तव यद्भ्रुकुटिः
सृजति मुहुस्त्रिणेमिरभवच्छरणेषु भयम् ॥ १९

विजितहृषीकवायुभिरदान्तमनस्तुरगं
य इह यतन्ति यन्तुमतिलोलमुपायखिदः ।
व्यसनशतान्विताः समवहाय गुरोश्चरणं
वणिज इवाज सन्त्यकृतकर्णधरा जलधौ ॥ २०

स्वजनसुतात्मदारधनधामधरासुरथैः
त्वयि सति किं नृणां श्रयत आत्मनि सर्वरसे ।
इति सदजानतां मिथुनतो रतये चरतां
सुखयति कोऽन्विह स्वविहते स्वनिरस्तभगे ॥ २१

भुवि पुरुपुण्यतीर्थसदनान्यृषयो विमदाः
त उत भवत्पदाम्बुजहृदोऽघभिदङ्घ्रिजलाः ।
दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे
न पुनरुपासते पुरुषसारहरावसथान् ॥ २२

सत इदमुत्थितं सदिति चेन्ननु तर्कहतं
व्यभिचरति क्व च क्व च मृषा न तथोभययुक् ।
व्यवहृतये विकल्प इषितोऽन्धपरम्परया
भ्रमयति भारती त उरुवृत्तिभिरुक्थजडान् ॥ २३

न यदिदमग्र आस न भविष्यदतोनिधना
दनुमितमन्तरा त्वयि विभाति मृषैकरसे ।
अत उपमीयते द्रविणजातिविकल्पपथैः
वितथमनोविलासमृतमित्यवयन्त्यबुधाः ॥ २४

स यदजया त्वजामनुशयीत गुणांश्च जुषन्
भजति सरूपतां तदनु मृत्युमपेतभगः ।
त्वमुत जहासि तामहिरिव त्वचमात्तभगो
महसि महीयसेऽष्टगुणितेऽपरिमेयभगः ॥ २५

यदि न समुद्धरन्ति यतयो हृदि कामजटा
दुरधिगमोऽसतां हृदि गतोऽस्मृतकण्ठमणिः ।
असुतृपयोगिनामुभयतोऽप्यसुखं भगवन्
अनपगतान्तकादनधिरूढपदाद्भवतः ॥ २६

त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयोः
गुणविगुणान्वयांस्तर्हि देहभृतां च गिरः ।
अनुयुगमन्वहं सगुणगीतपरम्परया
श्रवणभृतो यतस्त्वमपवर्गगतिर्मनुजैः ॥ २७

द्युपतय एव ते न ययुरन्तमनन्ततया
त्वमपि यदन्तराण्डनिचया ननु सावरणाः ।
ख इव रजांसि वान्ति वयसा हि वच्छ्रुतयः
त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः ॥ २८

(श्रीमद्भागवततः)

—*—

भीष्मकृता

## श्रीकृष्णस्तुतिः

इति मतिरुपकल्पिता वितृष्णा भगवति सात्वतपुङ्गवे विभूम्नि ।
स्वसुखमुपगते क्वचिद्विहर्तुं प्रकृतिमुपेयुषि यद्भवप्रवाहः ॥ १

त्रिभुवनकमनं तमालवर्णं रविकरगौरवराम्बरं दधाने ।
वपुरलककुलावृताननाब्जं विजयसखे रतिरस्तु मेऽनवद्या ॥ २

युधि तुरगरजोविधूम्रविष्वक्कचलुलितश्रमवार्यलङ्कृतास्ये ।
मम निशितशरैर्विभिद्यमानत्वचि विलसत्कवचेऽस्तु कृष्ण आत्मा ॥ ३

सपदि सखिवचो निशम्य मध्ये निजपरयोर्बलयो रथं निवेश्य ।
स्थितवति परसैनिकायुरक्ष्णा हृतवति पार्थसखे रतिर्ममास्तु ॥ ४

व्यवहितपृतनामुखं निरीक्ष्य स्वजनवधाद्विमुखस्य दोषबुद्ध्या ।
कुमतिमहरदात्मविद्यया यश्चरणरतिः परमस्य तस्य मेऽस्तु ॥ ५

स्वनिगममपहाय मत्प्रतिज्ञामृतमधिकर्तुमवप्लुतो रथस्थः ।
धृतरथचरणोऽभ्ययाच्चलद्गुर्हरिरिव हन्तुमिभं गतोत्तरीयः ॥ ६

शितविशिखहतो विशीर्णदंशः क्षतजपरिप्लुत आततायिनो मे ।
प्रसभमभिससार मद्वधार्थं स भवतु मे भगवान् गतिर्मुकुन्दः ॥ ७

विजयरथकुटुम्ब आत्ततोत्रे धृतहयरश्मिनि तच्छ्रियेक्षणीये।
भगवति रतिरस्तु मे मुमूर्षोर्यमिह निरीक्ष्य हता गताः सरूपम्॥ ८

ललितगतिविलासवल्गुहासप्रणयनिरीक्षणकल्पितोरुमानाः।
कृतमनुकृतवत्य उन्मदान्धाः प्रकृतिमगन् किल यस्य गोपवध्वः॥ ९

मुनिगणनृपवर्यसंकुलेऽन्तः सदसि युधिष्ठिरराजसूय एषाम्।
अर्हणमुपपेद ईक्षणीयो मम दृशि गोचर एष आविरात्मा॥ १०

तमिममहमजं शरीरभाजां हृदि हृदि धिष्ठितमात्मकल्पितानाम्।
प्रतिदृशमिव नैकधार्कमेकं समधिगतोऽस्मि विधूतभेदमोहः॥ ११

(श्रीमद्भागवतात्)

—*—

## कुन्तीकृता
## श्रीकृष्णस्तुतिः

नमस्ये पुरुषं त्वाद्यमीश्वरं प्रकृतेः परम्।
अलक्ष्यं सर्वभूतानामन्तर्बहिरवस्थितम्॥ १

मायाजवनिकाच्छन्नमज्ञाधोक्षजमव्ययम्।
न लक्ष्यसे मूढदृशा नटो नाट्यधरो यथा॥ २

तथा परमहंसानां मुनीनाममलात्मनाम्।
भक्तियोगविधानार्थं कथं पश्येमहि स्त्रियः॥ ३

कृष्णाय वासुदेवाय देवकीनन्दनाय च।
नन्दगोपकुमाराय गोविन्दाय नमो नमः॥ ४

नमः पङ्कजनाभाय नमः पङ्कजमालिने।
नमः पङ्कजनेत्राय नमस्ते पङ्कजाङ्घ्रये॥ ५

यथा हृषीकेश खलेन देवकी कंसेन रुद्धाऽतिचिरं शुचार्पिता।
विमोचिताहं च सहात्मजा विभो त्वयैव नाथेन मुहुर्विपद्गणात्॥ ६

विषान्महाग्नेः पुरुषाददर्शनादसत्सभाया वनवासकृच्छ्रतः।
मृधे मृधेऽनेकमहारथास्त्रतो द्रौण्यस्त्रतश्चास्म हरेऽभिरक्षिताः॥ ७

विपदः सन्तु नः शश्वत्तत्र तत्र जगद्गुरो।
भवतो दर्शनं यत् स्यादपुनर्भवदर्शनम्॥ ८

जन्मैश्वर्यश्रुतश्रीभिरेधमानमदः पुमान्।
नैवार्हत्यभिधातुं वै त्वामकिञ्चन गोचरम्॥ ९

नमोऽकिञ्चनवित्ताय निवृत्तगुणवृत्तये।
आत्मारामाय शान्ताय कैवल्यपतये नमः॥ १०

मन्ये त्वां कालमीशानमनादिनिधनं विभुम्।
समं चरन्तं सर्वत्र भूतानां यन्मिथः कलिः॥ ११

न वेद कश्चिद्भगवंश्चिकीर्षितं तवेहमानस्य नृणां विडम्बनम्।
न यस्य कश्चिद्दयितोऽस्ति कर्हिचिद्द्वेष्यश्च यस्मिन्विषमा मतिर्नृणाम्॥ १२

जन्म कर्म च विश्वात्मन्नजस्याकर्तुरात्मनः।
तिर्यङ्नृषिषु यादःसु तदत्यन्तविडम्बनम्॥ १३

गोप्याददे त्वयि कृतागसि दाम तावत्
या ते दशाऽश्रुकलिलाञ्जनसंभ्रमाक्षम्।
वक्त्रं निनीय भयभावनया स्थितस्य
सा मां विमोहयति भीरपि यद्बिभेति॥ १४

केचिदाहुरजं जातं पुण्यश्लोकस्य कीर्तये।
यदोः प्रियस्यान्ववाये मलयस्येव चन्दनम्॥ १५

अपरे वसुदेवस्य देवक्यां याचितोऽभ्यगात्।
अजस्त्वमस्य क्षेमाय वधाय च सुरद्विषाम्॥ १६

भारावतरणायान्ये भुवो नाव इवोदधौ।
सीदन्त्या भूरिभारेण जातो ह्यात्मभुवार्थितः॥ १७

भवेऽस्मिन् क्लिश्यमानानामविद्याकामकर्मभिः।
श्रवणस्मरणार्हाणि करिष्यन्निति केचन॥ १८

शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनाः।
त एव पश्यन्त्यचिरेण तावकं भवप्रवाहोपरमं पदाम्बुजम्॥ १९

अप्यद्य नस्त्वं स्वकृतेहितप्रभो जिहाससि स्वित् सुहृदोऽनुजीविनः।
येषां न चान्यद्भवतः पदाम्बुजात् परायणं राजसु योजितांहसाम्॥ २०

के वयं नामरूपाभ्यां यदुभिः सह पाण्डवाः।
भवतोऽदर्शनं यर्हि हृषीकाणामिवेशितुः॥ २१

नेयं शोभिष्यते तत्र यथेदानीं गदाधर।
त्वत्पदैरङ्किता भाति स्वलक्षणविलक्षितैः॥ २२

इमे जनपदाः स्वृद्धाः सुपक्वौषधिवीरुधः।
वनाद्रिनद्युदन्वन्तो ह्येधन्ते तव वीक्षितैः॥ २३

अथ विश्वेश विश्वात्मन् विश्वमूर्ते स्वकेषु मे।
स्नेहपाशमिमं छिन्धि दृढं पाण्डुषु वृष्णिषु॥ २४

त्वयि मेऽनन्यविषया मतिर्मधुपतेऽसकृत्।
रतिमुद्वहतादद्धा गङ्गेवौघमुदन्वति॥ २५

श्रीकृष्ण कृष्णसख वृष्ण्यृषभावनिध्रुग्
राजन्यवंशदहनानपवर्गवीर्य।

गोविन्द गोद्विजसुरार्तिहरावतार
योगेश्वराखिलगुरो भगवन् नमस्ते ॥ (श्रीमद्भागवतत:)

—*—

देवकृता

# गर्भगतकृष्णस्तुतिः

सत्यव्रतं सत्यपरं त्रिसत्यं सत्यस्य योनिं निहितं च सत्ये।
सत्यस्य सत्यमृतसत्यनेत्रं सत्यात्मकं त्वां शरणं प्रपन्नाः ॥ १

एकायनोऽसौ द्विफलस्त्रिमूलश्चतूरसः पञ्चविधःषडात्मा।
सप्तत्वगष्टविटपो नवाक्षो दशच्छदी द्विखगो ह्यादिवृक्षः ॥ २

त्वमेक एवास्य सतः प्रसूतिस्त्वं सन्निधानं त्वमनुग्रहश्च।
त्वन्मायया संवृतचेतसस्त्वां पश्यन्ति नाना न विपश्चितो ये ॥ ३

बिभर्षि रूपाण्यवबोध आत्मा क्षेमाय लोकस्य चराचरस्य।
सत्त्वोपपन्नानि सुखावहानि सतामभद्राणि मुहुः खलानाम् ॥ ४

त्वय्यम्बुजाक्षाखिलसत्त्वधाम्नि समाधिनावेशितचेतसैके।
त्वत्पादपोतेन महत्कृतेन कुर्वन्ति गोवत्सपदं भवाब्धिम् ॥ ५

स्वयं समुत्तीर्य सुदुस्तरं द्युमन् भवार्णवं भीममदभ्रसौहृदाः।
भवत्पदाम्भोरुहनावमत्र ते निधाय याताः सदनुग्रहो भवान् ॥ ६

येऽन्येऽरविन्दाक्ष विमुक्तमानि नस्त्वय्यस्तभावादविशुद्धबुद्धयः।
आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः ॥ ७

तथा न ते माधव तावकाः क्वचिद्भ्रश्यन्ति मार्गात्त्वयि बद्धसौहृदाः।
त्वयाऽभिगुप्ता विचरन्ति निर्भया विनायकानीकपमूर्धसु प्रभो ॥ ८

सत्यं विशुद्धं श्रयते भवान् स्थितौ शरीरिणां श्रेयउपायनं वपुः।
वेदक्रियायोगतपःसमाधिभिस्तवार्हणं येन जनः समीहते॥ ९

सत्त्वं न चेद्धातरिदं निजं भवेद्विज्ञानमज्ञानभिदापमार्जनम्।
गुणप्रकाशैरनुमीयते भवान् प्रकाशते यस्य च येन वा गुणः॥ १०

न नामरूपे गुणजन्मकर्मभिर्निरूपितव्ये तव तस्य साक्षिणः।
मनोवचोभ्यामनुमेयवर्त्मनो देव क्रियायां प्रतियन्त्यथापि हि॥ ११

शृण्वन् गृणन् संस्मरयंश्च चिन्तयन्नामानि रूपाणि च मङ्गलानि ते।
क्रियासु यस्त्वच्चरणारविन्दयोराविष्टचेता न भवाय कल्पते॥ १२

दिष्ट्या हरेऽस्या भवतः पदो भुवो भारोऽपनीतस्तव जन्मनेशितुः।
दिष्ट्याङ्कितां त्वत्पदकैः सुशोभनैः द्रक्ष्याम गां द्यां च तवानुकम्पिताम्॥
१३

न तेऽभवस्येश भवस्य कारणं विना विनोदं बत तर्कयामहे।
भवो निरोधः स्थितिरप्यविद्यया कृता यतस्त्वय्यभयाश्रयात्मनि॥१४

मत्स्याश्वकच्छपनृसिंहवराहहंस राजन्यविप्रविबुधेषु कृतावतारः।
त्वं पासि नस्त्रिभुवनं च यथाधुनेश भारं भुवो हर यदूत्तम वन्दनं ते॥ १५

दिष्ट्याम्ब ते कुक्षिगतः परः पुमानंशेन साक्षाद्भगवान् भवाय नः।
मा भूद्भयं भोजपतेर्मुमूर्षोर्गोप्ता यदूनां भविता तवात्मजः॥ १६

(श्रीमद्भागवततः)

—*—

देवकृता

## गर्भगतकृष्णस्तुतिः ।

जगद्योनिरयोनिस्त्वमनन्तोऽव्यय एव च।
ज्योतिःस्वरूपो ह्यनिशः सगुणो निर्गुणो महान्।। १

भक्तानुरोधात्साकारो निराकारो निरङ्कुशः।
निर्व्यूहो निखिलाधारो निःशङ्को निरुपद्रवः ।। २

निरुपाधिश्च निर्लिप्तो निरीहो निधनान्तकः।
स्वात्मारामः पूर्णकामोऽनिमिषो नित्य एव च।। ३

स्वेच्छामयः सर्वहेतुः सर्वः सर्वगुणाश्रयः ।
सर्वदो दुःखदो दुर्गो दुर्जनान्तक एव च।। ४

सुभगो दुर्भगो वाग्मी दुराराध्यो दुरत्ययः।
वेदहेतुश्च वेदश्च वेदाङ्गो वेदविद्विभुः ।। ५

इत्येव मुक्त्वा देवाश्च प्रणेमुश्च मुहुर्मुहुः ।
हर्षाश्रुलोचनाः सर्वे ववृषुः कुसुमानि च।। ६

द्विचत्वारिंशन्नामानि प्रातरुत्थाय यः पठेत्।
दृढां भक्तिं हरेर्दास्यं लभते वांछितं फलम्।। ७

—*—

ब्रह्मकृता

## श्रीकृष्णस्तुतिः

नौमीड्य तेऽभ्रवपुषे तडिदम्बराय गुञ्जावतंसपरिपिच्छलसन्मुखाय।
वन्यस्रजे कवलवेत्रविषाणवेणु लक्ष्मश्रिये मृदुपदे पशुपाङ्गजाय।। १

अस्यापि देव वपुषो मदनुग्रहस्य स्वेच्छामयस्य न तु भूतमयस्य कोऽपि।
नेशेमहि त्ववसितुं मनसान्तरेण साक्षात्तवैव किमुतात्मसुखानुभूतेः ॥ २

ज्ञाने प्रयासमुदपास्य नमन्त एव
जीवन्ति सन्मुखरितां भवदीयवार्ताम्।
स्थाने स्थिताः श्रुतिगतां तनुवाङ्मनोभिः
ये प्रायशोऽजित जितोऽप्यसि तैस्त्रिलोक्याम्॥ ३

श्रेयःस्रुतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये।
तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूलतुषावघातिनाम्॥ ४

पुरेह भूमन् बहवोऽपि योगिनस्त्वदर्पितेहा निजकर्मलब्धया।
विबुध्य भक्त्यैव कथोपनीतया प्रपेदिरेऽञ्जोऽच्युत ते गतिं पराम्। ५

तथापि भूमन् महिमाऽगुणस्य ते
विबोद्धुमर्हत्यमलान्तरात्मभिः।
अविक्रियात् स्वानुभवादरूपतो
ह्यनन्यबोध्यात्मतया न चान्यथा॥ ६

गुणात्मनस्तेऽपि गुणान् विमातुं हितावतीर्णस्य क ईशिरेऽस्य।
कालेन यैर्वा विमिताः सुकल्पैर्भूपांसवः खे मिहिका द्युभासः॥ ७

तत्तेऽनुकम्पां सुसमीक्षमाणो भुञ्जान एवात्मकृतं विपाकम्।
हृद्वाग्वपुर्भिर्विदधन् नमस्ते जीवेत यो मुक्तिपदे स दायभाक्॥ ८

पश्येश मेऽनार्यमनन्त आद्ये परात्मनि त्वय्यपि मायिमायिनि।
मायां वितत्येक्षितुमात्मवैभवं ह्यहं कियानैच्छमिवार्चिरग्नौ॥ ९

अतः क्षमस्वाच्युत मे रजोभुवो ह्यजानतस्त्वत्पृथगीशमानिनः।
अजाऽवलेपान्धतमोऽन्धचक्षुष एषोऽनुकम्प्यो मयि नाथवानिति॥ १०

क्वाहं तमोमहदहंखचराग्निवार्भूसंवेष्टिताण्डघटसप्तवितस्तिकायः ।
क्वेदृग्विधाविगणिताण्डपराणुचर्यावाताध्वरोमविवरस्य च ते महित्वम् ।।

उत्क्षेपणं गर्भगतस्य पादयोः किं कल्पते मातुरधोऽक्षजागसे ।
किमस्ति नास्तिव्यपदेशभूषितं तवास्ति कुक्षेः कियदप्यनन्तः ।। १२

जगत्त्रयान्तोदधिसंप्लवोदे नारायणस्योदरनाभिनालात् ।
विनिर्गतोऽजस्त्विति वाङ् न वै मृषा किं त्वीश्वरत्वान्न विनिर्गतोऽस्मि ।।

नारायणस्त्वं न हि सर्वदेहिनामात्मास्यधीशाखिललोकसाक्षी ।
नाराणोऽङ्गं नरभूजलायनात्तच्चापि सत्यं न तवैव माया ।। १४

तच्चेज्जलस्थं तव सज्जगद्वपुः किं मे न दृष्टं भगवंस्तदैव ।
किं वा सुदृष्टं हृदि मे तदैव किं नो सपद्येव पुनर्व्यदर्शि ।। १५

अत्रैव मायादमनावतारे ह्यस्य प्रपञ्चस्य बहिः स्फुटस्य ।
कृत्स्नस्य चान्तर्जठरे जनन्या मायात्वमेव प्रकटीकृतं ते ।। १६

यस्य कुक्षाविदं सर्वं सात्मं भाति यथा तथा ।
तत्त्वय्यपीह तत्सर्वं किमिदं मायया विना ।। १७

अद्यैव त्वदृतेऽस्य किं मम न ते मायात्वमादर्शितं
एकोऽसि प्रथमं ततो व्रजसुहृद्वत्साः समस्ता अपि ।
तावन्तोऽसि चतुर्भुजास्तदखिलैः साकं मयोपासिता
स्तावन्त्येव जगन्त्यभूस्तदमितं ब्रह्माद्वयं शिष्यते ।। १८

अजानतां त्वत्पदवीमनात्मन्यात्मात्मना भासि वितत्य मायाम् ।
सृष्टाविवाहं जगतो विधान इव त्वमेषोऽन्त इव त्रिनेत्रः ।। १९

सुरेष्वृषिष्वीश तथैव नृष्वपि तिर्यक्षु यादःस्वपि तेऽजनस्य ।
जन्मासतां दुर्मदनिग्रहाय प्रभो विधातः सदनुग्रहाय च ।। २०

को वेत्ति भूमन् भगवन् परात्मन् योगेश्वरोतीर्भवतस्त्रिलोक्याम्।
क्व वा कथं वा कति वा कदेति विस्तारयन् क्रीडसि योगमायाम्॥ २१

तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम्।
त्वय्येव नित्यसुखबोधतनावनन्ते मायात उद्यदपि यत्सदिवावभाति॥ २२

एकस्त्वमात्मा पुरुषः पुराणः सत्यः स्वयंज्योतिरनन्त आद्यः।
नित्योऽक्षरोऽजस्रसुखो निरञ्जनः पूर्णोऽद्वयो मुक्त उपाधितोऽमृतः॥ २३

एवंविधं त्वां सकलात्मनामपि स्वात्मानमात्मात्मतया विचक्षते।
गुर्वर्कलब्धोपनिषत्सुचक्षुषा ये ते तरन्तीव भवानृताम्बुधिम्॥ २४

आत्मानमेवात्मतयाऽविजानतां तेनैव जातं निखिलं प्रपञ्चितम्।
ज्ञानेन भूयोऽपि च तत्प्रलीयते रज्ज्वामहेर्भोगभवाभवौ यथा॥ २५

अज्ञानसंज्ञौ भवबन्धमोक्षौ द्वौ नाम नान्यौ स्त ऋतज्ञभावात्।
अजस्रचित्यात्मनि केवले परे विचार्यमाणे तरणाविवाहनी॥ २६

त्वामात्मानं परं मत्वा परमात्मानमेव च।
आत्मा पुनर्बहिर्मृग्य अहोऽज्ञजनताऽज्ञता॥ २७

अन्तर्भवेऽनन्त भवन्तमेव ह्यतत्त्यजन्तो मृगयन्ति सन्तः।
असन्तमप्यन्त्यहिमन्तरेण सन्तं गुणं तं किमु यन्ति सन्तः॥ २८

अथापि ते देव पदाम्बुजद्वयप्रसादलेशानुगृहीत एव हि।
जानाति तत्त्वं भगवन् महिम्नो न चान्य एकोऽपि चिरं विचिन्वन्॥ २९

तदस्तु मे नाथ स भूरिभागो भवेऽत्र वान्यत्र तु वा तिरश्चाम्।
येनाहमेकोऽपि भवज्जनानां भूत्वा निषेवे तव पादपल्लवम्॥ ३०

अहोऽतिधन्या व्रजगोरमण्यः स्तन्यामृतं पीतमतीव ते मुदा।
यासां विभो वत्सतरात्मजात्मना यत्तृप्तयेऽद्यापि न चालमध्वराः॥ ३१

अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम्।
यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम्॥ ३२

एषां तु भाग्यमहिमाऽच्युत तावदास्तामेकादशैव हि वयं बत भूरिभागाः।
एतद्धृषीकचषकैरसकृत् पिबामः शर्वादयोऽङ्घ्र्युदजमध्वमृतासवं ते॥ ३३

तद्भूरिभाग्यमिह जन्म किमप्यटव्यां
यद्गोकुलेऽपि कतमाङ्घ्रिरजोभिषेकम्।
यज्जीवितं तु निखिलं भगवान् मुकुन्द-
स्त्वद्यापि यत्पदरजः श्रुतिमृग्यमेव॥ ३४

एषां घोषनिवासिनामुत भवान् किं देव रातेति नः
चेतो विश्वफलात् फलं त्वदपरं कुत्राप्ययन् मुह्यति।
सद्वेषादिव पूतनाऽपि सकुला त्वामेव देवापिता
यद्धामार्थसुहृत्प्रियात्मतनय प्राणाशयास्त्वत्कृते॥ ३५

तावद्रागादयः स्तेनास्तावत् कारागृहं गृहम्।
तावन्मोहोऽङ्घ्रिनिगडो यावत् कृष्ण न ते जनाः॥ ३६

प्रपञ्चं निष्प्रपञ्चोऽपि विडम्बयसि भूतले।
प्रपन्नजनतानन्दसन्दोहं प्रथितुं प्रभो॥ ३७

जानन्त एव जानन्तु किं बहूक्त्या न मे प्रभो।
मनसो वपुषो वाचो वैभवं तव गोचरः॥ ३८

अनुजानीहि मां कृष्ण सर्वं त्वं वेत्सि सर्वदृक्।
त्वमेव जगतां नाथो जगदेतत्तवार्पितम्॥ ३९

श्रीकृष्ण वृष्णिकुलपुष्करजोषदायिन्
क्ष्मानिर्जरद्विजपशूदधिवृद्धिकारिन्।

उद्धर्मशार्वरहर क्षितिराक्षसध्रुग्
आकल्पमार्कमर्हन् भगवन् नमस्ते ॥ ४० (श्रीमद्भागवततः)

—*—

## ब्रह्मदेवकृतं
## कृष्णस्तोत्रम् ।

रक्ष रक्ष हरे मां च निमग्नं कामसागरे ।
दुष्कीर्तिजलपूर्णे च दुष्पारे बहुसङ्कटे ॥ १

भक्तिविस्मृतिबीजे च विपत्सोपानदुस्तरे ।
अतीव निर्मलज्ञानचक्षुःप्रच्छन्नकारणे ॥ २

जन्मोर्मिसंगसहिते योषिन्नक्रौघसङ्कुले ।
रतिस्रोतःसमायुक्ते गम्भीरे घोर एव च ॥ ३

प्रथमामृतरूपे च परिणामविषालये ।
यमालयप्रवेशाय मुक्तिद्वारातिविस्मृतौ ॥ ४

बुद्ध्या तरण्या विज्ञानैरुद्धरास्मानतः स्वयम् ।
स्वयं च त्वं कर्णधारः प्रसीद मधुसूदन ॥ ५

मद्विधाः कतिचिन्नाथ नियोज्या भवकर्मणि ।
सन्ति विश्वेश विधयो हे विश्वेश्वर माधव ॥ ६

न कर्मक्षेत्रमेवेदं ब्रह्मलोकोऽयमीप्सितः ।
तथापि न स्पृहा कामे त्वद्भक्तिव्यवधायके ॥ ७

हे नाथ करुणासिन्धो दीनबन्धो कृपां कुरु ।
त्वं महेश महाज्ञाता दुःस्वप्नं मां न दर्शय ॥ ८

—*—

गुह्यककृता

## श्रीकृष्णस्तुतिः

कृष्ण कृष्ण महायोगिंस्त्वमाद्यः पुरुषः परः ।
व्यक्ताव्यक्तमिदं विश्वं रूपं ते ब्राह्मणा विदुः ॥ १

त्वमेकः सर्वभूतानां देहास्वात्मेन्द्रियेश्वरः ।
त्वमेव कालो भगवान् विष्णुरव्यय ईश्वरः ॥ २

त्वं महान् प्रकृतिः सूक्ष्मा रजःसत्त्वतमोमयी ।
त्वमेव पुरुषोऽध्यक्षः सर्वक्षेत्रविकारवित् ॥ ३

गृह्यमाणैस्त्वमग्राह्यो विकारैः प्राकृतैर्गुणैः ।
को न्विहार्हति विज्ञातुं प्राक्सिद्धं गुणसंवृतः ॥ ४

तस्मै तुभ्यं भगवते वासुदेवाय वेधसे ।
आत्मद्योतगुणैश्छन्नमहिम्ने ब्रह्मणे नमः ॥ ५

यस्यावतारा ज्ञायन्ते शरीरेष्वशरीरिणः ।
तैस्तैरतुल्यातिशयैर्वीर्यैर्देहिष्वसङ्गतैः ॥ ६

स भवान् सर्वलोकस्य भवाय विभवाय च ।
अवतीर्णोऽम्शभागेन सांप्रतं पतिराशिषाम् ॥ ७

नमः परमकल्याण नमः परममङ्गल ।
वासुदेवाय शान्ताय यदूनां पतये नमः ॥ ८

अनुजानीहि नौ भूमंस्तवानुचरकिङ्करौ ।
दर्शनं नौ भगवत ऋषेरासीदनुग्रहात् ॥ ९

वाणी गुणानुकथने श्रवणौ कथायां
हस्तौ च कर्मसु मनस्तव पादयोर्नः ।

स्मृत्यां शिरस्तव निवासजगत्प्रणामे
दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम्।। १०

(श्रीमद्भागवततः)

—*—

अक्रूरकृता

## श्रीकृष्णस्तुतिः

नतोऽस्म्यहं त्वाखिलहेतुहेतुं नारायणं पूरुषमाद्यमव्ययम्।
यन्नाभिजातादरविन्दकोशाद्ब्रह्माविरासीद्यत एष लोकः ।। १

भूस्तोयमग्निः पवनः खमादिर्महानजादिर्मन इन्द्रियाणि।
सर्वेन्द्रियार्था विबुधाश्च सर्वे ये हेतवस्ते जगतोऽङ्गभूताः ।। २

नैते स्वरूपं विदुरात्मनस्ते ह्यजादयोऽनात्मतया गृहीताः ।
अजोऽनुबद्धः स गुणैरजाया गुणात् परं वेद न ते स्वरूपम्।। ३

त्वां योगिनो यजन्त्यद्धा महापुरुषमीश्वरम्।
साध्यात्मं साधिभूतं च साधिदैवं च साधवः ।। ४

त्रय्या च विद्यया केचित्त्वां वै वैतानिका द्विजाः ।
यजन्ते विततैर्यज्ञैर्नानारूपामराख्यया ।। ५

एके त्वाखिलकर्माणि संन्यस्योपशमं गताः ।
ज्ञानिनो ज्ञानयज्ञेन यजन्ति ज्ञानविग्रहम्।। ६

अन्ये च संस्कृतात्मनो विधिनाभिहितेन ते।
यजन्ति त्वन्मयास्त्वां वै बहुमूर्त्येकमूर्तिकम्।। ७

त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणम्।
बह्वाचार्यविभेदेन भगवन् समुपासते॥ ८

सर्व एव यजन्ति त्वां सर्वदेवमयेश्वरम्।
येऽप्यन्यदेवताभक्ता यद्यप्यन्यधियः प्रभो॥ ९

यथाद्रिप्रभवा नद्यः पर्जन्यापूरिताः प्रभो।
विशन्ति सर्वतः सिन्धुं तद्वत्त्वां गतयोऽन्ततः॥ १०

सत्वं रजस्तम इति भवतः प्रकृतेर्गुणाः।
तेषु हि प्राकृताः प्रोता आब्रह्मस्थावरादयः॥ ११

तुभ्यं नमस्तेऽस्त्वविषक्तदृष्टये सर्वात्मने सर्वधियां च साक्षिणे।
गुणप्रवाहोऽयमविद्यया कृतः प्रवर्तते देवनृतिर्यगात्मसु॥ १२

अग्निर्मुखं तेऽवनिरङ्घ्रिरीक्षणं सूर्यो नभो नाभिरथो दिशः श्रुतिः।
द्यौः कं सुरेन्द्रास्तव बाहवोऽर्णवाः कुक्षिर्मरुत् प्राणबलं प्रकल्पितम्॥ १३

रोमाणि वृक्षौषधयः शिरोरुहा मेघाः परस्यास्थिनखानि तेऽद्रयः।
निमेषणं रात्र्यहनी प्रजापतिर्मेढ्रस्तु वृष्टिस्तव वीर्यमिष्यते॥ १४

त्वय्यव्ययात्मन् पुरुषे प्रकल्पिता लोकाः सपाला बहुजीवसङ्कुलाः।
यथा जले संजिहते जलौकसोऽप्युदुम्बरे वा मशका मनोमये। १५

यानि यानीह रूपाणि क्रीडनार्थं बिभर्षि हि।
तैरामृष्टशुचो लोका मुदा गायन्ति ते यशः॥ १६

नमः कारणमत्स्याय प्रलयाब्धिचराय च।
हयशीर्ष्णे नमस्तुभ्यं मधुकैटभमृत्यवे॥ १७

अकूपाराय बृहते नमो मन्दरधारिणे।
क्षित्युद्धारविहाराय नमः सूकरमूर्तये॥ १८

नमस्तेऽद्भुतसिंहाय साधुलोकभयापह।
वामनाय नमस्तुभ्यं क्रान्तत्रिभुवनाय च॥ १९

नमो भृगूणां पतये दृप्तक्षत्रवनच्छिदे।
नमस्ते रघुवर्याय रावणान्तकराय च॥ २०

नमस्ते वासुदेवाय नमः सङ्कर्षणाय च।
प्रद्युम्नायानिरुद्धाय सात्वतां पतये नमः॥ २१

नमो बुद्धाय शुद्धाय दैत्यदानवमोहिने।
म्लेच्छप्रायक्षत्रहन्त्रे नमस्ते कल्किरूपिणे॥ २२

भगवन् जीवलोकोऽयं मोहितस्तव मायया।
अहं-ममेत्यसद्ग्राहो भ्राम्यते कर्मवर्त्मसु॥ २३

अहं चात्मात्मजागार दारार्थस्वजनादिषु।
भ्रमामि स्वप्नकल्पेषु मूढः सत्यधिया विभो॥ २४

अनित्यानात्मदुःखेषु विपर्ययमतिर्ह्यहम्।
द्वन्द्वारामस्तमोविष्टो न जाने त्वात्मनः प्रियम्॥ २५

यथा बुधो जलं हित्वा प्रतिच्छन्नं तदुद्भवैः।
अभ्येति मृगतृष्णां वै तद्वत्त्वाहं पराङ्मुखः॥ २६

नोत्सहेऽहं कृपणधीः कामकर्महतं मनः।
रोद्धुं प्रमाथिभिश्चाक्षैर्ह्रियमाणमितस्ततः॥ २७

सोऽहं तवांघ्र्युपगतोऽस्म्यसतां दुरापं
तच्चाप्यहं भवदनुग्रह ईश मन्ये।
पुंसो भवेद्यर्हि संसरणापवर्गः
त्वय्यब्जनाभ सदुपासनया मतिः स्यात्॥ २८

नमो विज्ञानमात्राय सर्वप्रत्ययहेतवे।
पुरुषेशप्रधानाय ब्रह्मणेऽनन्तशक्तये॥ २९

नमस्ते वासुदेवाय सर्वभूतक्षयाय च।
हृषीकेश नमस्तुभ्यं प्रपन्नं पाहि मां प्रभो॥ ३०

(श्रीमद्भागवतत:)

—*—

देवकृता

## श्रीकृष्णस्तुतिः

नताः स्म ते नाथ पदारविन्दं बुद्धीन्द्रियप्राणमनोवचोभिः।
यच्चिन्त्यतेऽन्तर्हृदि भावयुक्तैर्मुमुक्षुभिः कर्ममयोरुपाशात्॥ १

त्वं मायया त्रिगुणयात्मनि दुर्विभाव्यं
व्यक्तं सृजस्यवसि लुम्पसि तद्गुणस्थः।
नैतैर्भवानजित कर्मभिरज्यते वै
यत्स्वे सुखेऽव्यवहितेऽभिरतोऽनवद्यः॥ २

शुद्धिर्नृणां न तु तथेड्य दुराशयानां
विद्याश्रुताध्ययनदानतपःक्रियाभिः।
सत्त्वात्मनामृषभ ते यशसि प्रवृद्ध-
सच्छ्रद्धया श्रवणसंभृतया यथा स्यात्॥ ३

स्यान्नस्तवाङ्घ्रिरशुभाशयधूमकेतुः
क्षेमाय यो मुनिभिरार्द्रहृदोह्यमानः।
यः सात्त्वतैः समविभूतय आत्मवद्भिः
व्यूहेऽर्चितः सवनशः स्वरतिक्रमाय॥ ४

यश्चिन्त्यते प्रयतपाणिभिरध्वराग्नौ
त्रय्या निरुक्तविधिनेश हविर्गृहीत्वा।
अध्यात्मयोग उत योगिभिरात्ममायां
जिज्ञासुभिः परमभागवतैः परीष्टः ॥ ५

पर्युष्टया तव विभो वनमालयेयं
संस्पर्धिनी भगवती प्रतिपत्निवच्छ्रीः ।
यः सुप्रणीतममुयार्हणमाददन्नो
भूयात् सदाङ्घ्रिरशुभाशयधूमकेतुः ॥ ६

केतुस्त्रिविक्रमयुतस्त्रिपतत्पताको
यस्ते भयाभयकरोऽसुरदेवचम्वोः ।
स्वर्गाय साधुषु खलेष्वितराय भूमन्
पादः पुनातु भगवन् भजतामघं नः ॥ ७

नस्योतगाव इव यस्य वशे भवन्ति
ब्रह्मादयस्तनुभृतो मिथुरर्द्यमानाः ।
कालस्य ते प्रकृतिपूरुषयोः परस्य
शं नस्तनोतु चरणः पुरुषोत्तमस्य ॥ ८

अस्यासि हेतुरुदयस्थितिसंयमानां
अव्यक्तजीवमहतामपि कालमाहुः ।
सोऽयं त्रिणाभिरखिलापचये प्रवृत्तः
कालो गभीररय उत्तमपूरुषस्त्वम् ॥ ९

त्वत्तः पुमान् समधिगम्य यया स्ववीर्यं
धत्ते महान्तमिव गर्भममोघवीर्यः ।
सोऽयं तयानुगत आत्मन आण्डकोशं
हैमं ससर्ज बहिरावरणैरुपेतम् ॥ १०

तत्तस्थुषश्च जगतश्च भवानधीशो
यन्माययोत्थगुणविक्रिययोपनीतान्।
अर्थाञ्जुषन्नपि हृषीकपते न लिप्तो
येऽन्ये स्वतः परिहृतादपि बिभ्यति स्म ॥ ११

स्मायावलोकलवदर्शितभावहारि
भ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः।
पत्न्यस्तु षोडशसहस्रमनङ्गबाणैः
यस्येन्द्रियं विमथितुं करणैर्न विभ्व्यः ॥ १२

विभ्व्यस्तवामृतकथोदवहास्त्रिलोक्याः
पादावनेजसरितः शमलानि हन्तुम्।
आनुश्रवं श्रुतिभिरङ्घ्रिजमङ्गसङ्गैः
तीर्थद्वयं शुचिषदस्त उपस्पृशन्ति ॥ १३ (श्रीमद्भागवततः)

—*—

बालकृतं

## कृष्णस्तोत्रम्

बाला ऊचुः—
यथा संरक्षितं ब्रह्मन्सर्वापत्स्वेव नः कुलम्।
तथा रक्षां कुरु पुनर्दावाग्नेर्मधुसूदन ॥ १

त्वमिष्टदेवताऽस्माकं त्वमेव कुलदेवता।
स्रष्टा दाता च संहर्ता जगतां च जगत्पते ॥ २

वह्निर्वा वरुणो वापि चन्द्रो वा सूर्य एव च।
यमः कुबेरः पवन ईशानाद्याश्च देवताः ॥ ३

ब्रह्मेशशेषधर्मेन्द्रा मुनीन्द्रा मनवः स्मृताः ।
मानवाश्च तथा दैत्या यक्षराक्षसकिन्नराः ।। ४

ये ये चराचराश्चैव सर्वे तव विभूतयः ।
आविर्भावस्तिरोभावः सर्वेषां च तवेच्छया ।। ५

अभयं देहि गोविन्द वह्निसंहरणं कुरु ।
वयं त्वां शरणं यामो रक्ष नः शरणागतान् ।। ६

इत्येवमुक्त्वा ते सर्वे तस्थुर्ध्यात्वा पदाम्बुजम् ।
दूरीभूतस्तु दावाग्निः श्रीकृष्णामृतदृष्टितः ।। ७

दूरीभूते च दावाग्नौ ननृतुस्ते मुदान्विताः ।
सर्वापदः प्रणश्यन्ति हरिस्मरणमात्रतः ।। ८

इदं स्तोत्रं महापुण्यं प्रातरुत्थाय यः पठेत् ।
वह्नितो न भवेत्तस्य भयं जन्मनि जन्मनि ।। ९

शत्रुग्रस्ते च दावाग्नौ विपत्तौ प्राणसङ्कटे ।
स्तोत्रमेतत्पठित्वा तु मुच्यते नात्र संशयः ।। १०

शत्रुसैन्यं क्षयं याति सर्वत्र विजयी भवेत् ।
इह लोके हरेर्भक्तिमन्ते दास्यं लभेद्ध्रुवम् ।। ११

—*—

विप्रपत्नीकृतं

## श्रीकृष्णस्तोत्रम्

त्वं ब्रह्म परमं धाम निरीहो निरहङ्कृतिः ।
निर्गुणश्च निराकारः साकारः सगुणः स्वयम् ।। १

साक्षिरूपश्च निर्लिप्तः परमात्मा निराकृतिः ।
प्रकृतिः पुरुषस्त्वं च कारणं च तयोः परम् ॥ २

सृष्टिस्थित्यन्तविषये ये च देवास्त्रयः स्मृताः ।
ते त्वदंशाः सर्वबीजा ब्रह्मविष्णुमहेश्वराः ॥ ३

यस्य लोम्नां च विवरे चाखिलं विश्वमीश्वर ।
महाविराड् महाविष्णुस्त्वं तस्य जनको विभो ॥ ४

तेजस्त्वं चापि तेजस्वी ज्ञानं ज्ञानी च तत्परः ।
वेदेऽनिर्वचनीयस्त्वं कस्त्वां स्तोतुमिहेश्वरः ॥ ५

महदादि सृष्टिसूत्रं पञ्चतन्मात्रमेव च ।
बीजं त्वं सर्वशक्तीनां सर्वशक्तिस्वरूपकः ॥ ६

सर्वशक्तीश्वरः सर्वः सर्वशक्त्याश्रयः सदा ।
त्वमनीहः स्वयंज्योतिः सर्वानन्दः सनातनः ॥ ७

अहोऽप्याकारहीनस्त्वं सर्वविग्रहवानपि ।
सर्वेन्द्रियाणां विषयं जानासि नेन्द्रियी भवान् ॥ ८

सरस्वती जडीभूता यत्स्तोत्रे यन्निरूपणे ।
जडीभूतो महेशश्च शेषो धर्मो विधिः स्वयम् ॥ ९

पार्वती कमला राधा सावित्री वेदसूरपि ।
वेदश्च जडतां याति के वा शक्ता विपश्चितः ॥ १०

वयं किं स्तवनं कुर्मः स्त्रियः प्राणेश्वरेश्वर ।
प्रसन्नो भव नो देव दीनबन्धो कृपां कुरु ॥ ११

इति पेतुश्च ता विप्रपत्न्यस्तच्चरणाम्बुजे ।
अभयं प्रददौ ताभ्यः प्रसन्नवदनेक्षणः ॥ १२

विप्रपत्नीकृतं स्तोत्रंपूजाकाले च यः पठेत्।
स गतिं विप्रपत्नीनां लभते नात्र संशयः ॥ १३

—*—

वसुदेवकृतं

# श्रीकृष्णस्तोत्रम्

त्वामतीन्द्रियमव्यक्तमक्षरं निर्गुणं विभुम्।
ध्यानासाध्यं च सर्वेषां परमात्मानमीश्वरम्॥ १

स्वेच्छामयं सर्वरूपं स्वेच्छारूपधरं परम्।
निर्लिप्तं परमं ब्रह्म बीजरूपं सनातनम्॥ २

स्थूलात्स्थूलतरं प्राप्तमतिसूक्ष्ममदर्शनम्।
स्थितं सर्वशरीरेषु साक्षिरूपमदृश्यकम्॥ ३

शरीरवन्तं सगुणमशरीरं गुणोत्करम्।
प्रकृतिं प्रकृतीशं च प्राकृतं प्रकृतेः परम्॥ ४

सर्वेशं सर्वरूपं च सर्वान्तकरमव्ययम्।
सर्वाधारं निराधारं निर्व्यूहं स्तौमि किं विभुम्॥ ५

अनन्तः स्तवनेऽशक्तोऽशक्ता देवी सरस्वती।
यं वा स्तोतुमशक्तश्च पञ्चवक्त्रः षडाननः ॥ ६

चतुर्मुखो वेदकर्ता यं स्तोतुमक्षमः सदा।
गणेशो न समर्थश्च योगीन्द्राणां गुरोर्गुरुः ॥ ७

ऋषयो देवताश्चैव मुनीन्द्रमनुमानवाः।
स्वप्ने तेषामदृश्यं च त्वामेवं किं स्तुवन्ति ते॥ ८

श्रुतयः स्तवनेऽशक्ताः किं स्तुवन्ति विपश्चितः ।
विहायैवं शरीरं च बालो भवितुमर्हसि ॥ ९

वसुदेवकृतं स्तोत्रं त्रिसन्ध्यं यः पठेन्नरः ।
भक्तिं दास्यमवाप्नोति श्रीकृष्णचरणाम्बुजे ॥ १०

विशिष्टं पुत्रं लभते हरिदासं गुणान्वितम् ।
सङ्कटं निस्तरेत्तूर्णं शत्रुभीतेः प्रमुच्यते ॥ ११

(श्रीब्रह्मवैवर्ते)

—*—

शिवकृतम्

## श्रीकृष्णस्तोत्रम्

परं ब्रह्म परं धाम परं ज्योतिः सनातनम् ।
निर्लिप्तं परमात्मानं नमामि सर्वकारणम् ॥ १

स्थूलात् स्थूलतमं देवं सूक्ष्मात् सूक्ष्मतमं परम् ।
सर्वदृश्यमदृश्यं च स्वेच्छाचारं नमाम्यहम् ॥ २

साकारं च निराकारं सगुणं निर्गुणं प्रभुम् ।
सर्वाधारं च सर्वं च स्वेच्छारूपं नमाम्यहम् ॥ ३

अतीव कमनीयं च रूपं निरुपमं विभुम् ।
करालरूपमत्यन्तं बिभ्रतं प्रणमाम्यहम् ॥ ४

कर्मणः कर्मरूपं तं साक्षिणं सर्वकर्मणः ।
फलं च फलदातारं सर्वरूपं नमाम्यहम् ॥ ५

स्रष्टा पाता च संहर्ता कलया मूर्तिभेदतः ।
नानामूर्तिः कलांशेन यः पुमांस्तं नमाम्यहम् ॥ ६

स्वयं प्रकृतिरूपश्च मायया च स्वयं पुमान्।
तयोः परं स्वयं शश्वत् तं नमामि परात्परम्॥ ७

स्त्रीपुन्नपुंसकं रूपं यो बिभर्ति स्वमायया।
स्वयं माया स्वयं मायी यो देवस्तं नमाम्यहम्॥ ८

तारणं सर्वदुःखानां सर्वकारणकारणम्।
धारणं सर्वविश्वानां सर्वबीजं नमाम्यहम्॥ ९

तेजस्विनां रवियों हि सर्वजातिषु ब्राह्मणः।
नक्षत्राणां च यश्चन्द्रस्तं नमामि जगत्प्रभुम्॥ १०

रुद्राणां वैष्णवानां च ज्ञानिनां यो हि शङ्करः।
नागानां यो हि शेषश्च तं नमामि जगत्पतिम्॥ ११

प्रजापतीनां यो ब्रह्मा सिद्धानां कपिलः स्वयम्।
सनत्कुमारो मुनिषु तं नमामि जगद्गुरुम्॥ १२

देवानां यो हि विष्णुश्च देवीनां प्रकृतिः स्वयम्।
स्वायम्भुवो मनूनां यो मानवेषु च वैष्णवः।
नारीणां शतरूपा च बहुरूपं नमाम्यहम्॥ १३

ऋतूनां यो वसन्तश्च मासानां मार्गशीर्षकः।
एकादशी तिथीनां च नमामि सर्वरूपिणम्॥ १४

सागरः सरितां यश्च पर्वतानां हिमालयः।
वसुन्धरा सहिष्णूनां तं सर्वं प्रणमाम्हम्॥ १५

पत्राणां तुलसीपत्रं दारुरूपेषु चन्दनम्।
वृक्षाणां कल्पवृक्षो यस्तं नमामि जगत्पतिम्॥ १६

पुष्पाणां पारिजातश्च शस्यानां धान्यमेव च।
अमृतं भक्ष्यवस्तूनां नानारूपं नमाम्यहम्॥ १७

ऐरावतो गजेन्द्राणां वैनतेयश्च पक्षिणाम्।
कामधेनुश्च धेनूनां सर्वरूपं नमाम्यहम्॥ १८

तैजसानां सुवर्णं च धान्यानां यव एव च।
यः केसरी पशूनां च वररूपं नमाम्यहम्॥ १९

यक्षाणां च कुबेरो यो ग्रहाणां च बृहस्पतिः।
दिक्पालानां महेन्द्रश्च तं नमामि परं वरम्॥ २०

वेदसङ्घश्च शास्त्राणां पण्डितानां सरस्वती।
अक्षराणामकारो यस्तं प्रधानं नमाम्यहम्॥ २१

मन्त्राणां विष्णुमन्त्रश्च तीर्थानां जाह्नवी स्वयम्।
इन्द्रियाणां मनो यो हि सर्वश्रेष्ठं नमाम्यहम्॥ २२

सुदर्शनं च शस्त्राणां व्याधीनां वैष्णवो ज्वरः।
तेजसां ब्रह्मतेजश्च वरेण्यं तं नमाम्यहम्॥ २३

बलं यो वै बलवतां मनो वै शीघ्रगामिनाम्।
कालः कलयतां यो हि तं नमामि विलक्षणम्॥ २४

ज्ञानदाता गुरूणां च मातृरूपश्च बन्धुषु।
मित्रेषु जन्मदाता यस्तं सारं प्रणमाम्यहम्॥ २५

शिल्पिनां विश्वकर्मा यः कामदेवश्च रूपिणाम्।
पतिव्रता च पत्नीनां नमस्यं तं नमाम्यहम्॥ २६

प्रियेषु पुत्ररूपो यो नृपरूपो नरेषु च।
शालग्रामश्च यन्त्राणां तं विशिष्टं नमाम्यहम्॥ २७

धर्मः कल्याणबीजानां वेदानां सामवेदकः।
धर्माणां सत्यरूपो यो विशिष्टं तं नमाम्यहम्॥ २८

जले शैत्यस्वरूपो यो गन्धरूपश्च भूमिषु।
शब्दरूपश्च गगने तं प्रणम्यं नमाम्यहम्॥ २९

क्रतूनां राजसूयो यो गायत्री छन्दसां च यः।
गन्धर्वाणां चित्ररथस्तं गरिष्ठं नमाम्यहम्॥ ३०

क्षीरस्वरूपो गव्यानां पवित्राणां च पावकः।
पुण्यदानां च यः स्तोत्रं तं नमामि शुभप्रदम्॥ ३१

तृणानां कुशरूपो यो व्याधिरूपश्च वैरिणाम्।
गुणानां शान्तरूपो यश्चित्ररूपं नमाम्यहम्॥ ३२

तेजोरूपो ज्ञानरूपः सर्वरूपश्च यो महान्।
सर्वानिर्वचनीयं च तं नमामि स्वयं विभुम्॥ ३३

सर्वाधारेषु यो वायुर्यथात्मा नित्यरूपिणाम्।
आकाशो व्यापकानां यो व्यापकं तं नमाम्यहम्॥ ३४

वेदानिर्वचनीयं यन्न न स्तोतुं पण्डितः क्षमः।
यदनिर्वचनीयं च को वा तत् स्तोतुमीश्वरः॥ ३५

वेदा न शक्ता यं स्तोतुं जडीभूता सरस्वती।
तं च वाङ्मनसापारं को विद्वान् स्तोतुमीश्वरम्॥ ३६

शुद्धतेजःस्वरूपं च भक्तानुग्रहविग्रहम्।
अतीव कमनीयं च श्यामरूपं नमाम्यहम्॥ ३७

द्विभुजं मुरलीवक्त्रं किशोरं सस्मितं मुदा।
शश्वद्गोपाङ्गनाभिश्च वीक्षमाणं नमाम्यहम्॥ ३८

राधया दत्तताम्बूलं भुक्तवन्तं मनोहरम्।
रत्नसिंहासनस्थं च तमीशं प्रणमाम्यहम्॥ ३९

रत्नभूषणभूषाढ्यं सेवितं श्वेतचामरैः ।
पार्षदप्रवरैर्गोपकुमारैस्तं नमाम्यहम् ।। ४०

वृन्दावनान्तरे रम्ये रासोल्लाससमुत्सुकम् ।
रासमण्डलमध्यस्थं नमामि रसिकेश्वरम् ।। ४१

शतशृङ्गे महाशैले गोलोके रत्नपर्वते ।
विरजापुलिने रम्ये प्रणमामि विहारिणम् ।। ४२

परिपूर्णतमं शान्तं राधाकान्तं मनोहरम् ।
सत्यं ब्रह्मस्वरूपं च नित्यं कृष्णं नमाम्यहम् ।। ४३

श्रीकृष्णस्य स्तोत्रमिदं त्रिसन्ध्यं यः पठेन्नरः ।
धर्मार्थकाममोक्षाणां स दाता भारते भवेत् ।। ४४

हरिदास्यं हरौ भक्तिं लभेत् स्तोत्रप्रसादतः ।
इह लोके जगत्पूज्यो विष्णुतुल्यो भवेद् ध्रुवम् ।। ४५

सर्वसिद्धेश्वरः शान्तोऽप्यन्ते याति हरेः पदम् ।
तेजसा यशसा भाति यथा सूर्यो महीतले ।। ४६

जीवन्मुक्तः कृष्णभक्तः स भवेन्नात्र संशयः ।
अरोगी गुणवान् विद्वान् पुत्रवान् धनवान् सदा ।। ४७

षडभिज्ञो दशबलो मनोयायी भवेद् ध्रुवम् ।
सर्वज्ञः सर्वदश्चैव स दाता सर्वसम्पदाम् ।
कल्पवृक्षसमः शश्वद् भवेत् कृष्णप्रसादतः ।। ४८

—*—

## राधाकृतं

# श्रीकृष्णस्तोत्रम्

गोलोकनाथ गोपीश मदीश प्राणवल्लभ।
हे दीनबन्धो दीनेश सर्वेश्वर नमोऽस्तु ते॥ १

गोपेश गोसमूहेश यशोदानन्दवर्धन।
नन्दात्मज सदानन्द नित्यानन्द नमोऽस्तु ते॥ २

शतमन्योर्भग्नमन्यो ब्रह्मदर्पविनाशक।
कालीयदमन प्राणनाथ कृष्ण नमोऽस्तु ते॥ ३

शिवानन्तेश ब्रह्मेश ब्राह्मणेश परात्पर।
ब्रह्मस्वरूप ब्रह्मज्ञ ब्रह्मबीज नमोऽस्तु ते॥ ४

चराचरतरोर्बीज गुणातीत गुणात्मक।
गुणबीज गुणाधार गुणेश्वर नमोऽस्तु ते॥ ५

अणिमादिकसिद्धीश सिद्धेः सिद्धिस्वरूपक।
तपस्तपस्विंस्तपसां बीजरूप नमोऽस्तु ते॥ ६

यदनिर्वचनीयं च वस्तु निर्वचनीयकम्।
तत्स्वरूप तयोर्बीज सर्वबीज नमोऽस्तु ते॥ ७

अहं सरस्वती लक्ष्मीर्दुर्गा गङ्गा श्रुतिप्रसूः।
यस्य पादार्चनान्नित्यं पूज्या तस्मै नमो नमः॥ ८

स्पर्शने यस्य भृत्यानां ध्याने चापि दिवानिशम्।
पवित्राणि च तीर्थानि तस्मै भगवते नमः॥ ९

इत्येवमुक्त्वा सा देवी जले संन्यस्य विग्रहम्।
मनःप्राणांश्च श्रीकृष्णे तस्थौ स्थाणुसमा सती॥ १०

राधाकृतं हरेः स्तोत्रं त्रिसन्ध्यं यः पठेन्नरः।
हरिभक्तिं च दास्यं च लभेद् राधागतिं ध्रुवम्॥ ११

विपत्तौ यः पठेद् भक्त्या सद्यः सम्पत्तिमाप्नुयात्।
चिरकालगतं द्रव्यं हृतं नष्टं च लभ्यते॥ १२

बन्धुवृद्धिर्भवेत्तस्य प्रसन्नं मानसं परम्।
चिन्ताग्रस्तः पठेद् भक्त्या परां निर्वृतिमाप्नुयात्॥ १३

पतिभेदे पुत्रभेदे मित्रभेदे च संकटे।
मासं भक्त्या यदि पठेत्सद्यः सन्दर्शनं लभेत्॥ १४

भक्त्या कुमारी स्तोत्रं च शृणुयाद् वत्सरं यदि।
श्रीकृष्णसदृशं कान्तं गुणवन्तं लभेद् ध्रुवम्॥ १५

—*—

श्रीनारायणर्षिकृता

## श्रीकृष्णस्तुतिः

लम्बोदरो हरिरुमापतिरीशशेषा
ब्रह्मादयः सुरगणा मनवो मुनीन्द्राः।
वाणी शिवा त्रिपथगा कमलादिका या
संचिन्तयेद् भगवतश्चरणारविन्दम्॥ १

संसारसागरमतीव गभीरघोरं
दावाग्निसर्पपरिवेष्टितचेष्टिताङ्गम्।
संलङ्घ्य गन्तुमभिवाञ्छति यो हि दास्यं
संचिन्तयेद् भगवतश्चरणारविन्दम्॥ २

गोवर्धनोद्धरणकीर्तिरतीव खिन्ना भूर्धारिता च दशनाग्रकरेण क्लिन्ना।
विश्वानि लोमविवरेषु बिभर्त्तुरादेः संचिन्तयेद् भगवतश्चरणारविन्दम्॥

गोपाङ्गनावदनपङ्कजषट्पदस्य रासेश्वरस्य रसिकारमणस्य पुंसः।
वृन्दावने विहरतो व्रजवेषविष्णोः संचिन्तयेद् भगवतश्चरणारविन्दम्॥

चक्षुर्निमेषपतितो जगतां विधाता तत्कर्म वत्स कथितुं भुवि कः समर्थः।
त्वं चापि नारदमुने परमादरेण संचिन्तितं कुरु हरेश्चरणारविन्दम्॥ ५

यूयं वयं तस्य कलाकलांशाः कलाकलांशा मनवो मुनीन्द्राः।
कलाविशेषा भवपारमुख्या महान् विराड् यस्य कलाविशेषः॥ ६

सहस्रशीर्षा शिरसः प्रदेशे बिभर्ति सिद्धार्थसमं च विश्वम्।
कूर्मे च शेषो मशको गजे यथा कूर्मश्च कृष्णस्य कलाकलांशः॥ ७

गोलोकनाथस्य विभोर्यशोऽमलं श्रुतौ पुराणे न हि किंचन स्फुटम्।
न पाद्ममुख्याः कथितुं समर्थाः सर्वेश्वरं तं भज पाद्ममुख्यम्॥ ८

विश्वेषु सर्वेषु च विश्वधाम्नः सन्त्येव शश्वद्विधिविष्णुरुद्राः।
तेषां च संख्याः श्रुतयश्च देवाः परं न जानन्ति तमीश्वरं भज॥ ९

करोति सृष्टिं स विधेर्विधाता विधाय नित्यां प्रकृतिं जगत्प्रसूम्।
ब्रह्मादयः प्राकृतिकाश्च भिन्ना यया च सृष्टिं कुरुते सनातनः॥ १०

ब्रह्मस्वरूपा प्रकृतिर्न भिन्ना यया च सृष्टिं कुरुते सनातनः।
श्रियश्च सर्वाः कलया जगत्सु माया च सर्वे च तया विमोहिताः॥ ११

नारायणी सा परमा सनातनी शक्तिश्च पुंसः परमात्मनश्च।
आत्मेश्वरश्चापि यया च शक्तिमांस्तया विना स्रष्टुमशक्त एव॥ १२

—*—

मोहिनीकृतं

# श्रीकृष्णस्तोत्रम्

सर्वेन्द्रियाणां प्रवरं विष्णोरंशं च मानसम्।
तदेव कर्मणां बीजं तदुद्भव नमोऽस्तु ते ॥ १

स्वयमात्मा हि भगवान् ज्ञानरूपो महेश्वरः ।
नमो ब्रह्मन् जगत्स्रष्टस्तदुद्भव नमोऽस्तु ते ॥ २

सर्वाजित जगज्जेतर्जीवजीवमनोहर।
रतिबीज रतिस्वामिन् रतिप्रिय नमोऽस्तु ते ॥ ३

शश्वद्योषिदधिष्ठान योषित्प्राणाधिकप्रिय।
योषिद्वाहन योषास्त्र योषिद्बन्धो नमोऽस्तु ते ॥ ४

पतिसाध्यकराशेषरूपाधार गुणाश्रय।
सुगन्धिवातसचिव मधुमित्र नमोऽस्तु ते ॥ ५

शश्वद्योनिकृताधार स्त्रीसन्दर्शनवर्धन।
विदग्धानां विरहिणां प्राणान्तक नमोऽस्तु ते ॥ ६

अकृपा येषु तेऽनर्थं तेषां ज्ञानं विनाशनम्।
अनूहरूपभक्तेषु कृपासिन्धो नमोऽस्तु ते ॥ ७

तपस्विनां च तपसां विघ्नबीजाय लीलया।
मनः सकामं मुक्तानां कर्तुं शक्त नमोऽस्तु ते ॥ ८

तपः साध्यस्तथाराध्यः सदैव पाञ्चभौतिकः ।
पञ्चेन्द्रियकृताधार पञ्चबाण नमोऽस्तु ते ॥ ९

——*——

## जीवकृता
# कृष्णस्तुतिः

तस्योपसन्नमवितुं जगदिच्छयात्तनानातनोर्भुवि चलच्चरणारविन्दम्।
सोऽहं व्रजामि शरणं ह्यकुतोभयं मे येनेदृशी गतिरदर्श्यसतोऽनुरूपा॥ १

यस्त्वत्र बद्ध इव कर्मभिरावृतात्मा भूतेन्द्रियाशयमयीमवलम्ब्य मायाम्।
आस्ते विशुद्धमविकारमखण्डबोधमातप्यमानहृदयेऽवसितं नमामि॥ २

यः पञ्चभूतरचिते रहितः शरीरे छन्नोऽयथेन्द्रियगुणार्थचिदात्मकोऽहम्।
तेनाविकुण्ठमहिमानमृषिं तमेनं वन्दे परं प्रकृतिपूरुषयोः पुमांसम्॥ ३

यन्माययोरुगुणकर्मनिबन्धनेऽस्मिन् सांसारिके पथिचरंस्तदभिश्रमेण।
नष्टस्मृतिः पुनरयं प्रवृणीत लोकं युक्त्या कया महदनुग्रहमन्तरेण॥ ४

ज्ञानं यदेतददधात् कतमः स देवस्त्रैकालिकं स्थिरचरेष्वनुवर्तितांशः।
तं जीवकर्मपदवीमनुवर्तमानास्तापत्रयोपशमनाय वयं भजेम॥ ५

देह्यन्यदेहविवरे जठराग्निनासृग्विण्मूत्रकूपपतितो भृशतप्तदेहः।
इच्छन्नितो विवसितुं गणयन् स्वमासान् निर्वास्यते कृपणधीर्भगवन् कदा नु॥ ६

येनेदृशीं गतिमसौ दशमास्य ईश संग्राहितः पुरुदयेन भवादृशेन।
स्वेनैव तुष्यतु कृतेन स दीननाथः के नाम तत् प्रति विनाऽञ्जलिमस्य कुर्यात्॥ ७

पश्यत्ययं धिषणया ननु सप्तवध्रिः शारीरके दमशरीर्यपरः स्वदेहे।
यत्सृष्टयास तमहं पुरुषं पुराणं पश्ये बहिर्हृदि चैत्यमिव प्रतीतम्॥ ८

सोऽहं वसन्नपि विभो बहुदुःखवासं गर्भान्न निर्जिगमिषे बहिरन्धकूपे।
यत्रोपयातमुपसर्पति देवमाया मिथ्यामतिर्यदनु संसृतिचक्रमेतत्॥ ९

तस्मादहं विगतविक्लव उद्धरिष्ये आत्मानमाशु तमसः सुहृदात्मनैव ।
भूयो यथा व्यसनमेतदनेकरन्ध्रं मा मे भविष्यदुपसादितविष्णुपादः ॥ १०

—*—

दानवकृतं

## कृष्णस्तोत्रम्

वामनोऽसि त्वमंशेन मत्पितुर्यज्ञभिक्षुकः ।
राज्यहर्ता च श्रीहर्ता सुतलस्थलदायकः ॥ १

बलिभक्तिवशो वीरः सर्वेशो भक्तवत्सलः ।
शीघ्रं त्वं हिंस मां पापं शापाद् गर्दभरूपिणम् ॥ २

मुनेर्दुर्वासिसः शापादीदृशं जन्म कुत्सितम् ।
मृत्युरुक्तश्च मुनिना त्वत्तो मम जगत्पते ॥ ३

षोडशारेण चक्रेण सुतीक्ष्णेनातितेजसा ।
जहि मां जगतां नाथ सद्भक्तिं कुरु मोक्षद ॥ ४

त्वमंशेन वराहश्च समुद्धर्तुं वसुन्धराम् ।
वेदानां रक्षिता नाथ हिरण्याक्षनिषूदनः ॥ ५

त्वं नृसिंहः स्वयं पूर्णो हिरण्यकशिपोर्वधे ।
प्रह्लादानुग्रहार्थाय देवानां रक्षणाय च ॥ ६

त्वं च वेदोद्धारकर्ता मीनांशेन दयानिधे ।
नृपस्य ज्ञानदानाय रक्षायै सुरविप्रयोः ॥ ७

शेषाधारश्च कूर्मस्त्वमंशेन सृष्टिहेतवे ।
विश्वाधारश्च शेषस्त्वमंशेनापि सहस्रदृक् ॥ ८

रामो दाशरथिस्त्वं च जानक्युद्धारहेतवे।
दशकन्धरहन्ता च सिन्धौ सेतुविधायकः ॥ ९

कलया परशुरामश्च जमदग्निसुतो महान्।
त्रिःसप्तकृत्वो भूपानां निहन्ता जगतीपते॥ १०

अंशेन कपिलस्त्वं च सिद्धानां च गुरोर्गुरुः।
मातृज्ञानप्रदाता च योगशास्त्रविधायकः ॥ ११

अंशेन ज्ञानिनां श्रेष्ठौ नरनारायणावृषी।
त्वं च धर्मसुतो भूत्वा लोकविस्तारकारकः ॥ १२

अधुना कृष्णरूपस्त्वं परिपूर्णतमः स्वयम्।
सर्वेषामवताराणां बीजरूपः सनातनः ॥ १३

यशोदाजीवनो नित्यो नन्दैकानन्दवर्धनः।
प्राणाधिदेवो गोपीनां राधाप्राणाधिकः प्रियः ॥ १४

वसुदेवसुतः शान्तो देवकीदुःखभञ्जनः।
अयोनिसम्भवः श्रीमान् पृथिवीभारहारकः ॥ १५

पूतनायै मातृगतिप्रदाता च कृपानिधिः।
बककेशिप्रलम्बानां ममापि मोक्षकारकः ॥ १६

स्वेच्छामय गुणातीत भक्तानां भयभञ्जन।
प्रसीद राधिकानाथ प्रसीद कुरु मोक्षणम्॥ १७

हे नाथ गार्दभीयोनेः समुद्धर भवार्णवात्।
मूर्खस्त्वद्भक्तपुत्रोऽहं मामुद्धर्तुं त्वमर्हसि॥ १८

वेदा ब्रह्मादयो यं च मुनीन्द्राः स्तोतुमक्षमाः।
किं स्तौमि तं गुणातीतं पुरा दैत्योऽधुना खरः ॥ १९

एवं कुरु कृपासिन्धो येन मे न भवेज्जनुः ।
दृष्ट्वा पादारविन्दं ते कः पुनर्भवनं व्रजेत् ॥ २०

ब्रह्मा स्तोता खरः स्तोता नोपहासितुमर्हसि ।
सदीश्वरस्य विज्ञस्य योग्यायोग्ये समा कृपा ॥ २१

इत्येवमुक्त्वा दैत्येन्द्रस्तस्थौ च पुरतो हरेः ।
प्रसन्नवदनः श्रीमानतितुष्टो बभूव ह ॥ २२

इदं दैत्यकृतं स्तोत्रं नित्यं भक्त्या च यः पठेत् ।
सालोक्यसार्ष्टिसामीप्यं लीलया लभते हरेः ॥ २३

इह लोके हरेर्भक्तिमन्ते दास्यं सुदुर्लभम् ।
विद्यां श्रियं सुकवितां पुत्रपौत्रान् यशो लभेत् ॥ २४

—*—

इन्द्रकृतं

## कृष्णस्तोत्रम्

अक्षरं परमं ब्रह्म ज्योतीरूपं सनातनम् ।
गुणातीतं निराकारं स्वेच्छामयमनन्तकम् ॥ १

भक्तध्यानाय सेवायै नानारूपधरं वरम् ।
शुक्लरक्तपीतश्यामं युगानुक्रमणेन च ॥ २

शुक्लतेजःस्वरूपं च सत्ये सत्यस्वरूपिणम् ।
त्रेतायां कुङ्कुमाकारं ज्वलन्तं ब्रह्मतेजसा ॥ ३

द्वापरे पीतवर्णं च शोभितं पीतवाससा ।
कृष्णवर्णं कलौ कृष्णं परिपूर्णतमं प्रभुम् ॥ ४

नवधाराधरोत्कृष्टश्यामसुन्दरविग्रहम्।
नन्दैकनन्दनं वन्दे यशोदानन्दनं प्रभुम्॥ ५

गोपिकाचेतनहरं राधाप्राणाधिकं परम्।
विनोदमुरलीशब्दं कुर्वन्तं कौतुकेन च॥ ६

रूपेणाप्रतिमेनैव रत्नभूषणभूषितम्।
कन्दर्पकोटिसौन्दर्यं बिभ्रतं शान्तमीश्वरम्॥ ७

क्रीडन्तं राधया सार्धं बृन्दारण्ये च कुत्रचित्।
कुत्रचिन्निर्जनेऽरण्ये राधावक्षःस्थलस्थितम्॥ ८

जलक्रीडां प्रकुर्वन्तं राधया सह कुत्रचित्।
राधिकाकबरीभारं कुर्वन्तं कुत्रचिद्वने॥ ९

कुत्रचिद्राधिकापादे दत्तवन्तमलक्तकम्।
राधाचर्विततताम्बूलं गृह्णन्तं कुत्रचिन्मुदा॥ १०

पश्यन्तं कुत्रचिद्राधां पश्यन्तीं वक्रचक्षुषा।
दत्तवन्तं च राधायै कृत्वा मालां च कुत्रचित्॥ ११

कुत्रचिद्राधया सार्धं गच्छन्तं रासमण्डलम्।
राधादत्तां गले मालां धृतवन्तं च कुत्रचित्॥ १२

सार्धं गोपालिकाभिश्च विहरन्तं च कुत्रचित्।
राधां गृहीत्वा गच्छन्तं तां विहाय च कुत्रचित्॥ १३

विप्रपत्नीदत्तमन्नं भुक्तवन्तं च कुत्रचित्।
भुक्तवन्तं तालफलं बालकैः सह कुत्रचित्॥ १४

वस्त्रं गोपालिकानां च हरन्तं कुत्रचिन्मुदा।
गवां गणं व्याहरन्तं कुत्रचिद्बालकैः सह॥ १५

कालीयमूर्ध्नि पादाब्जं दत्तवन्तं च कुत्रचित्।
विनोदमुरलीशब्दं कुर्वन्तं कुत्रचिन्मुदा।
गायन्तं रम्यसंगीतं वन्दे तं बालकैः सह ।। १६

(ब्रह्मवैवर्ततः)

—*—

गन्धर्वकृतं

## श्रीकृष्णस्तोत्रम्

वन्दे नवघनश्यामं पीतकौशेयवाससम्।
सानन्दं सुन्दरं शुद्धं श्रीकृष्णं प्रकृतेः परम्।। १

राधेशं राधिकाप्राणवल्लभं बल्लवीसुतम्।
राधासेवितपादाब्जं राधावक्षःस्थलस्थितम्।। २

राधानुगं राधिकेष्टं राधापहृतमानसम्।
राधाधारं भवाधारं सर्वाधारं नमामि तम्।। ३

राधाहृत्पद्ममध्ये च वसन्तं सन्ततं शुभम्।
राधासहचरं शश्वद्राधाज्ञापरिपालकम्।। ४

ध्यायन्ते योगिनो योगात् सिद्धाः सिद्धेश्वराश्च यम्।
तं ध्यायेत्सततं शुद्धं भगवन्तं सनातनम्।। ५

सेवन्ते सततं सन्तो ब्रह्मेशशेषसंज्ञकाः।
सेवन्ते निर्गुणं ब्रह्म भगवन्तं सनातनम्।। ६

निर्लिप्तं च निरीहं च परमात्मानमीश्वरम्।
नित्यं सत्यं च परमं भगवन्तं सनातनम्।। ७

यं सृष्टेरादिभूतं च सर्वबीजं परात्परम्।
योगिनस्तं प्रपद्यन्ते भगवन्तं सनातनम्॥ ८

बीजं नानावताराणां सर्वकारणकारणम्।
वेदवेद्यं वेदबीजं वेदकारणकारणम्।
योगिनस्तं प्रपद्यन्ते भगवन्तं सनातनम्॥ ९ (श्री नारदपञ्चरात्रे)

—*—

## श्रीकृष्णाष्टकम्

वसुदेवसुतं देवं कंसचाणूरमर्दनम्।
देवकीपरमानन्दं कृष्णं वन्दे जगद्गुरुम्॥ १

अतसीपुष्पसङ्काशं हारनूपुरशोभितम्।
रत्नकङ्कणकेयूरं कृष्णं वन्दे जगद्गुरुम्॥ २

मन्दारगन्धसंयुक्तं चारुहासं चतुर्भुजम्।
बर्हि पिच्छावचूडाङ्गं कृष्णं जगद्गुरुम्॥ ३

कुटिलालकसंयुक्तं पूर्णचन्द्रनिभाननम्।
विलसत्कुण्डलधरं कृष्णं वन्दे जगद्गुरुम्॥ ४

उत्फुल्लपद्मपत्राक्षं नीलजीमूतसन्निभम्।
यादवानां शिरोरत्नं कृष्णं वन्दे जगद्गुरुम्॥ ५

रुक्मिणीकेलिसंयुक्तं पीताम्बरसुशोभितम्।
अवाप्ततुलसीगन्धं कृष्णं वन्दे जगद्गुरुम्॥ ६

गोपिकानां कुचद्वन्द्वकुङ्कुमाङ्कितवक्षसम्।
श्रीनिकेतं महेष्वासं कृष्णं वन्दे जगद्गुरुम्॥ ७

श्रीवत्साङ्कं महोरस्कं वनमालाविराजितम्।
शङ्खचक्रधरं देवं कृष्णं वन्दे जगद्गुरुम्॥ ८

कृष्णाष्टकमिदं पुण्यं प्रातरुत्थाय यः पठेत्।
कोटिजन्मकृतं पापं स्मरणेन विनश्यति ।। ९

—*—

श्री शङ्करभगवत्पादकृतम्

## कृष्णाष्टकम्

श्रियाश्लिष्टो विष्णुः स्थिरचरगुरुर्वेदविषयो
धियां साक्षी शुद्धो हरिरसुरहन्ताऽब्जनयनः।
गदी शङ्खी चक्री विमलवनमाली स्थिररुचिः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ।। १

यतः सर्वं जातं वियदनिलमुख्यं जगदिदं
स्थितौ निःशेषं योऽवति निजसुखांशेन मधुहा।
लये सर्वं स्वस्मिन् हरति कलया यस्तु स विभुः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ।। २

असूनायम्यादौ यमनियममुख्यैः सुकरणैः
निरुध्येदं चित्तं हृदि विलयमानीय सकलम्।
यमीड्यं पश्यन्ति प्रवरमतयो मायिनमसौ
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ।। ३

पृथिव्यां तिष्ठन्यो यमयति महीं वेद न धरा
यमित्यादौ वेदो वदति जगतामीशममलम्।
नियन्तारं ध्येयं मुनिसुरनृणां मोक्षदमसौ
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ।। ४

महेन्द्रादिर्देवो जयति दितिजान्यस्य बलतो
न कस्य स्वातन्त्र्यं क्वचिदपि कृतौ यत्कृतिमृते।

बलारातेर्गर्वं परिहरति योऽसौ विजयिनः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ ५

विना यस्य ध्यानं व्रजति पशुतां सूकरमुखां
विना यस्य ज्ञानं जनिमृतिभयं याति जनता।
विना यस्य स्मृत्या कृमिशतजनिं याति स विभुः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ ६

नरातङ्कोत्तङ्कः शरणशरणो भ्रान्तिहरणो
घनश्यामो वामो व्रजशिशुवयस्योऽर्जुनसखः ।
स्वयंभूर्भूतानां जनक उचिताचारसुखदः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ ७

यदा धर्मग्लानिर्भवति जगतां क्षोभकरणी
तदा लोकस्वामी प्रकटितवपुः सेतुधृगजः ।
सतां धाता स्वच्छो निगमगुणगीतो व्रजपतिः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ ८

इति हरिरखिलात्माऽऽराधितः शङ्करेण
श्रुतिविशदगुणोऽसौ मातृमोक्षार्थमाद्यः ।
यतिवरनिकटे श्रीयुक्त आविर्बभूव
स्वगुणवृत उदारः शङ्खचक्राब्ज हस्तः ॥ ९

—*—

## श्रीकृष्णाष्टकम्

भजे व्रजैकमण्डनं समस्तपापखण्डनं
स्वभक्तचित्तरञ्जनं सदैव नन्दनन्दनम् ।

सुपिच्छगुच्छमस्तकं सुनादवेणुहस्तकं
अनङ्गरङ्गसागरं नमामि कृष्णसागरम् ॥ १

मनोजगर्वमोचनं विशाललोललोचनं
विधूतगोपशोचनं नमामि पद्मलोचनम् ।
करारविन्दभूधरं स्मितावलोकसुन्दरं
महेन्द्रमानदारणं नमामि कृष्णवारणम् ॥ २

कदम्बसूनुकुण्डलं सुचारुगण्डमण्डलं
व्रजाङ्गनैकवल्लभं नमामि कृष्णदुर्लभम् ।
यशोदया समोदया सगोपया सनन्दया
युतं सुखैकदायकं नमामि गोपनायकम् ॥ ३

सदैव पादपङ्कजं मदीयमानसे निजं
दधानमुत्तमालकं नमामि नन्दबालकम् ।
समस्तदोषशोषणं समस्तलोकपोषणं
समस्तगोपमानसं नमामि कृष्णलालसम् ॥ ४

भुवो भरावतारकं भवाब्धिकर्णधारकं
यशोमतीकिशोरकं नमामि दुग्धचोरकम् ।
दृगन्तकान्तभङ्गिनं सदासदालसङ्गिनं
दिने दिने नवं नवं नमामि नन्दसंभवम् ॥ ५

गुणाकरं सुखाकरं कृपाकरं कृपावरं
सुरद्विषन्निकन्दनं नमामि गोपनन्दनम् ।
नवीनगोपनागरं नवीनकेलिलम्पटं
नमामि मेघसुन्दरं तडित्प्रभालसत्पटम् ॥ ६

समस्तगोपनन्दनं हृदम्बुजैकमोहनं
नमामि कुञ्जमध्यगं प्रसन्नभानुशोभनम्।
निकामकामदायकं दृगन्तचारुसायकं
रसालवेणुगायकं नमामि कुञ्जनायकम्॥ ७

विदग्धगोपिकामनोमनोज्ञतल्पशायिनं
नमामि कुञ्जकानने प्रवृद्धवह्निपायिनम्।
यदा तदा यथा तथा तथैव कृष्णसत्कथा
मया सदैव गीयतां तथा कृपा विधीयताम्॥ ८

प्रमाणिकाष्टकद्वयं जपत्यधीत्य यः पुमात्
भवेत्स नन्दनन्दने भवे भवे सुभक्तिमान्॥ ९

(श्रीमच्छङ्कराचार्यविरचितं इदमिति केचित्)

—*—

ब्रह्मानन्दविरचितम्

## श्रीकृष्णाष्टकम्

चतुर्मुखादिसंस्तुतं समस्तसात्वतानुतम्।
हलायुधादिसंयुतं नमामि राधिकाधिपम्॥ १

बकादिदैत्यकालकं सगोपगोपिपालकम्।
मनोहरासितालकं नमामि राधिकाधिपम्॥ २

सुरेन्द्रगर्वभञ्जनं विरिंचिमोहभञ्जनम्।
व्रजाङ्गनानुरञ्जनं नमामि राधिकाधिपम्॥ ३

मयूरपिच्छमण्डनं गजेन्द्रदन्तखण्डनम्।
नृशंसकंसदण्डनं नमामि राधिकाधिपम्॥ ४

प्रदत्तविप्रदारकं सुदामधामकारकम्।
सुरद्रुमापहारकं नमामि राधिकाधिपम्॥ ५

धनञ्जयाजयावहं महाचमूक्षयावहम्।
पितामहव्यथापहं नमामि राधिकाधिपम्॥ ६

मुनीन्द्रशापकारणं यदुप्रजापहारिणम्।
धराभरावतारणं नमामि राधिकाधिपम्॥ ७

सुवृक्षमूलशायिनं मृगारिमोक्षदायिनम्।
स्वकीयधाममायिनं नमामि राधिकाधिपम्॥ ८

इदं समाहितो हितं वराष्टकं सदा मुदा।
जपञ्जनो जनुर्जरादितो द्रुतं प्रमुच्यते॥ ९

—*—

श्रीवल्लभाचार्यकृतं

## श्रीकृष्णाश्रयस्तोत्रम्

सर्वमार्गेषु नष्टेषु कलौ च खलधर्मिणि।
पाषण्डप्रचुरे लोके कृष्ण एव गतिर्मम॥ १

म्लेच्छाक्रान्तेषु देशेषु पापैकनिलयेषु च।
सत्पीडाव्यग्रलोकेषु कृष्ण एव गतिर्मम॥ २

गङ्गादितीर्थवर्येषु दुष्टैरेवावृतेष्विह।
तिरोहिताधिदेवेषु कृष्ण एव गतिर्मम॥ ३

अहङ्कारविमूढेषु सत्सु पापानुवर्तिषु।
लाभपूजार्थयत्नेषु कृष्ण एव गतिर्मम॥ ४

अपरिज्ञाननष्टेषु मन्त्रेष्वव्रतयोगिषु।
तिरोहितार्थदेवेषु कृष्ण एव गतिर्मम ॥ ५

नानाकार्यविनष्टेषु सर्वकर्मव्रतादिषु।
पाषण्डैकप्रयत्नेषु कृष्ण एव गतिर्मम ॥ ६

अजामिलादिदोषाणां नाशकोऽनुभवे स्थितः।
ज्ञापिताखिलमाहात्म्यः कृष्ण एव गतिर्मम ॥ ७

प्राकृताः सकला देवा गणितानन्दकं बृहत्।
पूर्णानन्दो हरिस्तस्मात्कृष्ण एव गतिर्मम ॥ ८

विवेकधैर्यभक्त्यादिरहितस्य विशेषतः।
पापसक्तस्य दीनस्य कृष्ण एव गतिर्मम ॥ ९

सर्वसामर्थ्यसहितः सर्वत्रैवाखिलार्थकृत्।
शरणस्थसमुद्धारं कृष्णं विज्ञापयाम्यहम् ॥ १०

कृष्णाश्रयमिदं स्तोत्रं यः पठेत्कृष्णसन्निधौ।
तस्याश्रयो भवेत् कृष्ण इति श्रीवल्लभोऽब्रवीत् ॥ ११

—*—

रघुनाथकृतम्

## श्रीकृष्णचन्द्राष्टकम्

महानीलमेघातिभव्यं सुहासं शिवब्रह्मदेवादिभिः संस्तुतं च।
रमामन्दिरं देवनन्दापदाहं भजे राधिकावल्लभं कृष्णचन्द्रम् ॥ १

रसं वेदवेदान्तवेद्यं दुरापं सुगम्यं तदीयादिभिर्दानवघ्नम्।
चलत्कुण्डलं सोमवंशप्रदीपं भजे राधिकावल्लभं कृष्णचन्द्रम् ॥ २

यशोदादिसंलालितं पूर्णकामं दृशो रञ्जनं प्राकृतस्थस्वरूपम्।

दिनान्ते समायान्तमेकान्तभक्तैर्भजे राधिकावल्लभं कृष्णचन्द्रम् ॥ ३

कृपादृष्टिसंपातसिक्तस्वकुञ्जं तदन्तः स्थितस्वीयसम्यग्दशादम् ।
पुनस्तत्र तैः सत्कृतैकान्तलीलं भजे राधिकावल्लभं कृष्णचन्द्रम् ॥ ४

गृहे गोपिकाभिर्धृते चौर्यकाले तदक्ष्णोश्च निक्षिप्य दुग्धं चलन्तम् ।
तदा तद्वियोगादिसंपत्तिकारं भजे राधिकावल्लभं कृष्णचन्द्रम् ॥ ५

चलत्कौस्तुभव्याप्तवक्षःप्रदेशं महावैजयन्तीलसत्पादयुग्मम् ।
सुकस्तूरिकादीप्तभालप्रदेशं भजे राधिकावल्लभं कृष्णचन्द्रम् ॥ ६

गवां दोहने दृष्टराधामुखाब्जं तदानीं च तन्मेलनव्यग्रचित्तम् ।
समुत्पन्नतन्मानसैकान्तभावं भजे राधिकावल्लभं कृष्णचन्द्रम् ॥ ७

अदः कृष्णचन्द्राष्टकं प्रेमयुक्तः पठन्कृष्णसान्निध्यमाप्नोति नित्यम् ।
कलौ यः स संसार दुःखातिरिक्तं प्रयात्येव विष्णोः पदं निर्भयं तत् ॥ ८

—*—

श्री केवलरामप्रणीतम्

## श्रीकृष्णचन्द्राष्टकम्

वनभुवि विहरन्तौ तच्छविं वर्णयन्तौ
सुहृदमनुसरन्तौ दुर्हृदं सूदयन्तौ ।
उपयमुनमजन्तौ वेणुनादं सृजन्तौ
भज हृदय हसन्तौ रामकृष्णौ लसन्तौ ॥ १

कलयसि भवीरितिं नैव चेद्भूरिभूतिं
यमकृतनिगृहीतिं तर्हि कृत्वा विनीतिम् ।
जहिहि मुहुरनीतिं जायमानप्रतीतिं
कुरु मधुरिपुगीतिं रे मनो मान्यगीतिम् ॥ २

द्विपपरिवृढदन्तं यः समुत्पाट्य सान्तं
सदसि परिभवन्तं लीलया हन्त सन्तम्।
स्वजनमसुखयन्तं कंसमाराद्भ्रमन्तं
सकलहृदि वसन्तं चिन्तयामि प्रभुं तम्॥ ३

करधृतनवनीतः स्तेयतस्तस्य भीतः
पशुपगणपरीतः श्रीयशोदागृहीतः।
निखिलनिगमगीतः कालमायाद्यभीतः
कनकसदुपवीतः श्रीशुकादिप्रतीतः॥ ४

सकलजननियन्ता गोसमूहानुगन्ता
व्रजविलसदनन्ताभीरुगेहेषु रन्ता।
असुरनिकरहन्ता शक्रयागावमन्ता
जयति विजयियन्ता वेदमार्गाभिमन्ता॥ ५

सुकृतिविहितसेवो निर्जितानेकदेवो
भवविधिकृतसेवः प्रीणिताशेषदेवः।
स्म नयति वसुदेवो गोकुलं यं मुदे वो
भवतु स यदुदेवः सर्वदा वासुदेवः॥ ६

करकजधृतशैले प्रोल्लसत्पीतचैले
रुचिरनवघनाभे शोभने पद्मनाभे।
विकचकुसुमपुञ्जे शोभमाने निकुञ्जे
स्थितवति कुरु चेतः प्रीतिमन्यत्र नेतः॥ ७

विषयविरचिताशे प्राप्तसंसारपाशेऽ-
नवगतनिजरूपे सृष्टकर्मण्यपूपे।
सुकृतकृतिविहीने श्रीहरे भक्तिहीने
मयि कृतय! समन्तौ केवले दीनजन्तौ॥ ८

—*—

वासुदेवानन्दसरस्वतीकृतम्

# श्रीकृष्णलहरीस्तोत्रम्

कदा वृन्दारण्ये विपुलयमुनातीरपुलिने
चरन्तं गोविन्दं हलधरसुदामादिसहितम्।
अहो कृष्ण स्वामिन् मधुरमुरलीमोहन विभो
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान्॥ १

कदा कालिन्दीयैर्हरिचरणमुद्राङ्कितटैः
स्मरन्गोपीनाथं कमलनयनं सस्मितमुखम्।
अहो पूर्णानन्दाम्बुजवदन भक्तैकललन
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान्॥ २

कदाचित्खेलन्तं व्रजपरिसरे गोपतनयैः
कुतश्चित्संप्राप्तं किमपि लसितं गोपललनम्।
अये राधे किं वा हरसि रसिके कञ्चुकयुगं
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान्॥ ३

कदाचिद्गोपीनां हसितचकितस्निग्धनयनं
स्थितं गोपीवृन्दे नटमिव नटन्तं सुललितम्।
सुराधीशैः सर्वैः स्तुतपदमिदं श्रीहरिमिति
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान्॥ ४

कदाचित्सच्छायाश्रितमभिमहान्तं यदुपतिं
समाधिस्वच्छायांचलइव विलोलैकमकरम्।
अये भक्तोदाराम्बुजवदन नन्दस्य तनय
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान्॥ ५

कदाचित्कालिन्द्यास्तटतरुकदम्बे स्थितममुं
स्मयन्तं साकूतं हृतवसनगोपीसुतपदम्।
अहो शक्रानन्दाम्बुजवदन गोवर्धनधर
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान्॥ ६

कदाचित्कान्तारे विजयसखमिष्टं नृपसुतं
वदन्तं पार्थेति नृपसुत सखे बन्धुरिति च।
भ्रमन्तं विश्रान्तं श्रितमुरलिमास्यं हरिममी
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान्॥ ७

कदा द्रक्ष्ये पूर्णं पुरुषममलं पङ्कजदृशं
अहो विष्णो योगिन् रसिकमुरलीमोहन विभो।
दयां कर्तुं दीने परमकरुणाब्धे समुचितं
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान्॥ ८

—*—

श्रीरूपगोस्वामिविरचितं

## कुञ्जविहार्यष्टकम्।

इन्द्रनीलमणिमञ्जुलवर्णः फुल्लनीपकुसुमाञ्चितकर्णः।
कृष्णलाभिरकृशोरसिहारी सुन्दरो जयति कुञ्जविहारी॥ १

राधिकावदनचन्द्रचकोरः सर्ववल्लववधूधृतिचौरः।
चर्चरीचतुरताञ्चितचारी चारतो जयति कुञ्जविहारी॥ २

सर्वतः प्रथितकौलिकपर्वध्वंसनेन हतवासवगर्वः।
गोष्ठरक्षणकृते गिरिधारी लीलया जयति कुञ्जविहारी॥ ३

रासमण्डलविभूषितवंशीविभ्रमेण मदनोत्सवशंसी।
स्तूयमानचरितः शुकशारी श्रेणिभिर्जयति कुञ्जविहारी॥ ४

शातकुम्भरुचिहारिदुकूलः केकिचन्द्रकविराजितचूलः।
नव्ययौवनलसद्व्रजनारीरञ्जनो जयति कुञ्जविहारी॥ ५

स्थासकीकृत सुगन्धिपटीरः स्वर्णकाञ्चि परिशोभिकटीरः।
राधिकोन्नतपयोधरवारीकुञ्जरो जयति कुञ्जविहारी॥ ६

गौरधातुतिलकोज्ज्वलभालः केलिचञ्चलितचम्पकमालः।
अद्रिकन्दरगृहेष्वभिसारी सुभ्रुवां जयति कुञ्जविहारी॥ ७

विभ्रमोच्चलदृगञ्चलनृत्यक्षिप्तगोपललनाखिलकृत्यः।
प्रेममत्तवृषभानुकुमारीनागरो जयति कुञ्जविहारी॥ ८

अष्टकं मधुरकुञ्जविहारिक्रीडया पठति यः किल हारि।
स प्रयाति विलसत्परभागं तस्य पादकमलार्चनरागम्॥ ९

—*—

श्रीधरवेङ्कटेशार्यकृता

## कृष्णद्वादशमञ्जरी

दुराशान्धोऽमुष्मिन् विषयविसरावर्तजठरे
तृणच्छन्ने कूपे तृणकबळलुब्धः पशुरिव।
पतित्वा खिद्येऽसावगतिरिति उद्धृत्य कलयेः
कदा मां कृष्ण त्वत्पदकमललाभेन सुखितम्॥ १

कथञ्चिद्यच्चित्ते कमलभवकामान्तकमुखाः
वहन्तो मज्जन्ति स्वयमनवधौ हर्षजलधौ।
क तद्दिव्यश्रीमच्चरणकमलं कृष्ण भवतः
क चाहं तत्रेहा मम शुन इवाखण्डलपदे॥ २

दुरापस्त्वं कृष्ण स्मरहरमुखानां तदपि ते
क्षतिः का कारुण्यादगतिरिति मां लालयसि चेत्।
प्रपश्यन् रथ्यायां शिशुमगतिमुद्दामरुदितं
न सम्राडप्यङ्के दधदुरुदयस्सान्त्वयति किम्॥ ३

प्रतिश्वासं नेतुं प्रयतनधुरीणः पितृपतिः
विपत्तीनां व्यक्तं विहरणमिदं तु प्रतिपदम्।
तथा हेयव्यूहा तनुरियमिहाथाप्यभिरमे
हतात्मा कृष्णैतां कुमतिमपहन्या मम कदा॥ ४

विधीशाराध्यस्त्वं प्रणयविनयाभ्यां भजसि यान्
प्रियस्ते यत्सेवी विमत इतरस्तेषु तृणधीः।
किमन्यत्सर्वोऽपि त्वदनभिमतैव स्थितिरहो
दुरात्मैवं ते स्यां यदुवर दयार्हः कथमहम्॥ ५

विनिन्द्यत्वे तुल्याधिकविरहिता ये खलु खलाः
तथाभूतं कृत्यं यदपि सह तैरेव वसतिः।
तदेवानुष्ठेयं मम भवति नेहास्त्यरुचिर-
प्यहो धिङ्मां कुर्वे किमिव न दया कृष्ण मयि ते॥ ६

त्वदाख्याभिख्यानत्वदमलगुणास्वादनभवत्-
सपर्याद्यासक्ता जगति कति वाऽऽनन्दजलधौ।
न खेलन्त्येवं दुर्व्यसनहुतभुग्गर्भपतित-
स्त्वहं सीदाम्येको यदुवर दयेथा मम कदा॥ ७

कदा वा निर्हेतून्मिषितकरुणालिङ्गितभवत्-
कटाक्षालम्बेन व्यसनगहनान्निर्गत इतः।
हताशेषग्लानिन्यमृतरसनिष्यन्दशिशिरे
सुखं पादाम्भोजे यदुवर कदाऽसानि विहरन्॥ ८

अनित्यत्वं जानन्नतिदृढमदर्पः सविनयः
स्वके दोषेऽभिज्ञः परजुषि तु मूढस्सकरुणः ।
सतां दासः शान्तः सममतिरजस्रं तव यथा
भजेयं पादाब्जं यदुवर दयेथा मम कदा ॥ ९

करालं दावाग्निं कबळितवता देव भवता
परित्राता गोपाः परमकृपया किं न हि पुरा ।
मदीयान्तर्वैरिप्रकरदहनं किं कबळयन्
दयासिन्धो गोपीदयित वद गोपायसि न माम् ॥ १०

न भीरारुह्यासं नदति शमने नाप्युदयते
जुगुप्सा देहस्याशुचिनिचयभावे स्फुटतरे ।
अपि व्रीळा नोदेत्यवमतिशते सत्यनुपदं
क्व मे स्यात्त्वद्भक्तिः कथमिव कृपा कृष्ण मयि ते ॥ ११

बलीयस्यत्यन्तं मदघपटली तद्यदुपते
परित्रातुं नो मां प्रभवसि तथा नो दमयितुम् ।
अलाभादार्तीनां इदमनुगुणानामदयिते
कियद्दौस्थ्यं धिङ्मां त्वयि विमतमात्मद्रुहमिमम् ॥ १२

—*—

## श्रीकृष्णशरणाष्टकम्

द्विदलीकृतदृक्स्वास्यः पन्नगीकृतपन्नगः ।
कृशीकृतकृशानुश्च श्रीकृष्णः शरणं मम ॥ १

फलीकृतफलार्थी च कुसृतीकृतकौरवः ।
निर्वातीकृतवातारिः श्रीकृष्णः शरणं मम ॥ २

कृतार्थीकृतकुंतीजः प्रपूतीकृतपूतनः।
कलंकीकृतकंसादिः श्रीकृष्णः शरणं मम। ३

सुखीकृतसुदामा च शङ्करीकृतशङ्करः।
सिलीकृतसरिन्नाथः श्रीकृष्णः शरणं मम॥ ४

छलीकृतबलिद्यौर्यो निधनीकृतधेनुकः।
कन्दर्पीकृतकुब्जादिः श्रीकृष्णः शरणं मम। ५

महेन्द्रीकृतमाहेयः शिथिलीकृतमैथिलः।
आनन्दीकृतनन्दाद्यः श्रीकृष्णः शरणं मम॥ ६

वराकीकृतराकेशो विपक्षीकृतराक्षसः।
संतोषीकृतसद्भक्तः श्रीकृष्णः शरणं मम॥ ७

जरीकृतजरासन्धः कमलीकृतकार्मुकः।
प्रभ्रष्टीकृतभीष्मादिः श्रीकृष्णः शरणं मम॥ ८

श्रीकृष्णः शरणं ममाष्टकमिदं प्रोत्थाय यः संपठेत्
स श्रीगोकुलनायकस्य पदवीं संयाति भूमीतले।
पश्यत्येव निरन्तरं तरणिजातीरस्थकेलिं प्रभोः
सम्प्राप्नोति तदीयतां प्रतिदिनं गोपीशतैरावृताम्॥ ९

—*—

## श्रीकृष्णशरणाष्टकम्।

सर्वसाधनहीनस्य पराधीनस्य सर्वतः।
पापपीनस्य दीनस्य श्रीकृष्णः शरणं मम॥ १

संसारसुखसंप्राप्तिसन्मुखस्य विशेषतः।
बहिर्मुखस्य सततं श्रीकृष्णः शरणं मम॥ २

सदा विषयकामस्य देहारामस्य सर्वथा।
दुष्टस्वभाववामस्य श्रीकृष्णः शरणं मम ।। ३

संसारसर्पदष्टस्य धर्मभ्रष्टस्य दुर्मतेः ।
लौकिकप्राप्तिकष्टस्य श्रीकृष्णः शरणं मम ।। ४

विस्मृतस्वीयधर्मस्य कर्ममोहितचेतसः ।
स्वरूपज्ञानशून्यस्य श्रीकृष्णः शरणं मम ।। ५

संसारसिन्धुमग्नस्य भग्नभावस्य दुष्कृतेः ।
दुर्भावलग्न मनसः श्रीकृष्णः शरणं मम ।। ६

विवेकधैर्यभक्त्यादिरहितस्य निरन्तरम्।
विरुद्धकरणासक्तेः श्रीकृष्णः शरणं मम ।। ७

एतदष्टकपाठेन ह्येतदुक्तार्थभावनात्।
निजाचार्यपदाम्भोजसेवकोऽदैन्यमाप्नुयात्।। ८

—*—

नारदकृतः

## श्रीकृष्णस्तवराजः

प्रसीद भगवन्मह्यमज्ञानात्कुण्ठितात्मने।
तवाङ्घ्रिपङ्कजरजोरागिणीं भक्तिमुत्तमाम्।। १

अज प्रसीद भगवन्नमितद्युतिपञ्जर।
अप्रमेय प्रसीदास्मद्दुःखहन्पुरुषोत्तम ।। २

स्वसंवेद्य प्रसीदास्मदानन्दात्मन्ननामय।
अचिन्त्यसार विश्वात्मन्प्रसीद परमेश्वर ।। ३

प्रसीद तुङ्ग तुङ्गानां प्रसीद शिव शोभन।
प्रसीद गुणगम्भीर गम्भीराणां महाद्युते॥ ४

प्रसीद व्यक्त विस्तीर्ण विस्तीर्णानामगोचर।
प्रसीदार्द्रार्द्रजातीनां प्रसीदान्तान्तदायिनाम्॥ ५

गुरोर्गरीयः सर्वेश प्रसीदानन्त देहिनाम्।
जय माधव मायात्मन् जय शाश्वत शङ्खभृत्॥ ६

जय शङ्खधर श्रीमन् जय नन्दकनन्दन।
जय चक्रगदापाणे जय देव जनार्दन॥ ७

जय रत्नवराबद्धकिरीटाक्रान्तमस्तक।
जय पक्षिपतिच्छायानिरुद्धार्ककरारुण॥ ८

नमस्ते नरकाराते नमस्ते मधुसूदन।
नमस्ते ललितापाङ्ग नमस्ते नरकान्तक॥ ९

नमः पापहरेशान नमः सर्वभयापह।
नमः संभूतसर्वात्मन्नमः संभृतकौस्तुभ॥ १०

नमस्ते नयनातीत नमस्ते भयहारक।
नमो विभिन्नवेषाय नमः श्रुतिपथातिग॥ ११

नमस्त्रिमूर्तिभेदेन सर्गस्थित्यन्तहेतवे।
विष्णवे त्रिदशारातिजिष्णवे परमात्मने॥ १२

चक्रभिन्नारिचक्राय चक्रिणे चक्रवल्लभ।
विश्वाय विश्ववन्द्याय विश्वभूतानुवर्तिने॥ १३

नमोऽस्तु योगिध्येयात्मन्नमोऽस्त्वध्यात्मरूपिणे।
भक्तिप्रदाय भक्तानां नमस्ते भक्तिदायिने। १४

पूजनं हवनं चेज्या ध्यानं पश्चान्नमस्क्रिया।
देवेश कर्म सर्वं मे भवेदाराधनं तव॥ १५

इति हवनजपार्चाभेदतो विष्णुपूजानियतहृदयकर्मा यस्तु मन्त्री चिराय।
स खलु सकलकामान् प्राप्य कृष्णान्तरात्मा जननमृतिविमुक्तोऽप्युत्तमां
भक्तिमेति॥ १६

गोगोपगोपिकावीतं गोपालं गोषु गोप्रदम्।
गोपैरीड्यं गोसहस्रैर्नौमि गोकुलनायकम्॥ १७

प्रीणयेदनया स्तुत्या जगन्नाथं जगन्मयम्।
धर्मार्थकाममोक्षाणामाप्तये पुरुषोत्तमम्॥ १८

(श्रीनारदपञ्चरात्रे ज्ञानामृतसारे)

—*—

कृष्णदासविरचितः

## श्रीकृष्णस्तवराजः

अनन्तकन्दर्पकलाविलासं किशोरचन्द्रं रसिकेन्द्रशेखरम्।
श्यामं महासुन्दरतानिधानं श्रीकृष्णचन्द्रं शरणं गतोऽस्मि॥ १

अनन्तविद्युद्द्युतिचारुपीतं कौशेयसंवीतनितम्बबिम्बम्।
अनन्तमेघच्छविदिव्यमूर्तिं श्रीकृष्णचन्द्रं शरणं गतोऽस्मि॥ २

महेन्द्रचापच्छविपिच्छचूढं कस्तूरिकाचित्रकशोभिमालम्।
मन्दादरोद्घूर्णविशालनेत्रं श्रीकृष्णचन्द्रं शरणं गतोऽस्मि॥ ३

भ्राजिष्णुगल्लं मकराङ्कितेन विचित्ररत्नोज्ज्वलकुण्डलेन।
कोटीन्दुलावण्यमुखारविन्दं श्रीकृष्णचन्द्रं शरणं गतोऽस्मि॥ ४

वृन्दाटवीमञ्जुलकुञ्जवाद्यं श्रीराधया सार्धमुदारकेलिम्।
आनन्दपुञ्जं ललितादिदृश्यं श्रीकृष्णचन्द्रं शरणं गतोऽस्मि ॥ ५

महार्हकेयूरककङ्कणश्रीग्रैवेयहारावलिमुद्रिकाभिः।
विभूषितं किङ्किणिनूपुराभ्यां श्रीकृष्णचन्द्रं शरणं गतोऽस्मि ॥ ६

विचित्ररत्नोज्ज्वलदिव्यवासाप्रगीतरामागुणरूपलीलम्।
मुहुर्मुहुः प्रोदितरोमहर्षं श्रीकृष्णचन्द्रं शरणं गतोऽस्मि ॥ ७

श्रीराधिकेयाधरसेवनेन माद्यन्तमुच्चै रतिकेलिलोलम्।
स्मरोन्मदान्धं रसिकेन्द्रमौलिं श्रीकृष्णचन्द्रं शरणं गतोऽस्मि ॥ ८

अङ्के निधाय प्रणयेन राधां मुहुर्मुहुश्चुम्बिततन्मुखेन्दुम्।
विचित्रवेषैः कृततद्विभूषणं श्रीकृष्णचन्द्रं गतोऽस्मि ॥ ९

—*—

## श्रीकृष्णस्तुतिः

इन्दीवरदलश्याममिन्दिरानन्दकन्दलम्।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम्॥ १

देवः पायादपायान्नः स्मरेन्दीवरलोचनः।
संसारध्वान्तविध्वंसहंसकंसनिषूदनः ॥ २

पान्तु वो जलदश्यामाः शार्ङ्गज्याघातकर्कशाः।
त्रैलोक्यमण्डपस्तम्भाश्चत्वारो हरिबाहवः ॥ ३

दर्पणार्पितमालोक्य मायास्त्रीरूपमात्मनः।
आत्मन्येवानुरक्तो वः शिवं दिशतु केशवः ॥ ४

हृदयं कौस्तुभोद्भासि हरेः पुष्णातु वः श्रियम्।
राधाप्रवेशरोधाय दत्तमुद्रमिव श्रिया ॥ ५

देहि मत्कन्दुकं राधे परिधाननिगूहितम्।
इति विस्रंसयन्नीवीं तस्याः कृष्णो मुदेऽस्तु नः ॥ ६

चण्डचाणूरदोर्दण्डमण्डलीखण्डमण्डितम्।
अव्याद्वो बालवेषस्य विष्णोर्गोपतनोर्वपुः ॥ ७

मीमांसार्णवसोमं लसदर्कं तर्कपद्मस्य ।
वेदान्तविपिनसिंहं वन्दे गोविन्दसाभिधं ब्रह्म ॥ ८

अवलोकितमनुमोदितमालिङ्गितमङ्गनाभिरनुरागैः ।
अधिवृन्दावनकुञ्जं मरकतपुञ्जं नमस्यामः ॥ ९

मकरीविरचनभङ्ग्या राधाकुचकलशपीडनव्यसनी ।
ऋजुमपि रेखां लुम्पन्बल्लववेषो हरिर्जयति ॥ १०

कठिनतरदामवेष्टनलेखासन्देहदायिनो यस्य ।
राजन्ति वलिविभङ्गाः स पातु दामोदरो भवतः ॥ ११

खिन्नोऽसि मुञ्च शैलं बिभृमो वयमिति वदत्सु शिथिलभुजः ।
भरभुग्नविनतबाहुषु गोपेषु हसन्हरिर्जयति ॥ १२

नीतं नवनवनीतं कियदिति पृष्टो यशोदया कृष्णः ।
इयदिति गुरुजनसंसदि करधृतराधापयोधरः पातु । १३

राधामधुसूदनयोरनुदिनमुपचीयमानस्य ।
प्रणयतरोरिव कुसुमं मिथोऽवलोकस्मितं पायात्॥ १४

श्रुतिमपरे स्मृतिमपरे भारतमपरे भजन्तु भवभीताः ।
अहमिह नन्दं वन्दे यस्यालिन्दे परं ब्रह्म ॥ १५

तप्तं कैर्न तपोभिः फलितं तद्गोपबालानाम्।
लोचनयुगले यासामञ्जनमासीन्निरञ्जनं ब्रह्म ॥ १६

मदमयमदमयदुरगं यमुनामवतीर्य वीर्यशाली यः।
मम रतिममरतिरस्कृतिशमनपरः स क्रियात्कृष्णः ।। १७

स्तनन्धयन्तं जननी मुखाब्जं विलोक्य मन्दस्मितमुज्ज्वलाङ्गम्।
स्पृशन्तमन्यं स्तनमङ्गुलीभिर्वन्दे यशोदाङ्कगतं मुकुन्दम्।। १८

भुजप्रभादण्ड इवोर्ध्वगामी स पातु वः कंसरिपोः कृपाणः।
यः पाञ्चजन्यप्रतिबिम्बभङ्ग्या धाराम्भसः फेनमिव व्यनक्ति।। १९

विहाय पीयूषरसं मुनीश्वरा ममाङ्घ्रिराजीवरसं पिबन्ति किम्।
इति स्वपादाम्बुजपानकौतुकी स गोपबालः श्रियमातनोतु वः ।। २०

विलिख्य सत्याकुचकुम्भसीम्नि पत्रावलिन्यासमिषेण राधाम्।
लीलारविन्देन तया सरोषं पायाद्विटः कोऽप्यभिहन्यमानः ।। २१

स पातु वो यस्य हतावशेषास्तत्तुल्यवर्णाञ्जनरञ्जितेषु।
लावण्ययुक्तेष्वपि वित्रसन्ति दैत्याः स्वकान्तानयनोत्पलेषु।। २२

कुञ्चिताधरपुटेन पूरयन्वंशिकां प्रचलदङ्गुलिक्रमः।
मोहयन्निखिलवामलोचनाः पातु कोऽपि नवनीरदच्छविः ।। २३

अतसीकुसुमोपमेयकान्तिर्यमुनातीरकदम्बमध्यवर्ती।
नवगोपवधूविनोदशाली वनमाली वितनोतु मङ्गलं वः ।। २४

गायन्तीनां गोपसीमन्तिनीनां स्फीताकाङ्क्षामक्षिरोलम्बमालाम्।
निश्वाश्वल्यामात्मवक्त्रारविन्दे कुर्वन्नव्याद्देवकीनन्दनो वः ।। २५

पुञ्जीभूतं प्रेम गोपाङ्गनानां मूर्तीभूतं भागधेयं यदूनाम्।
एकीभूतं गुप्तवित्तं श्रुतीनां श्यामीभूतं ब्रह्म मे संनिधत्ताम्।। २६

आनन्दमादधतमायतलोचनानां
आनीलमावलितकन्धरमात्तवंशम्।

आपादमामुकुटमाकलितामृतौघं
आकारमाकलयताममुमान्तरं नः ॥ २७

त्वां पातु नीलनलिनीदलदामकान्तेः
कृष्णस्य पाणिसरसीरुहकोशबन्धः ।
राधाकपोलमकरीलिखनेषु योऽयं
कर्णावतंसकमलं विपुलीचकार ॥ २८

उत्फुल्लमानसरसीरुहचारुमध्य
निर्यन्मधुव्रतभरद्युतिहारिणीभिः ।
राधाविलोचनकटाक्षपरम्पराभिः
दृष्टो हरिस्तव सुखानि तनोतु कामम् ॥ २९

गोवर्धनोद्धरणहृष्टसमस्तगोपनानास्तुतिश्रवणलज्जितमानसस्य ।
स्मृत्वा वराहवपुरिन्दुकलाप्रकाशदंष्ट्रोद्धृतक्षिति हरेरवतु स्मितं वः ॥ ३०

अभिनवनवनीतप्रीतमाताम्रनेत्रं
विकचनलिनलक्ष्मीस्पर्धि सानन्दवक्त्रम् ।
हृदयभवनमध्ये योगिभिर्ध्यानगम्यं
नवगगनतमालश्यामलं कंचिदीडे ॥ ३१

अभिनवनवनीतस्निग्धमापीतदुग्धं
दधिकणपरिदिग्धं मुग्धमङ्गं मुरारेः ।
दिशतु भुवनकृच्छ्रच्छेदितापिच्छगुच्छ
च्छवि नवशिखिपिच्छालाञ्छितं वाञ्छितं वः ॥ ३२

कनककलशस्वच्छे राधापयोधरमण्डले
नवजलधरश्यामामात्मद्युतिं प्रतिबिम्बिताम् ।
असितसिचयप्रान्तभ्रान्त्या मुहुर्मुहुरुत्क्षिपन्
जयति जनितव्रीडाहासप्रियाहसितो हरिः ॥ ३३

ललितगमना नार्यो राजन्मनोजनितान्तभाः
सुरतिसदृशस्ताः सन्मुख्यो भवानपि तद्भवे।
वनभुवमितो गेहादेको न गच्छतु मां विने
त्यसकृदुदितः पुत्रः पित्रा जयत्यनघो हरिः॥ ३४

देवः पायात्पयसि विमले यामुने मज्जतीनां
याचन्तीनामनुनयपदैर्वञ्चितान्यंशुकानि।
लज्जालोलैरलसवलितैरुन्मिषत्पञ्चबाणैः
गोपस्त्रीणां नयनकुसुमैरञ्चितः केशवो नः॥ ३५

वृन्दारण्ये तपनतनयातीरवानीरकुञ्जे
गुञ्जन्मञ्जुभ्रमरपटलीकाकलीकेलिभाजि।
आभीराणां मधुरमुरलीनादसंमोहितानां
मध्ये क्रीडन्नवतु नियतं नन्दगोपालबालः॥ ३६

शिरश्छायां कृष्णः क्षणमकृत राधाचरणयोः
भुजावल्लिच्छायामियमपि तदीयप्रतिकृतौ।
इति क्रीडाकोपे निभृतमुभयोरप्यनुनय-
प्रसादौ जीयास्तामपि गुरुसमक्षं स्थितवतोः॥ ३७

अवेमव्यापाराकलनमतुरी स्पर्श मचिराद्-
अनुन्मीलत्तन्तु प्रकरघटनायासमसकृत्।
विषीदत्पाञ्चाली विपदपनयैक प्रणयिनः
पटानां निर्माणं पतगघतिकेतोरवतु वः॥ ३८

11

कपोले पत्रालीं पुलकिनि विधातुं व्यवसितः
स्वयं श्रीराधायाः करकलितवर्तिर्मधुरिपुः।
अभूद्वक्त्रेन्दौ यन्निहितनयनः कम्पितभुजः
तदेतत्सामर्थ्यं तदभिनवरूपस्य जयति॥ ३९

जयश्रीविन्यस्तैर्महित इव मन्दारकुसुमैः
स्वयं सिन्दूरेण द्विपरणमुदा मुद्रित इव।
भुजापीडक्रीडाहतकुवलयापीडकरिणः
प्रकीर्णासृग्बिन्दुर्जयति भुजदण्डो मुरजितः ॥ ४१

सुपर्णः स्वर्णाद्रौ रचितमणिभृङ्गे जलधिजा-
मुखाम्भोजे भृङ्गो निगमविलसत्पञ्जरशुकः।
त्रिलोकीकस्तूरितिलककमनीयो व्रजवधू-
विहारी श्रीकृष्णो दिशतु भवतां शर्म सततम् ॥ ४२

क यासि खलु चौरिके प्रमुषितं स्फुटं दृश्यते
द्वितीयमिह मामकं वहसि कन्दुकं कञ्चुके।
त्यजेति नवगोपिकाकुचयुगं प्रमथ्नन्बलात्
लसत्पुलकपञ्जरो जयति गोकुले केशवः ॥ ४३

मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमैः
नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय।
इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं
राधामाधवयोर्जयन्ति यमुनाकूले रहःकेलयः ॥ ४४

कौन्तेयस्य सहायतां करुणया गत्वा विनीतात्मनो
येनोल्लङ्घितसत्पथः कुरुपतिश्चक्रे कृतान्तातिथिः।
त्रैलोक्यस्थितिसूत्रधारतिलको देवः सदा संपदे
साधूनामसुराधिनाथमथनः स्ताद्देवकीनन्दनः ॥ ४५

आताम्रे नयने स्फुरन्कुचभरः श्वासो न विश्राम्यसि
स्वेदाम्भःकणदन्तुरं तव मुखं हेतस्तु नो लक्ष्यते।
धिक्को वेद मनः स्त्रिया इति गिरा रुष्टां प्रियां भीषयन्
तस्यास्तत्क्षणकातरेक्षणपरिस्पृष्टो हरिः पातु वः ॥ ४६

संसक्तानिव पातुमौपनिषदव्याहारमाध्वीरसा
नुन्मार्ष्टुं व्रजसुन्दरीकुचतटीपाटीररेणूनिव।
उन्मीलन्मुरलीनिनादबहुलामोदोपसीदद्रवी
जिह्वालीढमलीकवल्लवशिशोः पादाम्बुजं पातु वः ॥ ४०

कृष्णो गोरसचौर्यमम्ब कुरुते किं कृष्ण मातः सुरा-
पानं न प्रकरोमि राम किमिदं नाहं परस्त्रीरतः।
किं गोविन्द वदत्यसौ हलधरो मिथ्येति तां व्याहरन्
गोपीगोपकदम्बकं विहसयन्मुग्धो मुकुन्दोऽवतु ॥ ४१

मातस्तर्णकरक्षणाय यमुनाकच्छं न गच्छाम्यहं
कस्माद्वत्स पिनष्टि पीवरकुचद्वन्द्वेन गोपीजनः।
भ्रूसंज्ञाविनिवारितोऽपि बहुशो जल्पन्यशोदाग्रतो
गोपीपाणिसरोजमुद्रितमुखो गोपीपतिः पातु वः ॥ ४२

कासि त्वं वद चौर्यकारिणि कुतः कस्त्वं पुरो यामिकः
किं ब्रूषे मुषितौ सुवर्णकलशौ भूपस्य केन त्वया।
कुत्र स्तः प्रकटौ तवाञ्चलतटे कुत्रेति तत्पश्यतां
इत्युक्ते धृतवल्लवीकुचयुगस्त्वां पातु पीताम्बरः ॥ ४३

कृष्ण त्वं पठ किं पठामि ननु रे शास्त्रं किमु ज्ञायते
तत्त्वं कस्य विभोः स कस्त्रिभुवनाधीशश्च तेनापि किम्।
ज्ञानं भक्तिरथो विरक्तिरनया किं मुक्तिरेवास्तु ते
दध्यादीनि भजामि मातुरुदितं वाक्यं हरेः पातु वः ॥४४

कृष्ण त्वं नवयौवनोऽसि चपलाः प्रायेण गोपाङ्गनाः
कंसो भूपतिरब्जनालमृदुलग्रीवा वयं गोदुहः।
तद्याचेऽञ्जलिना भवन्तमधुना वृन्दावनं मद्विना
मा यासीरिति नन्दगोपवचसा नम्रो हरिःपातु वः ॥ ४५

कस्त्वं कृष्णमवेहि मां किमिह ते मन्मन्दिराशङ्कया
युक्तं तन्नवनीतभाजनपुटे न्यस्तः किमर्थं करः ।
कर्तुं तत्र पिपीलिकापनयनं सुप्ताः किमुद्बोधिता
बाला वत्सगतिं विवेक्तुमिति संजल्पन्हरिः पातु वः ॥ ४६

स्वामी मुग्धतरो वनं घनमिदं बालाऽहमेकाकिनी
क्षोणीमावृणुते तमालमलिनच्छाया तमःसंहतिः ।
तन्मे सुन्दर कृष्ण मुञ्च सहसा वर्त्मेति गोप्या गिरः
श्रुत्वा तां परिरभ्य मन्मथकलासक्तो हरिः पातु वः ॥ ४७

मातः किं यदुनाथ देहि चषकं किं तेन पातुं पयः
तन्नास्त्यद्य कदास्ति तन्निशि निशा का वान्धकारोदये ।
आमील्याक्षियुगं निशाप्युपगता देहीति मातुः पुनः
वक्षोजाम्बरकर्षणोद्यतकरः कृष्णः स पुष्णातु नः ॥ ४८

अर्धोन्मीलितलोचनस्य पिबतः पर्याप्तमेकं स्तनं
सद्यःप्रस्नुतदुग्धदिग्धमपरं हस्तेन संमार्जतः ।
मात्रा चाङ्गुलिलालितस्य चिबुके स्मेरायमाणे मुखे
विष्णोः क्षीरकणाम्बुधामधवला दन्तद्युतिः पातु वः ॥ ४९

गच्छाम्यच्युत दर्शनेन भवतः किं तृप्तिरुत्पद्यते
किं त्वेवं विजनस्थयोर्हतजनः संभावयत्यन्यथा ।
इत्यामन्त्रणभङ्गिसूचितवृथाप्रस्थानखेदालसां
आश्लिष्यन्पुलकाङ्कुराञ्चितवपुर्गोपीं हरिः पातु वः ॥ ५०

रामो नाम बभूव हुं तदबला सीतेति हुं तौ पितुः
वाचा पञ्चवटीवने निवसतस्तामाहरद्रावणः ।
कृष्णेनेति पुरातनीं निजकथामाकर्ण्य मात्रेरितां
सौमित्रे क धनुर्धनुर्धनुरिति प्रोक्ता गिरः पान्तु वः ॥ ५१

कोऽयं द्वारि हरिः प्रयाह्युपवनं शाखामृगस्यात्र किं
कृष्णोऽहं दयिते बिभेमि सुतरां कृष्णादहं वानरात्।
राधेऽहं मधुसूदनो व्रजलतां तामेव पुष्पान्वितां
इत्थं निर्वचनीकृतो दयितया ह्रीणो हरिः पातु वः ॥ ५२

पीठे पीठनिषण्णबालकगले तिष्ठन्सगोपालको
यन्त्रान्तः स्थितदुग्धभाण्डमवभिद्याच्छाद्य घण्टारवम्।
वक्त्रोपान्तकृताञ्जलिः कृतशिरःकम्पं पिबन्यः पयः
पायादागतगोपिकानयनयोर्गण्डूषफूत्कारकृत्॥ ५३

पद्मे त्वन्नयने स्मरामि सततं भावो भवत्कुन्तले
नीले मुह्यति किं करोमि महितैः क्रीतोऽस्मि ते विभ्रमैः।
इत्युत्स्वप्नवचो निशम्य सरुषा निर्भर्त्सितो राधया
कृष्णस्तत्परमेव तद्व्यपदिशन्क्रीडाविटः पातु वः ॥ ५४

दृष्ट्या केशव गोपरागहृतया किञ्चिन्न दृष्टं मया
तेनात्र स्खलितास्मि नाथ पतितां किं नाम नालम्बसे।
एकस्त्वं विषमेषुखिन्नमनसां सर्वाबलानां गतिः
गोप्यैवं गदितः सलेशमवताद्गोष्ठे हरिर्वश्चिरम्॥ ५५

केयं भाग्यवती तवोरसि मणी ब्रूषेऽग्रवर्णं विना
कृत्वास्याः प्रथमं विना क सहजो वर्णो मणेस्तादृशः।
स्त्रीरूपं कथमस्य लिङ्गनियमात्पृच्छामि वध्वाकृतिं
मुग्धे त्वत्प्रतिबिम्बमित्यपलपन् राधां हरिः पातु वः ॥५६

यां दृष्ट्वा यमुनापिपासुरनिशं व्यूहो गवां गाहते
विद्युत्वानिति नीलकण्ठनिवहो यां द्रष्टुमुत्कण्ठते।
उत्तंसाय तमालपल्लवमिति च्छिन्दन्ति यां गोपिकाः
कान्तिं कालियशासनस्य वपुषः सा पावनी पातु वः ॥ ५७

श्रीमद्गोपवधूस्वयंग्रहपरिष्वङ्गेषु तुङ्गस्तन
व्यामर्दाद्गलितेऽपि चन्दनरजस्यङ्गे वहन्सौरभम्।
कश्चिज्जागरजातरागनयनद्वन्द्वः प्रभाते श्रियं
बिभ्रत्कामपि वेणुनादरसिको जाराग्रणीः पातु वः ।। ५८

कण्ठालिङ्गनमङ्गलं घनकुचाभोगोपभोगोत्सवं
श्रोणीसङ्गमसौभगं च सततं मत्प्रेयसीनां पुरः ।
प्रासं कोऽयमितीर्ष्ययेव यमुनाकूले बलाद्यः स्वयं
गोपीनामहरद्दुकूलनिचयं कृष्णः स पुष्णातु नः ।। ५९

कृष्णेनाम्ब गतेन रन्तुमसकृन्मृद्भक्षिता स्वेच्छया
सत्यं कृष्ण क एवमाह मुसली मिथ्याम्ब पश्याननम्।
व्यादेहीति विकासिते च वदने दृष्ट्वा समस्तं जगत्
माता यस्य जगाम विस्मयपदं पायात्स वः श्रीपतिः ।। ६०

अम्ब श्राम्यसि तिष्ठ गोरसमहं मथ्नामि मन्थानकं
प्रालम्ब्य स्थितमीश्वरं सरभसं दीनाननो वासुकिः ।
सासूयं कमलालया सुरगणः सानन्दमुद्यद्भयं
राहुः प्रैक्षत यं स वोऽस्तु शिवदो गोपालबालो हरिः ।। ६१

कालिन्द्याः पुलिनेषु केलिकुपितामुत्सृज्य रासे रसं
गच्छन्तीमनुगच्छतोऽश्रुकलुषां कंसद्विषो राधिकाम्।
तत्पादप्रतिमानिवेशितपदस्योद्भूतरोमोद्गतेः
अक्षुण्णोऽनुनयः प्रसन्नदयितादृष्टस्य पुष्णातु वः ।। ६२

कंसं ध्वंसयते मुरं तिरयते हंसं तथा हिंसते
बाणं क्षीणयते बकं लघयते पौण्ड्रं तथा लुम्पते।
भौमं क्षामयते बलाद्बलभिदो दर्पं पराकुर्वते
क्लिष्टं शिष्टगणं प्रणम्रमवते कृष्णाय तुभ्यं नमः ।। ६३

रासोल्लासभरेण विभ्रमभृतामाभीरवामभ्रुवां
अभ्यर्णे परिरभ्य निर्भरमुरः प्रेमान्धया राधया।
साधु त्वद्वदनं सुधामयमिति व्याहृत्य गीतस्तुति-
व्याजादुद्भटचुम्बितः स्मितमनोहारी हरिः पातु वः ॥ ६४

साकूतस्मितमाकुलाकुलगलद्धम्मिल्लमुल्लासित
भ्रूवल्लीकमलीकदर्शितभुजामूलार्धदृष्टस्तनम्।
गोपीनां निभृतं निरीक्ष्य ललितं काञ्चिच्चिरं चिन्तयन्
अन्तर्मुग्धमनोहरो हरतु वः क्लेशं नवः केशवः ॥६५

तिर्यक्कण्ठविलोलमौलितरलोत्तंसस्य वंशोच्चरद्
गीतस्थानकृतावधानललनालक्षैर्न संलक्षिताः।
संमुग्धं मधुसूदनस्य मधुरे राधामुखेन्दौ मृदु
स्पन्दं पल्लविताश्चिरं ददतु वः क्षेमं कटाक्षोर्मयः ॥ ६६

वृष्टिव्याकुलगोकुलावनरसादुद्धृत्य गोवर्धनं
बिभ्रद्वल्लववल्लभाभिरधिकानन्दाच्चिरं चुम्बितः।
कन्दर्पेण तदर्पिताधरतटीसिन्दूरमुद्राङ्कितो
बाहुर्गोपतनोस्तनोतु भवतां श्रेयांसि कंसद्विषः ॥ ६७

राधामुग्धमुखारविन्दमधुपस्त्रैलोक्यमौलिस्थली-
नेपथ्योचितनीलरत्नमवनीभारावतारक्षमः।
स्वच्छन्दव्रजसुन्दरीजनमनस्तोषप्रदोषश्चिरं
कंसध्वंसनधूमकेतुरवतु त्वां देवकीनन्दनः ॥६८

किं विश्राम्यसि कृष्णभोगिभवने भाण्डीरभूमीरुहि
भ्रातर्यासि न दृष्टिगोचरमितः सानन्दनन्दास्पदम्।
राधाया वचनं तदध्वगमुखान्नन्दान्तिके गोपतो
गोविन्दस्य जयन्ति सायमतिथिप्राशस्त्यगर्भा गिरः ॥ ६९

सान्द्रानन्दपुरन्दरादिदिविषद्वृन्दैरमन्दादरात्
आनम्रैर्मुकुटेन्द्रनीलमणिभिः सन्दर्शितेन्दीवरम्।
स्वच्छन्दं मकरन्दसुन्दरगलन्मन्दाकिनीमेदुरं
श्रीगोविन्दपदारविन्दमशुभस्कन्दाय वन्दामहे॥ ७०

प्रातर्नीलनिचोलमच्युतमुरःसंवीतपीतांशुकं
राधायाश्चकितं विलोक्य हसति स्वैरं सखीमण्डले।
व्रीडाचञ्चलमञ्चलं नयनयोराधाय राधानने
स्वादुस्मेरमुखोऽयमस्तु जगदानन्दाय नन्दात्मजः॥ ७१

प्रीतिं वस्तनुतां हरिः कुवलयापीडेन सार्धं रणे
राधापीनपयोधरस्मरणकृत्कुम्भेन संभेदवान्।
पत्रे बिभ्यति मीलति क्षणमपि क्षिप्रं तदालोकनाद्
व्यामोहेन जितं जितं जितमभूद्व्यालोलकोलाहलः॥ ७२

त्वामप्राप्य मयि स्वयंवरपरां क्षीरोदतीरोदरे
शङ्के सुन्दरि कालकूटमपिबन्मूढो मृडानीपतिः।
इत्थं पूर्वकथाभिरन्यमनसो विक्षिप्य वासोऽञ्चलं
राधायाः स्तनकोरकोपरिलसन्नेत्रो हरिः पातु वः॥ ७३

वामांसस्थलचुम्बिकुण्डलरुचा जातोत्तरीयच्छविं
वंशीगीतिभवत्त्रिभङ्गवपुषं भ्रूलास्यलीलापरम्।
किंचित्स्रस्तशिखण्डशेखरमतिस्निग्धालिनीलालकं
राधादिप्रमदाशतावृतमहं वन्दे किशोराकृतिम्॥ ७४

अन्तर्मोहनमौलिघूर्णनवलन्मन्दारविस्रंसनः
स्तब्धाकर्षणदृष्टिहर्षणमहामन्त्रः कुरङ्गीदृशाम्।
दृप्यद्दानवदूयमानदिविषद्दुर्वारदुःखापदां
भ्रंशः कंसरिपोर्व्यपोहयतु वोऽश्रेयांसि वंशीरवः॥ ७५

मौलौ केकिशिखण्डिनी मधुरिमाधाराधरे वंशिनी
पीनांसे वनमालिनी हृदि लसत्कारुण्यकल्लोलिनी।
श्रोण्यां पीतदुकूलिनी चरणयोर्व्यत्यस्तविन्यासिनी
लीला काचन मोहनी विजयते वृन्दावनावासिनी ॥ ७६

मालाबर्हमनोज्ञकुन्तलभरां वन्यप्रसूनोक्षितां
शैलेयागुरुसक्तचित्रतिलकां शश्वन्मनोहारिणीम्।
लीलावेणुरवामृतैकरसिकां लावण्यलक्ष्मीमयीं
बालां बालतमालनीलवपुषं वन्दे परां देवताम्॥ ७७

अंसालम्बितवामकुण्डलधरं मन्दोन्नतभ्रूतलं
किंचित्कुञ्चितकोमलाधरपुटं साचिप्रसारीक्षणम्।
आलोलाङ्गुलिपल्लवैर्मुरलिकामापूरयन्तं मुदा
मूले कल्पतरोस्त्रिभङ्गललितं ध्याये जगन्मोहनम्॥ ७८

कस्तूरीतिलकं ललाटफलके वक्षःस्थले कौस्तुभं
नासाग्रे नवमौक्तिकं करतले वेणुं करे कङ्कणम्।
सर्वाङ्गे हरिचन्दनं सुविमलं कण्ठे च मुक्तावलीं
बिभ्रत्स्त्रीपरिवेष्टितो विजयते गोपालचूडामणिः ॥ ७६

कालिन्दीपुलिनोदरेषु मुसली यावद्गतः क्रीडितुं
तावत्कर्बुरिकापयः पिब हरे वर्धिष्यते ते शिखा।
इत्थं बालतया प्रतारणपराः श्रुत्वा यशोदागिरः
पायाद्वः स्वशिखां स्पृशन्प्रमुदितः क्षीरेऽर्धपीते हरिः ॥ ७७

आनन्देन यशोदया समदनं गोपाङ्गनाभिश्चिरं
साशङ्कं बलविद्विषा सकुसुमं सिद्धैः पृथिव्याकुलम्।
सेर्ष्यं गोपकुमारकैः सकरुणं पौरैः सुरैः सस्मितं
यो दृष्टः स पुनातु वो मधुरिपुः प्रोत्क्षिप्तगोवर्धनः ॥ ७८

राधामोहनमन्दिरं जिगमिषोश्चन्द्रावलीमन्दिरात्
राधे क्षेममिति प्रियस्य वचनं श्रुत्वाह चन्द्रावली।
क्षेमं कंस ततः प्रियः प्रमुदितः कंसः क्व दृष्टस्त्वया
राधा क्वेति तयोः प्रसन्नमनसोर्हासोद्गमः पातु वः ॥ ७९

दृष्टः कापि स केशवो व्रजवधूमादाय काञ्चिद्गतः
सर्वा एव हि वञ्चिताः खलु वयं सोऽन्वेषणीयो यदि।
द्वे द्वे गच्छत इत्युदीर्य सहसा राधां गृहीत्वा करे
गोपीवेषधरो निकुञ्जभवनं प्राप्तो हरिः पातु वः ॥ ८०

किं युक्तं बल मामनन्यमनसं वक्षःस्थलस्थायिनीं
भक्तामप्यवधूय कर्तुमधुना कान्तासहस्रं तव।
इत्युक्त्वा फणभृत्फणामणिगतां स्वामेव मत्वा तनुं
निद्राच्छेदकरं हरेरवतु वो लक्ष्म्या विलक्षस्मितम्॥ ८१

स्वप्नासादितदर्शनामनुनयन्प्राणेश्वरीमादरात्
अंसेऽस्मिन्पतितैरपाङ्गवलितैर्यद्बोधितोऽप्यश्रुभिः।
प्रत्याय्यस्त्वमतो मया ननु हरे कोऽयं क्रमव्यत्ययः
पातु त्वां व्रजयोषितेत्यभिहितं लज्जाकरं शार्ङ्गिणः ॥ ८२

अस्मिन्कुञ्जे विनापि प्रचलति पवनाद्वर्तते कोऽपि नूनं
पश्यामः किं न गत्वेत्यनुसरति गणे भीतभीतेऽर्भकाणाम्।
तस्मिन्राधासखो वः सुखयतु विलसल्लीलया कैटभारिः
व्यातन्वानो मृगारिप्रबलघुरघुरारावरौद्रान्निनादान्॥ ८३

अङ्गुल्या कः कपाटं प्रहरति कुटिले माधवः किं वसन्तो
नो चक्री किं कुलालो नहि धरणिधरः किं द्विजिह्वः फणीन्द्रः।
नाहं घोराहिमर्दी किमुत खगपतिर्नो हरिः किं कपीन्द्र
इत्येवं सत्यभामाप्रतिवचनजितः पातु वश्चक्रपाणिः ॥ ८४

वृन्दारण्ये चरन्ती विभुरपि सततं भूर्भुवःस्वः सृजन्ती
नन्दोद्भूताऽप्यनादिः शिशुरपि निगमैर्लक्षिता वीक्षितापि।
विद्युल्लेखावनद्धोन्नमदमलमहाम्भोदसच्छायकाया
माया पायादपायादविदितमहिमा कापि पैताम्बरी वः ।। ८५

नामोदस्ताखिलामो दमनियमयुजां यः प्रकामोदवाह
श्यामो दर्पाढ्यधामोदयमिलितयशोधारया मोदते यः ।
वामोदन्यासदामोदरतरलदृशां दत्तकामोदयो यः
सामोदः श्रीललामो दलयतु दुरितं सोऽत्र दामोदरो वः ।। ८६

मल्लैः शैलेन्द्रकल्पः शिशुरखिलजनैः पुष्पचापोऽङ्गनाभिः
गोपैस्तु प्राकृतात्मा दिवि कुलिशभृता विश्वकायोऽप्रमेयः ।
क्रुद्धः कंसेन कालो भयचकितदृशा योगिभिर्ध्येयमूर्तिः
दृष्टो रङ्गावतारे हरिरमरजनानन्दकृत्पातु युष्मान् ।। ८७

—*—

# गोकुलनामस्तोत्रम्

श्रीद्गोकुलसर्वस्वं श्रीद्गोकुलमण्डनम् ।
श्रीमद्गोकुलदृक्तारा श्रीमद्गोकुलपालकः ।। १

श्रीमद्गोकुलमात्रेशः श्रीमद्गोकुलपालकः ।
श्रीमद्गोकुललीलाब्धिः श्रीमद्गोकुलसंश्रयः ।। २

श्रीमद्गोकुलजीवात्मा श्रीमद्गोकुलमानसः ।
श्रीमद्गोकुलदुःखघ्नः श्रीमद्गोकुलसत्फलम् ।। ३

श्रीमद्गोकुलसौन्दर्यं श्रीमद्गोकुलसत्फलम् ।
श्रीमद्गोकुलगोप्राणः श्रीमद्गोकुलकामदः ।। ४

श्रीमद्गोकुलरामेशः श्रीमद्गोकुलतारकः ।
श्रीमद्गोकुलपद्मालिः श्रीमद्गोकुलसंस्तुतः ।। ५

श्रीमद्गोकुलसङ्गीतः श्रीमद्गोकुललास्यकृत् ।
श्रीमद्गोकुलभावात्मा श्रीमद्गोकुलपोषकः ।। ६

श्रीमद्गोकुलहृत्स्थानः श्रीमद्गोकुलसंवृतः ।
श्रीमद्गोकुलदृक्पुष्टः श्रीमद्गोकुलमोदितः ।। ७

श्रीमद्गोकुलगोपीशः श्रीमद्गोकुललालितः ।
श्रीमद्गोकुलभोग्यश्रीः श्रमद्गोकुलसर्वकृत् ।। ८

इमानि श्रीगोकुलेशनामानि वदने मम ।
वसन्तु सततं चैव लीला च हृदये सदा ।। ९

—*—

नारदकृतं

## गोपालस्तोत्रम्

नवीननीरदश्यामं नीलेन्दीवरलोचनम् ।
बल्लवीनन्दनं वन्दे कृष्णं गोपालरूपिणम् ।। १

स्फुरद्बर्हिदलोद्बद्धनीलकुञ्चितमूर्धजम् ।
कदम्बकुसुमोद्बद्धवनमालाविभूषितम् ।। २

गण्डमण्डलसंसर्गिचलत्काञ्चनकुण्डलम् ।
स्थूलमुक्ताफलोदारहारोद्द्योतितवक्षसम् ।। ३

हेमाङ्गदतुलाकोटिकिरीटोज्ज्वलविग्रहम् ।
मन्दमारुतसंक्षोभवल्गिताम्बरसंचयम् ।। ४

रुचिरौष्ठपुटन्यस्तवंशीमधुरनिःस्वनैः ।
लसद्गोपालिकाचेतो मोहयन्तं मुहुर्मुहुः ॥ ५

बल्लवीवदनाम्भोजमधुपानमधुव्रतम् ।
क्षोभयन्तं मनस्तासां सस्मरापाङ्गवीक्षणैः ॥ ६

यौवनोद्भिन्नदेहाभिः संसक्ताभिः परस्परम् ।
विचित्राम्बरभूषाभिर्गोपनारीभिरावृतम् ॥ ७

प्रभिन्नाञ्जनकालिन्दीदलकेलिकलोत्सुकम् ।
योधयन्तं क्वचिद्गोपान् व्याहरन्तं गवां गणम् ॥ ८

कालिन्दीजलसंसर्गिशीतलानिलसेविते ।
कदम्बपादपच्छाये स्थितं वृन्दावने क्वचित् ॥ ९

रत्नभूधरसंलग्नरत्नासनपरिग्रहम् ।
कल्पपादपमध्यस्थहेममण्डपिकागतम् ॥ १०

वसन्तकुसुमामोदसुरभीकृतदिङ्मुखे ।
गोवर्धनगिरौ रम्ये स्थितं रासरसोत्सुकम् ॥ ११

सव्यहस्ततलन्यस्तगिरिवर्यातपत्रकम् ।
खण्डिताखण्डलोन्मुक्तामुक्तासारघनाघनम् ॥ १२

वेणुवाद्यमहोल्लासकृतहुङ्कारनिःस्वनैः ।
सवत्सैरुन्मुखैः शश्वद्गोकुलैरभिवीक्षितम् ॥ १३

कृष्णमेवानुगायद्भिस्तच्चेष्टावशवर्तिभिः ।
दण्डपाशोद्यतकरैर्गोपालैरुपशोभितम् ॥ १४

नारदाद्यैर्मुनिश्रेष्ठैर्वेदवेदाङ्गपारगैः ।
प्रीतिसुस्निग्धया वाचा स्तूयमानं परात्परम् ॥ १५

य एनं चिन्तयेदेवं भक्त्या संस्तौति मानवः ।
त्रिसन्ध्यं तस्य तुष्टोऽसौ ददाति वरमीप्सितम् ॥ १६

राजवल्लभतामेति भवेत्सर्वजनप्रियः ।
अचलां श्रियमाप्नोति स वाग्मी जायते ध्रुवम् ॥ १७

(श्रीनारदपञ्चरात्रे ज्ञानामृतसारे)

—*—

श्री वेदान्तदेशिककृतं

## गोपालविंशतिस्तोत्रम्

वन्दे वृन्दावनचरं बल्लवीजनवल्लभम् ।
जयन्तीसंभवं धाम वैजयन्तीविभूषणम् ॥ १

वाचं निजाङ्करसिकां प्रसमीक्षमाणो
वक्त्रारविन्दविनिवेशितपाञ्चजन्यः ।
वर्णत्रिकोणरुचिरे वरपुण्डरीके
बद्धासनो जयति बल्लवचक्रवर्ती ॥ २

आम्नायगन्धिरुचिरस्फुरिताधरोष्ठं अस्राविलेक्षणमनुक्षणमन्दहासम् ।
गोपालडिंभवपुषं कुहनाजनन्याः प्राणस्तनन्धयमवैमि परं पुमांसम् ॥ ३

आविर्भवत्वनिभृताभरणं पुरस्तादाकुञ्चितैकचरणं निहितान्यपादम् ।
दध्ना निमन्थमुखरेण निबद्धतालं नाथस्य नन्दभवने नवनीतनाट्यम् ॥४

कुन्दप्रसूनविशदैर्दशनैश्चतुर्भिः
सन्दश्य मातुरनिशं कुचचूचुकाग्रम् ।
नन्दस्य वक्त्रमवलोकयतो मुरारेः
मन्दस्मितं मम मनीषितमातनोतु ॥ ५

हर्तुं कुम्भे विनिहितकरः स्वादु हैयंगवीनं
दृष्ट्वा दामग्रहणचटुलां मातरं जातरोषाम्।
पायादीषत्प्रचलितपदो नापगच्छन्न तिष्ठन्
मिथ्यागोपः सपदि नयने मीलयन् विश्वगोप्ता ॥ ६

व्रजयोषिदपाङ्गवेदनीयं मथुराभाग्य मनन्यभोग्यमीडे।
वसुदेववधूस्तनन्धयं तत्किमपि ब्रह्म किशोरभावदृश्यम्॥ ७

परिवर्तितकन्धरं भयेन स्मितफुल्लाधरपल्लवं स्मरामि।
विटपित्वनिरासकं कयोश्चिद्विपुलोलूखलकर्षकं कुमारम्॥ ८

निकटेषु निशामयामि नित्यं निगमान्तैरधुनापि मृग्यमाणम्।
यमलार्जुनदृष्टबालकेलिं यमुनासाक्षिकयौवनं युवानम्॥ ९

पदवीमदवीयसीं विमुक्तेरटवीसंपदमम्बु वाहयन्तीम्।
अरुणाधरसाभिलाषवंशां करुणां कारणमानुषीं भजामि॥ १०

अनिमेषनिषेवणीयमक्ष्णोरजहद्यौवन माविरस्तु चित्ते।
कलहायित कुन्तलं कलापैः करुणोन्मादक विभ्रमं मनो मे॥ ११

अनुयायिमनोज्ञ वंशनालैरवतु स्पर्शितबल्लवीविमोहैः।
अनघस्मितशीतलैरसौ मामनुकम्पासरिदम्बुजैरपाङ्गैः॥ १२

अधराहितचारुवंशनाला मुकुटालम्बिमयूरपिच्छमालाः।
हरिनीलशिलाविहङ्गलीलाः प्रतिभास्वन्तु ममान्तिमप्रयाणे॥ १३

अखिलानवलोकयामि कालान्महिलाधीनभुजान्तरस्य यूनः।
अभिलाषपदं व्रजाङ्गनानामभिलापक्रमदूरमाभिरूप्यम्॥ १४

महसे महिताय मौलिना विनतेनाञ्जलिमञ्जनत्विषे।
कलयामि विमुग्धबल्लवीवलयाभाषितमञ्जनत्विषे॥ १५

जयति ललितकृत्यं शिक्षको बल्लवीनां
शिथिलवलयसिंजाशीतलैर्हस्ततालैः ।
अखिलभुवनरक्षागोपवेषस्य विष्णोः
अधरमणिसुधाया वंशवान्वंशनालः ॥ १६

चित्राकल्पः श्रवसि कलयँल्लाङ्गलीकर्णपूरं
बर्होत्तंसस्फुरितचिकुरो बन्धुजीवं दधानः ।
गुञ्जाबद्धामुरसि ललितां धारयन् हारयष्टिं
गोपस्त्रीणां जयति कितवः कोऽपि कौमारहारी ॥ १७

लीलायष्टिं करकिसलये दक्षिणे न्यस्य धन्यां
अंसे देव्याः पुलकनिबिडे सन्निविष्टान्यबाहुः ।
मेघश्यामो जयति ललितो मेखलादत्तवेणुः
गुञ्जापीडस्फुरितचिकुरो गोपकन्याभुजङ्गः ॥ १८

प्रत्यालीढस्मृतिमधिगतां प्रासगाढाङ्कपालीं
पश्चादीषन्मिलितनयनां प्रेयसीं प्रेक्षमाणः ।
भस्त्रायंत्रप्रणिहितकरो भक्तजीवातुरव्यात्
वारिक्रीडानिबिडवसनो बल्लवीवल्लभो नः ॥ १९

वासो हृत्वा दिनकरसुतासंनिधौ बल्लवीनां
लीलास्मेरो जयति ललितामास्थितः कुन्दशाखाम् ।
सव्रीडाभिस्तदनु वसनं ताभिरभ्यर्थ्यमानः
कामी कश्चित्करकमलयोरञ्जलिं याचमानः ॥ २०

इत्यनन्यमनसा विनिर्मितां वेङ्कटेशकविना स्तुतिं पठन् ।
दिव्यवेणुरसिकः समीक्षते दैवतं किमपि यौवतप्रियम् ॥ २१

—*—

रघुनाथकृतः

# गोपालस्तवः

(दशावतारस्तवः)

येन मीनस्वरूपेण वेदाः संरक्षिताः पुरा।
स एव वेदसंहर्ता गोपालः शरणं मम॥ १

पृष्ठे यः कूर्मरूपेण दधार धरणीतलम्।
स एव सृष्टिसंहर्ता गोपालः शरणं मम॥ २

वराहरूपः संभूत्या दंष्ट्राग्रे यो महीं दधौ।
स भूमिभारहरणो गोपालः शरणं मम॥ ३

जग्राह यो नृसिंहस्य रूपं प्रह्लादहेतवे।
स योद्धुमुद्यतः सम्यग्गोपालः शरणं मम॥ ४

येन वामनरूपेण वञ्चितो बलिभूमिपः।
स एव गोपनारीभिर्गोपालः शरणं मम॥ ५

येनेयं जामदग्न्येन पृथ्वी निःक्षत्त्रिया कृता।
स एव क्षत्त्रियहितो गोपालः शरणं मम॥ ६

दशास्यो दाशरथिना येन रामेण मारितः।
स पञ्चास्यप्राप्तबलो गोपालः शरणं मम॥ ७

कालिन्दी कर्षिता येन रामरूपेण कौतुकात्।
तज्जलक्रीडनासक्तो गोपालः शरणं मम॥ ८

येन बौद्धस्वरूपेण लोकाः पाखण्डमार्गगाः।
स एव पाखण्डहरो गोपालः शरणं मम॥ ९

1

गमिष्यन्ति क्षयं येन राक्षसाः कल्किरूपिणा।
स रक्षसां गतेर्दाता गोपालः शरणं मम॥ १०

गोवर्धनो गिरिर्येन स्थापितः कञ्जवत्करे।
उलूखलेन सहितो गोपालः शरणं मम॥ ११

एकादशस्वीयधाम्नामावलिं यो लिखेद्धृदि।
कृष्णप्रसादयुक्तश्च स याति परमां गतिम्॥ १२

—*—

ब्रह्मानन्दकृतं

## श्रीगोपालाष्टकम्

यस्माद्विश्वं जातमिदं चित्रमतर्क्यं
यस्मिन्नानन्दात्मनि नित्यं रमते वै।
यत्रान्ते संयाति लयं चैतदशेषं
तं गोपालं संततकालं प्रति वन्दे॥ १

यस्याज्ञानाज्जन्मजरारोगकदम्बं
ज्ञाते यस्मिन्नश्यति तत्सर्वमिहाशु।
गत्वा यत्रायाति पुनर्नो भवभूमिं
तं गोपालं सन्ततकालं प्रति वन्दे॥ २

तिष्ठन्नन्तर्यो यमयत्येतदजस्रं
यं कश्चिन्नो वेद जनोऽप्यात्मनि संतम्।
सर्वं यस्येदं च वशे तिष्ठति विश्वं
तं गोपालं सन्ततकालं प्रति वन्दे॥ ३

धर्मोऽधर्मेणेह तिरस्कारमुपैति
काले यस्मिन्मत्स्यमुखैश्चारुचरित्रैः।
नानारूपैः पाति तदा योऽवनिबिम्बं
तं गोपालं संततकालं प्रति वन्दे॥ ४

प्राणायामैर्ध्वस्तसमस्तेन्द्रियदोषा
रुद्ध्वा चित्तं यं हृदि पश्यन्ति समाधौ।
ज्योतीरूपं योगिजना मोदनिमग्नाः
तं गोपालं सन्ततकालं प्रति वन्दे॥ ५

भानुश्चन्द्रश्चोडुगणश्चैव हुताशो
यस्मिन्नैवाभाति तडिच्चापि कदापि।
यद्भासा चाभाति समस्तं जगदेतत्
तं गोपालं सन्ततकालं प्रति वन्दे॥ ६

सत्यं ज्ञानं मोदमवोचुर्निगमा यं
यो ब्रह्मेन्द्रादित्यगिरीशार्चितपादः।
शेतेऽनन्तोऽनन्ततनावम्बुनिधौ यः
तं गोपालं सन्ततकालं प्रति वन्दे॥ ७

शैवाः प्राहुर्यं शिवमन्ये गणनाथं
शक्तिं चैकेऽर्कं च तथान्ये मतिभेदात्।
नानाकारैर्भाति य एकोऽखिलशक्तिः
तं गोपालं सन्ततकालं प्रति वदे॥ ८

श्रीमद्गोपालाष्टकमेतत् समधीते भक्त्या नित्यं यो मनुजो वै स्थिरचेताः।
हित्वा तूर्णं पापकलापं स समेति पुण्यं विष्णोर्धाम यतो नैव निपातः॥९

—*—

# गोपिकागीतम्

जयति तेऽधिकं जन्मना व्रजः श्रयत इन्दिरा शश्वदत्र हि।
दयित दृश्यतां दिक्षु तावकास्त्वयि धृतासवस्त्वां विचिन्वते ॥ १

शरदुदाशये साधुजातसत्सरसिजोदर श्रीमुषा दृशा।
सुरतनाथ तेऽशुल्कदासिका वरद निघ्नतो नेह किं वधः ॥ २

विषजलाप्ययाद्व्यालराक्षसाद्वर्षमारुताद्वैद्युतानलात्।
वृषमयात्मजाद्विश्वतोभयादृषभ ते वयं रक्षिता मुहुः ॥ ३

न खलु गोपिका नन्दनो भवानखिलदेहिनामन्तरात्मदृक्।
विखनसार्थितो विश्वगुप्तये सख उदेयिवान् सात्वतां कुले ॥ ४

विरचिताभयं वृष्णिधुर्य ते चरणमीयुषां संसृतेर्भयात्।
करसरोरुहं कान्त कामदं शिरसि धेहि नः श्रीकरग्रहम् ॥ ५

व्रजजनार्तिहन् वीरयोषितां निजजनस्मय ध्वंसनस्मित।
भज सखे भवत्किङ्करीः स्म नो जलरुहाननं चारु दर्शय ॥ ६

प्रणतदेहिनां पापकर्शनं तृणचरानुगं श्रीनिकेतनम्।
फणिफणार्पितं ते पदाम्बुजं कृणु कुचेषु नः कृन्धि हृच्छयम् ॥ ७

मधुरया गिरा वल्गुवाक्यया बुधमनोज्ञया पुष्करेक्षण।
विधिकरीरिमा वीर मुह्यतीरधरसीधुनाप्याययस्व नः ॥ ८

तव कथामृतं तप्तजीवनं कविभिरीडितं कल्मषापहम्।
श्रवणमङ्गलं श्रीमदाततं भुवि गृणन्ति ते भूरिदा जनाः ॥ ९

प्रहसितं प्रिय प्रेमवीक्षणं विहरणं च ते ध्यानमङ्गलम्।
रहसि संविदो या हृदिस्पृशः कुहक नो मनः क्षोभयन्ति हि ॥ १०

चलसि यद्व्रजाच्चारयन्पशून्नलिनसुन्दरं नाथ ते पदम्।
शिलतृणाङ्कुरैः सीदतीति नः कलिलतां मनः कान्त गच्छति॥ ११

दिनपरिक्षये नील कुन्तलैर्वनरुहाननं बिभ्रदावृतम्।
घनरजस्वलं दर्शयन् मुहुर्मनसि नः स्मरं वीर यच्छसि॥ १२

प्रणतकामदं पद्मजार्चितं धरणिमण्डनं ध्येयमापदि।
चरणपङ्कजं शन्तमं च ते रमण नः स्तनेष्वर्पयाधिहन्॥ १३

सुरतवर्धनं शोकनाशनं स्वरितवेणुना सुष्ठु चुम्बितम्।
इतररागविस्मारणं नृणां वितर वीर नस्तेऽधरामृतम्॥ १४

अटति यद्भवानह्नि काननं त्रुटिर्युगायते त्वामपश्यताम्।
कुटिलकुन्तलं श्रीमुखं च ते जड उदीक्षतां पक्ष्मकृद्दृशाम्॥ १५

पतिसुतान्वय भ्रातृबान्धवानतिविलङ्घ्य तेऽन्त्यच्युतागताः।
गतिविदस्तवोद्गीतमोहिताः कितव योषितः कस्त्यजेन्निशि॥ १६

रहसि संविदं हृच्छयोदयं प्रहसिताननं प्रेमवीक्षणम्।
बृहदुरःश्रियो वीक्ष्य धाम ते मुहुरतिस्पृहा मुह्यते मनः॥ १७

व्रजवनौकसां व्यक्तिरङ्ग ते वृजिनहन्त्र्यलं विश्वमङ्गलम्।
त्यज मनाक् च नस्त्वत्स्पृहात्मनां स्वजनहृद्रुजां यन्निषूदनम्॥ १८

यत्ते सुजातचरणाम्बुरुहं स्तनेषु भीताः शनैः प्रिय दधीमहि कर्कशेषु।
तेनाटवीमटसि तद्व्यथते न किंस्वित् कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः॥

(श्रीमद्भागवततः)

—*—

हरिदासकृतं

## गोपीजनवल्लभाष्टकम्

सरोजनेत्राय कृपायुताय मन्दारमालापरिभूषिताय।
उदारहासाय लसन्मुखाय नमोऽस्तु गोपीजनवल्लभाय ॥ १

आनन्दनन्दादिकदायकाय बकीबकप्राणविनाशकाय।
मृगेन्द्रहस्ताग्रजभूषणाय नमोऽस्तु गोपीजनवल्लभाय ॥ २

गोपाललीलाकृतकौतुकाय गोपालकाजीवनजीवनाय।
भक्तैकगम्याय नवप्रियाय नमोऽस्तु गोपीजनवल्लभाय ॥ ३

मन्थानभाण्डाखिलभञ्जनाय हैयङ्गवीनाशनरञ्जनाय।
गोस्वादुदुग्धामृतपोषिताय नमोऽस्तु गोपीजनवल्लभाय ॥ ४

कलिन्दजाकूलकुतूहलाय किशोररूपाय मनोहराय।
पिशङ्गवस्त्राय नरोत्तमाय नमोऽस्तु गोपीजनवल्लभाय ॥ ५

धाराधराभाय धराधराय शृङ्गारहारावलिशोभिताय।
समस्तगर्गोक्तिसुलक्षणाय नमोऽस्तु गोपीजनवल्लभाय ॥ ६

इभेन्द्रकुम्भस्थलखण्डनाय विदेशवृन्दावनमण्डनाय।
हंसाय कंसासुरमर्दनाय नमोऽस्तु गोपीजनवल्लभाय ॥ ७

श्रीदेवकीसूनुविमोक्षणाय क्षत्तोद्धवाक्रूरवरप्रदाय।
गदासिशङ्खाब्जचतुर्भुजाय नमोऽस्तु गोपीजनवल्लभाय ॥ ८

—*—

बिल्वमङ्गलाचार्यकृतं

# श्रीगोविन्ददामोदरस्तोत्रम्

अग्रे कुरूणामथ पाण्डवानां दुःशासनेनाहृतवस्त्रकेशा।
कृष्णा तदाक्रोशदनन्यनाथा गोविन्द दामोदर माधवेति॥ १

श्रीकृष्ण विष्णो मधुकैटभारे भक्तानुकम्पिन् भगवन् मुरारे।
त्रायस्व मां केशव लोकनाथ गोविन्द दामोदर माधवेति॥ २

विक्रेतुकामा किल गोपकन्या मुरारिपादार्पितचित्तवृत्तिः।
दध्यादिकं मोहवशादवोचद् गोविन्द दामोदर माधवेति॥ ३

उलूखले सम्भृततण्डुलांश्च सङ्घट्टयन्त्यो मुशलैः प्रमुग्धाः।
गायन्ति गोप्यो जनितानुरागा गोविन्द दामोदर माधवेति॥ ४

काचित्कराम्भोजपुटे निषण्णं क्रीडाशुकं किंशुकरक्ततुण्डम्।
अध्यापयामास सरोरुहाक्षी गोविन्द दामोदर माधवेति॥ ५

गृहे गृहे गोपवधूसमूहः प्रतिक्षणं पिञ्जरसारिकाणाम्।
स्खलद्गिरां वाचयितुं प्रवृत्तो गोविन्द दामोदर माधवेति॥ ६

पर्यङ्किकाभाजमलं कुमारं प्रस्वापयन्त्योऽखिलगोपकन्याः।
जगुः प्रबन्धं स्वरतालबन्धं गोविन्द दामोदर माधवेति॥ ७

रामानुजं वीक्षणकेलिलोलं गोपी गृहीत्वा नवनीतगोलम्।
आबालकं बालकमाजुहाव गोविन्द दामोदर माधवेति॥ ८

विचित्रवर्णाभरणाभिरामेऽभिधेहि वक्त्राम्बुजराजहंसि।
सदा मदीये रसनेऽग्ररङ्गे गोविन्द दामोदर माधवेति॥ ९

अङ्काधिरूढं शिशुगोपगूढं स्तनं धयन्तं कमलैककान्तम्।
सम्बोधयामास मुदा यशोदा गोविन्द दामोदर माधवेति॥ १०

क्रीडन्तमन्तर्व्रजमात्मजं स्वं समं वयस्यैः पशुपालबालैः ।
प्रेम्णा यशोदा प्रजुहाव कृष्णं गोविन्द दामोदर माधवेति ॥ ११

यशोदया गाढमुलूखलेन गोकण्ठपाशेन निबध्यमानः ।
रुरोद मन्दं नवनीतभोजी गोविन्द दामोदर माधवेति ॥ १२

निजाङ्गणे कङ्कणकेलिलोलं गोपी गृहीत्वा नवनीतगोलम् ।
आमर्दयत्पाणितलेन नेत्रे गोविन्द दामोदर माधवेति ॥ १३

गृहे गृहे गोपवधूकदम्बाः सर्वे मिलित्वा समवाययोगे ।
पुण्यानि नामानि पठन्ति नित्यं गोविन्द दामोदर माधवेति ॥ १४

मन्दारमूले वदनाभिरामं बिम्बाधरे पूरितवेणुनादम् ।
गोगोपगोपीजनमध्यसंस्थं गोविन्द दामोदर माधवेति ॥ १५

उत्थाय गोप्योऽपररात्रभागे स्मृत्वा यशोदासुतबालकेलिम् ।
गायन्ति चोच्चैर्दधि मन्थयन्त्यो गोविन्द दामोदर माधवेति ॥ १६

जग्धोऽथ दत्तो नवनीतपिण्डो गृहे यशोदा विचिकित्सयन्ती ।
उवाच सत्यं वद हे मुरारे गोविन्द दामोदर माधवेति ॥ १७

अभ्यर्च्य गेहं युवतिः प्रवृद्धप्रेमप्रवाहा दधि निर्ममन्थ ।
गायन्ति गोप्योऽथ सखीसमेता गोविन्द दामोदर माधवेति ॥ १८

क्वचित् प्रभाते दधिपूर्णपात्रे निक्षिप्य मन्थं युवती मुकुन्दम् ।
आलोक्य गानं विविधं करोति गोविन्द दामोदर माधवेति ॥ १९

क्रीडापरं भोजनमज्जनार्थं हितैषिणी स्त्री तनुजं यशोदा ।
आजूहवत् प्रेमपरिप्लुताक्षी गोविन्द दामोदर माधवेति ॥ २०

सुखं शयानं निलये च विष्णुं देवर्षिमुख्या मुनयः प्रपन्नाः ।
तेनाच्युते तन्मयतां व्रजन्ति गोविन्द दामोदर माधवेति ॥ २१

विहाय निद्रामरुणोदये च विधाय कृत्यानि च विप्रमुख्याः।
वेदावसाने प्रपठन्ति नित्यं गोविन्द दामोदर माधवेति॥ २२

वृन्दावने गोपगणाश्च गोप्यो विलोक्य गोविन्दवियोगखिन्नाम्।
राधां जगुः साश्रुविलोचनाभ्यां गोविन्द दामोदर माधवेति॥ २३

प्रभातसञ्चारगता नु गावस्तद्रक्षणार्थं तनयं यशोदा।
प्राबोधयत् पाणितलेन मन्दं गोविन्द दामोदर माधवेति॥ २४

प्रवालशोभा इव दीर्घकेशा बाताम्बुपर्णाशनपूतदेहाः।
मूले तरूणां मुनयः पठन्ति गोविन्द दामोदर माधवेति॥ २५

एवं ब्रुवाणा विरहातुरा भृशं व्रजस्त्रियः कृष्णविषक्तमानसाः।
विसृज्य लज्जां रुरुदुःस्म सुस्वरं गोविन्द दामोदर माधवेति॥ २६

गोपी कदाचिन्मणिपञ्जरस्थं शुकं वचो वाचयितुं प्रवृत्ता।
आनन्दकन्द व्रजचन्द्र कृष्ण गोविन्द दामोदर माधवेति॥ २७

गोवत्सबालैः शिशुकाकपक्षं बध्नन्तमम्भोजलदलायताक्षम्।
उवाच माता चिबुकं गृहीत्वा गोविन्द दामोदर माधवेति॥ २८

प्रभातकाले वरवल्लवौघा गोरक्षणार्थं धृतवेत्रदण्डाः।
आकारयामासुरनन्तमाद्यं गोविन्द दामोदर माधवेति॥ २९

जलाशये कालियमर्दनाय यदा कदम्बादपतन्मुरारिः।
गोपाङ्गनाश्चुक्रुशुरेत्य गोपा गोविन्द दामोदर माधवेति॥ ३०

अक्रूरमासाद्य यदा मुकुन्दश्चापोत्सवार्थं मथुरां प्रविष्टः।
तदा स पौरैर्जयसीत्यभाषि गोविन्द दामोदर माधवेति॥ ३१

कंसस्य दूतेन यदैव नीतौ वृन्दावनान्ताद् वसुदेवसूनुः।
रुरोद गोपी भवनस्य मध्ये गोविन्द दामोदर माधवेति॥ ३२

सरोवरे कालियनागबद्धं शिशुं यशोदातनयं निशम्य।
चक्रुर्लुठन्त्यः पथि गोपबाला गोविन्द दामोदर माधवेति।। ३३

अक्रूरयाने यदुवंशनाथं संगच्छमानं मथुरां निरीक्ष्य।
ऊचुर्वियोगात् किल गोपबाला गोविन्द दामोदर माधवेति।। ३४

चक्रन्द गोपी नलिनीवनान्ते कृष्णेन हीना कुसुमे शयाना।
प्रफुल्लनीलोत्पललोचनाभ्यां गोविन्द दामोदर माधवेति।। ३५

मातापितृभ्यां परिवार्यमाणा गेहं प्रविष्टा विललाप गोपी।
आगत्य मां पालय विश्वनाथ गोविन्द दामोदर माधवेति।। ३६

वृन्दावनस्थं हरिमाशु बुद्ध्वा गोपी गता कापि वनं निशायाम्।
तत्राप्यदृष्ट्वाऽतिभयादवोचद् गोविन्द दामोदर माधवेति।। ३७

सुखं शयाना निलये निजेऽपि नामानि विष्णोः प्रवदन्ति मर्त्याः।
ते निश्चितं तन्मयतां व्रजन्ति गोविन्द दामोदर माधवेति।। ३८

सा नीरजाक्षीमवलोक्य राधां रुरोद गोविन्दवियोगखिन्नाम्।
सखी प्रफुल्लोत्पललोचनाभ्यां गोविन्द दामोदर माधवेति।। ३९

जिह्वे रसज्ञे मधुरप्रिया त्वं सत्यं हितं त्वां परमं वदामि।
आवर्णयेथा मधुराक्षराणि गोविन्द दामोदर माधवेति।। ४०

आत्यन्तिकव्याधिहरं जनानां चिकित्सकं वेदविदो वदन्ति।
संसारतापत्रयनाशबीजं गोविन्द दामोदर माधवेति।। ४१

ताताज्ञया गच्छति रामचन्द्रे सलक्ष्मणेऽरण्यचये ससीते।
चक्रन्द रामस्य निजा जनित्री गोविन्द दामोदर माधवेति।। ४२

एकाकिनी दण्डककाननान्तात् सा नीयमाना दशकन्धरेण।
सीता तदाक्रान्ददनन्यनाथा गोविन्द दामोदर माधवेति।। ४३

रामाद्वियुक्ता जनकात्मजा सा विचिन्तयन्ती हृदि रामरूपम्।
रुरोद सीता रघुनाथ पाहि गोविन्द दामोदर माधवेति ॥ ४४

प्रसीद विष्णो रघुवंशनाथ सुरासुराणां सुखदुःखहेतो।
रुरोद सीता तु समुद्रमध्ये गोविन्द दामोदर माधवेति ॥ ४५

अन्तर्जले ग्राहगृहीतपादो विसृष्टविक्लिष्टसमस्तबन्धुः।
तदा गजेन्द्रो नितरां जगाद गोविन्द दामोदर माधवेति ॥ ४६

हंसध्वजः शङ्खयुतो ददर्श पुत्रं कटाहे प्रतपन्तमेनम्।
पुण्यानि नामानि हरेर्जपन्तं गोविन्द दामोदर माधवेति ॥ ४७

दुर्वाससो वाक्यमुपेत्य कृष्णा सा चाब्रवीत् काननवासिनीशम्।
अन्तः प्रविष्टं मनसा जुहाव गोविन्द दामोदर माधवेति ॥ ४८

ध्येयः सदा योगिभिरप्रमेयः चिन्ताहरश्चिन्तितपारिजातः।
कस्तूरिकाकल्पितनीलवर्णो गोविन्द दामोदर माधवेति ॥ ४९

संसारकूपे पतितोऽत्यगाधे मोहान्धपूर्णे विषयाभितप्ते।
करावलम्बं मम देहि विष्णो गोविन्द दामोदर माधवेति ॥ ५०

भजस्व मन्त्रं भवबन्धमुक्त्यै जिह्वे रसज्ञे सुलभं मनोज्ञम्।
द्वैपायनाद्यैर्मुनिभिः प्रजप्तं गोविन्द दामोदर माधवेति ॥ ५२

त्वामेव याचे मम देहि जिह्वे समागते दण्डधरे कृतान्ते।
वक्तव्यमेवं मधुरं सुभक्त्या गोविन्द दामोदर माधवेति ॥ ५२

गोपाल वंशीधर रूपसिन्धो लोकेश नारायण दीनबन्धो।
उच्चस्वरैस्त्वं वद सर्वदैव गोविन्द दामोदर माधवेति ॥ ५३

जिह्वे सदैवं भज सुन्दराणि नामानि कृष्णस्य मनोहराणि।
समस्तभक्तार्तिविनाशनानि गोविन्द दामोदर माधवेति ॥ ५४

गोविन्द गोविन्द हरे मुरारे गोविन्द गोविन्द मुकुन्द कृष्ण।
गोविन्द गोविन्द रथाङ्गपाणे गोविन्द दामोदर माधवेति॥ ५५

सुखावसाने त्विदमेव सारं दुःखावसाने त्विदमेव गेयम्।
देहावसाने त्विदमेव जाप्यं गोविन्द दामोदर माधवेति॥ ५६

दुःशासवाक्यं परिगृह्य कृष्णा मृगीव भीता तु कथं कथञ्चित्।
सभां प्रविष्टा मनसा जुहाव गोविन्द दामोदर माधवेति॥ ५७

श्रीकृष्ण राधावर गोकुलेश गोपाल गोवर्धन नाथ विष्णो।
जिह्वे पिबस्वामृतमेतदेव गोविन्द दामोदर माधवेति॥ ५८

श्रीनाथ विश्वेश्वर विश्वमूर्ते श्रीदेवकीनन्दन दैत्यशत्रो।
जिह्वे पिबस्वामृतमेतदेव गोविन्द दामोदर माधवेति॥ ५९

गोपीपते कंसरिपो मुकुन्द लक्ष्मीपते केशव वासुदेव।
जिह्वे पिबस्वामृतमेतदेव गोविन्द दामोदर माधवेति॥ ६०

गोपीजनाह्लादकर व्रजेश गोचारणारण्यकृतप्रवेश।
जिह्वे पिबस्वामृतमेतदेव गोविन्द दामोदर माधवेति॥ ६१

प्राणेश विश्वम्भर कैटभारे वैकुण्ठ नारायण चक्रपाणे।
जिह्वे पिबस्वामृतमेतदेव गोविन्द दामोदर माधवेति॥ ६२

हरे मुरारे मधुसूदनाद्य श्रीराम सीतावर रावणारे।
जिह्वे पिबस्वामृतमेतदेव गोविन्द दामोदर माधवेति॥ ६३

श्रीयादवेन्द्राद्रिधराम्बुजाक्ष गोगोपगोपीसुखदानदक्ष।
जिह्वे पिबस्वामृतमेतदेव गोविन्द दामोदर माधवेति॥ ६४

धराभरोत्तारणगोपवेषविहारलीलाकृतबन्धुशेष।
जिह्वे पिबस्वामृतमेतदेव गोविन्द दामोदर माधवेति॥ ६५

बकीबकाघासुरधेनुकारे केशीतृणावर्तविघातदक्ष।
जिह्वे पिबस्वामृतमेतदेव गोविन्द दामोदर माधवेति॥ ६६

श्रीजानकीजीवन रामचन्द्र निशाचरारे भरताग्रजेश।
जिह्वे पिबस्वामृतमेतदेव गोविन्द दामोदर माधवेति॥ ६७

नारायणानन्त हरे नृसिंह प्रह्लादबाधाहर हे कृपालो।
जिह्वे पिबस्वामृतमेतदेव गोविन्द दामोदर माधवेति॥ ६८

लीलामनुष्याकृतिरामरूप प्रतापदासीकृतसर्वभूप।
जिह्वे पिबस्वामृतमेतदेव गोविन्द दामोदर माधवेति॥ ६९

श्रीकृष्ण गोविन्द हरे मुरारे हे नाथ नारायण वासुदेव।
जिह्वे पिबस्वामृतमेतदेव गोविन्द दामोदर माधवेति॥ ७०

वक्तुं समर्थोऽपि न वक्ति कश्चिदहो जनानां व्यसनसाभिमुख्यम्।
जिह्वे पिबस्वामृतमेतदेव गोविन्द दामोदर माधवेति॥ ७१

—*—

श्रीशङ्करभगवात्पादकृतं

## गोविन्दाष्टकम्

सत्यं ज्ञानमनन्तं नित्यमनाकाशं परमाकाशं
गोष्ठप्राङ्गणरिङ्खणलोलमनायासं परमायासम्।
मायाकल्पितनानाकारमनाकारं भुवनाकारं
क्ष्मामानाथमनाथं प्रणमत गोविन्दं परमानन्दम्॥ १

मृत्स्नामत्सीहेति यशोदाताडनशैशवसंत्रासं
व्यादितवक्त्रालोकितलोकालोकचतुर्दशलोकालिम्।
लोकत्रयपुरमूलस्तम्भं लोकालोकमनालोकं
लोकेशं परमेशं प्रणमत गोविन्दं परमानन्दम्॥ २

त्रैविष्टपरिपुवीरघ्नं क्षितिभारघ्नं भवरोगघ्नं
कैवल्यं नवनीताहारमनाहारं भुवनाहारम्।
वैमल्यस्फुटचेतोवृत्तिविशेषाभासमनाभासं
शैवं केवलशान्तं प्रणमत गोविन्दं परमानन्दम्॥ ३

गोपालं भूलीलाविग्रहगोपालं कुलगोपालं
गोपीखेलनगोवर्धनधृतिलीलालालितगोपालम्।
गोभिर्निगदितगोविन्दस्फुटनामानं बहुनामानं
गोपीगोचरदूरं प्रणमत गोविन्दं परमानन्दम्॥ ४

गोपीमण्डगोष्ठीभेदं भेदावस्थमभेदाभं
शश्वद्गोखुरनिर्धूतोत्कृतधूलीधूसरसौभाग्यम्।
श्रद्धाभक्तिगृहीतानन्दमचिन्त्यं चिन्तितसद्भावं
चिन्तामणिमहिमानं प्रणमत गोविन्दं परमानन्दम्॥ ५

स्नानव्याकुलयोषिद्वस्त्रमुपादायागमुपारूढं
व्यादित्सन्तीरथ दिग्वस्त्रा उपदातुमुपाकर्षन्तम्।
निर्धूतद्वयशोकविमोहं बुद्धं बुद्धेरन्तःस्थं
सत्तामात्रशरीरं प्रणमत गोविन्दं परमानन्दम्॥ ६

कान्तं कारणकारणमादिमनादिं कालमनाभासं
कालिन्दीगतकालियशिरसिसुनृत्यन्तं मुहुर्नृ मुत्यन्तम्।
कालं कालकलातीतं कलिताशेषं कलिदोषघ्नं
कालत्रयगतिहेतुं प्रणमत गोविन्दं परमानन्दम्॥ ७

वृन्दावनभुवि वृन्दारकगणवृन्दाराधितमन्देहं
कुन्दाभामलमन्दस्मेरसुधानन्दं सुहृदानन्दम्।
वन्द्याशेषमहामुनिमानसवन्द्यानन्दपदद्वन्द्वं
वन्द्याशेषगुणाब्धिं प्रणमत गोविन्दं परमानन्दम्॥ ८

गोविन्दाष्टकमेतदधीते गोविन्दार्पितचेता यो
गोविन्दाच्युत माधव विष्णो गोकुलनायक कृष्णेति।
गोविन्दाङ्घ्रिसरोजध्यानसुधाजलधौतसमस्ताघो
गोविन्दं परमानन्दामृतमन्तःस्थं स समभ्येति ॥ ९

—*—

ब्रह्मानन्दकृतं

## गोविन्दाष्टकम् ।

चिदानन्दाकारं श्रुतिसरससारं समरसं
निराधाराधारं भवजलधिपारं परगुणम्।
रमाग्रीवाहारं व्रजवनविहारं हरनुतं
सदा तं गोविन्दं परमसुखकन्दं भजत रे ॥ १

महाम्भोधिस्थानं स्थिरचरनिदानं दिविजपं
सुधाधारापानं विहगपतियानं यमरतम्।
मनोज्ञं सुज्ञानं मुनिजननिधानं ध्रुवपदं
सदा तं गोविन्दं परमसुखकन्दं भजत रे ॥ २

धिया धीरैर्ध्येयं श्रवणपुटपेयं यतिवरैः
महावाक्यैर्ज्ञेयं त्रिभुवनविधेयं विधिपरम्।
मनोमानामेयं सपदि हृदि नेयं नवतनुं
सदा तं गोविन्दं परमसुखकन्दं भजत रे ॥ ३

महामायाजालं विमलवनमालं मलहरं
सुभालं गोपालं निहतशिशुपालं शशिमुखम्।
गलातीतं कालं गतिहयमरालं मुररिपुं
सदा तं गोविन्दं परमसुखकन्दं भजत रे ॥ ४

नभोबिम्बस्फीतं निगमगणगीतं समगतिं
सुरौघे संप्रीतं दितिजविपरीतं पुरिशयम्।
गिरां पन्थातीतं स्वदितनवनीतं नयकरं
सदा तं गोविन्दं परमसुखकन्दं भजत रे।। ५

परेशं पद्मेशं शिवकमलजेशं शिवकरं
द्विजेशं देवेशं तनुकुटिलकेशं कलिहरम्।
खगेशं नागेशं निखिलभुवनेशं नगधरं
सदा तं गोविन्दं परमसुखकन्दं भजत रे।। ६

रमाकान्तं कान्तं भवयमभयान्तं भवसुखं
दुराशान्तं शान्तं निखिलहृदि भान्तं भुवनपम्।
विवादान्तं दान्तं दनुजनिचयान्तं सुचरितं
सदा तं गोविन्दं परमसुखकन्दं भजत रे।। ७

जगज्ज्येष्ठं श्रेष्ठं सुरपतिकनिष्ठं क्रतुपतिं
बलिष्ठं भूयिष्ठं त्रिभुवनवरिष्ठं वरवहम्।
स्वनिष्ठं धर्मिष्ठं गुरुगुणगरिष्ठं गुरुवरं
सदा तं गोविन्दं परमसुखकन्दं भजत रे।। ८

गदापाणेरेतद्दुरितदलनं दुःखशमनं
विशुद्धात्मा स्तोत्रं पठति मनुजो यस्तु सततम्।
स भुक्त्वा भोगौघं चिरमिह ततोऽपास्तवृजिनो
वरं विष्णोः स्थानं व्रजति खलु वैकुण्ठभुवनम्।। ९

—*—

श्रीविश्वनाथचक्रवर्तिविरचितं

# श्री जगन्मोहनाष्टकम्

गुञ्जावलीवेष्टितचित्रपुष्पचूडावलन्मञ्जुलनव्यपिच्छम्।
गोरोचनाचारु तमालपत्रं वन्दे जगन्मोहनमिष्टदेवम्॥ १

भ्रूवल्गनोन्मादितगोपनारीकटाक्षबाणावलिविद्धनेत्रम्।
नासाग्रराजन्मणिचारुमुक्तं वन्दे जगन्मोहनमिष्टदेवम्॥ २

आलोलवक्रालककान्तिचम्बि गण्डस्थलप्रोन्नतचारहास्यम्।
वामप्रगण्डोच्चलकुण्डलान्तं वन्दे जगन्मोहनमिष्टदेवम्॥ ३

बन्धूकबिम्बद्युतिनिन्दि कुञ्चत्प्रान्ताधर भ्राजित वेणु वक्त्रम्।
किञ्चित्तिरश्चीनशिरोधिभातं वन्दे जगन्मोहनमिष्टदेवम्॥ ४

अकुण्ठरेखात्रयराजिकण्ठ खेलत्स्वरालिश्रुति रागराजिम्।
वक्षःस्फुरत्कौस्तुभमुन्नतांसं वन्दे जगन्मोहनमिष्टदेवम्॥ ५

आजानुराजद्वलयाङ्गदाञ्चि स्मरार्गलाकारसुवृत्तबाहुम्।
अनर्घमुक्तामणिपुष्पमालं वन्दे जगन्मोहनमिष्टदेवम्॥ ६

श्वासैजदश्वत्थदलाभतुन्द मध्यस्थरोमावलिरम्यरेखम्।
पीताम्बरं मञ्जुलकिङ्किणीकं वन्दे जगन्मोहनमिष्टदेवम्॥ ७

व्यत्यस्तपादं मणिनूपुराढ्यं श्यामं त्रिभङ्गं सुरशाखिमूले।
श्रीराधया सार्धमुदारलीलं वन्दे जगन्मोहनमिष्टदेवम्॥ ८

श्रीमज्जगन्मोहनदेवमेतत्पद्याष्टकेन स्मरतो जनस्य।
प्रेमा भवेद्येन तदङ्घ्रि साक्षात्सेवामृतेनैव निमज्जनं स्यात्॥ ९

—*—

श्रीधरवेङ्कटेशार्यकृता

# डोलानवरत्नमालिका

श्रीमद्भिरक्षिवलनैः परितस्सरोज
श्रेणीं किरन्नधिहिरण्मयदिव्यडोलम्।
यः श्रीधराकलितमाकलयन् मुदा त-
दान्दोळनं स्फुरति नन्दशिशुं तमीडे॥ १

आन्दोळनेन मणिसुन्दरडोळिकायां
स श्रीधरोपकलितानि समश्नुवानः।
मन्दस्मितेन मधुरेण निजान् विधिन्वन्
नन्दार्भको भवतु मे नयनाध्वनीनः॥ २

माणिक्यकुण्डलमनोहरतारहारा-
द्युद्दामभूषमुपबर्हनिविष्टबाहुम्।
तं श्रीधराश्रितपदं श्रितदिव्यडोलं
बालं नुमः कमपि वासवरत्ननीलम्॥ ३

यः श्रीधरस्मरहरादिविलोचनाञ्ज-
ल्यादीयमानपवनो रमतेऽधिडोलम्।
आन्दोळनेन जननीकलितेन नन्दन्
मन्दं हसन्मनसि मेऽस्तु स नन्दसूनुः॥ ४

अत्रामृतं प्रविचिकास्त्यमृतार्थिनां त-
दासेव्यमेतदिति बोधयितुं पदं स्वम्।
आस्ये निधाय रसयन्नधिरत्नडोलं
अग्रेऽस्तु मेऽभ्ररुचिरार्भकसार्वभौमः॥ ५

डोलाधिरूढमुपबर्हधृतापराङ्गं
फालान्तराकलितहीरललन्तिकाढ्यम्।
वैयाघ्रचारुनखराञ्चितमभ्रनीलं
बालं कदा ननु पिबानि दृशा विशङ्कम्॥ ६

डोलां गतस्तदनुषञ्जितरत्नगुच्छे
दृष्ट्वा स्वबिम्बमपरार्भकविभ्रमेण।
अव्यक्तजल्पदरहासमुखैर्विलासैः
दीव्यन्ममास्तु हृदि दिव्यशिशुः सलीलम्॥ ७

आकल्पितैणमदचित्रकभूतिरेख-
फालं कपोलतलबिम्बितकर्णभूषम्।
डोलां गतं व्रजवधूपरि चुम्ब्यमान-
श्रीमन्मुखं कमपि दिव्यशिशुं स्मरामः॥ ८

आभीरपुण्यविभवावतरोऽधिडोलं
यः श्रीधराकलिततच्चलनैः प्रहृष्यन्।
अत्येधितैः कलशसिन्धुतरङ्गडोला-
न्दोलैरिवास्तु हृदि मे स किशोरमौलिः॥ ९

श्रीबालकृष्णविनुतिं नवरत्नमाला-
ख्यानामिमां परिपठत्युदितादरो यः।
सत्पुत्रसम्पदमियादचलाश्च लक्ष्मीं
श्रीकृष्णभक्ततिलकश्च भवेत् स धन्यः॥ १०

——*——

सत्यव्रतोक्त

# दामोदरस्तोत्रम्

सिन्धुदेशोद्भवो विप्रो नाम्ना सत्यव्रतः सुधीः।
विरक्त इन्द्रियार्थेभ्यस्त्यक्त्वा पुत्रगृहादिकम्॥ १

वृन्दावने स्थितः कृष्णमारिराध दिवानिशम्।
निःस्वः सत्यव्रतो विप्रो निर्जनेऽव्यग्रमानसः॥ २

कार्तिके पूजयामास प्रीत्या दामोदरं नृप।
तृतीयेऽह्नि सकृद्भुङ्क्ते पत्रं मूलं फलं तथा॥ ३

एवं भावसमायुक्तो भक्त्या तद्गतमानसः।
पूजयित्वा हरिं स्तौति प्रीत्या दामोदराभिधम्॥ ४

सत्यव्रत उवाच-
नमामीश्वरं सच्चिदानन्दरूपं लसत्कुण्डलं गोकुले भ्राजमानम्।
नमामीश्वरं सच्चिदानन्दरूपं लसत्कुण्डलं गोकुले दूनगोप्या॥ ५

रुदन्तं मुहुर्नेत्रयुग्मं मृजन्तं कराम्भोजयुग्मेन सातंकनेत्रम्।
मुहुः श्वासकं पत्रिरेखाङ्ककण्ठं स्थितं नौमि दामोदरं भक्तवन्द्यम्॥ ६

वरं देव देहीश मोक्षावधिं वा न चान्यं वृणेऽहं वरेशादपीह।
इदं ते वपुर्नाथ गोपालबालं सदा मे मनस्याविरास्तां किमन्यैः॥ ७

इदं ते मुखाम्भोजमत्यन्तनीलैर्वृतं कुन्तलैः स्निग्धवक्त्रैश्च गोप्या।
मुहुश्चुम्बितं बिम्बरक्ताधरं मे मनस्याविरास्तामलं लक्षलाभैः॥ ८

नमो देव दामोदरानन्त विष्णो प्रसीद प्रभो सुःखजालाब्धिमग्नम्।
कृपादृष्टिवृष्ट्याऽतिदीनं च रक्ष गृहाणेश मामज्ञमेवाक्षिदृश्यम्॥ ९

कुबेरात्मजौ वृक्षमूर्तो च यद्वत्त्वया मोचितौ भक्तिभाजौ कृतौ च।
तथा प्रेमभक्तिं स्वकां मे प्रयच्छ न मोक्षे ग्रहो मेऽस्ति दामोदरेह ॥ १०

नमस्ते सुदाम्ने स्फुरद्दीप्तधाम्ने तथोरःस्थविश्वस्य धाम्ने नमस्ते।
नमो राधिकायै त्वदीयप्रियायै नमोऽनन्तलीलाय देवाय तुभ्यम् ॥ ११

नारद उवाच—
सत्यव्रतद्विजस्तोत्रं श्रुत्वा दामोदरो हरिः।
विद्युल्लीलाचमत्कारो हृदये शनकैरभूत्॥ १२

—*—

हरिदासकृतं

## दैन्याष्टकम्

श्रीकृष्ण गोकुलाधीश नन्दगोपतनूद्भव।
यशोदागर्भसम्भूत मयि दीने कृपां कुरु ॥ १

व्रजानन्द व्रजावास व्रजस्त्रीहृदयस्थित।
व्रजलीलाकृते नित्यं मयि दीने कृपां कुरु ॥ २

श्रीभागवतभावार्थ रसात्मन् रसिकात्मक।
नामलीलाविलासार्थं मयि दीने कृपां कुरु ॥ ३

यशोदाहृदयानन्द विहिताङ्गणरिङ्गण।
अलकावृतवक्त्राब्ज मयि दीने कृपां कुरु ॥ ४

विरहार्तिव्रतस्थात्मन् गुणगानश्रुतिप्रिय।
महादैन्यदयोद्भूत मयि दीने कृपां कुरु ॥ ५

अत्यासक्तजनासक्त परोक्षभजनप्रिय।
परमानन्दसन्दोह मयि दीने कृपां कुरु ॥ ६

निरोधशुद्धहृदय दयितागीतमोहित।
आत्यन्तिक वियोगात्मन् मयि दीने कृपां कुरु ॥ ७
स्वाचार्यहृदयस्थायिलीलाशतयुत प्रभो।
सर्वथा शरणं याते मयि दीने कृपां कुरु ॥ ८

—*—

हरिदासकृतं

# नवनीतप्रियाष्टकम्

अलकावृतलसदलिके विरचितकस्तूरिकातिलके।
चपलयशोदाबाले शोभितमाले मतिर्मेऽस्तु ॥ १

मुखरितनूपुरचरणे कटिबद्धक्षुद्रघण्टिकावरणे।
द्वीपिकरजकृतभूषणभूषितहृदये मतिर्मेऽस्तु ॥ २

करधृतनवनवनीते हितकृतजननीविभीषिकाभीते।
रतिमुद्वहताच्चेतो गोपीभिर्वश्यतां नीते ॥ ३

बालदशामतिमुग्धे चोरितदुग्धे व्रजाङ्गनाभवनात्।
तदुपालम्भवचोभयविभ्रमनयने मतिर्मेऽस्तु ॥ ४

व्रजकर्दमलिप्ताङ्गे स्वरूपसुषमाजितानङ्गे।
कृतनन्दाङ्गणरिङ्गणविविधविहारे मतिर्मेऽस्तु ॥ ५

करवरधृतलघुलकुटे विचित्रमायूरचन्द्रिकामुकुटे।
नासागतमुक्तामणिजटितविभूषे मतिर्मेऽस्तु ॥ ६

अभिनन्दनकृतनृत्ये विरचितनिजगोपिकाकृत्ये।
आनन्दितनिजभृत्ये प्रहसनमुदिते मतिर्मेऽस्तु ॥ ७

कामादपि कमनीये नमनीये ब्रह्मरुद्राद्यैः ।
निःसाधनभजनीये भावतनौ मे मतिर्भूयात् ।। ८

—*—

हरिदासकृतं

## श्रीपञ्चाक्षरमन्त्रगर्भस्तोत्रम्

दुष्टतमोऽपि दयारहितोऽपि विधर्मविशेषकृतिप्रथितोऽपि ।
दुर्जनसङ्गरतोऽप्यवरोऽपि कृष्ण तवाऽस्मि न चाऽस्मि परस्य ।। १

लोभरतोऽप्यभिमानयुतोऽपि परहितकारणकृत्यकरोऽपि ।
क्रोधपरोऽप्यविवेकहतोऽपि कृष्ण तवाऽस्मि न चाऽस्मि परस्य ।। २

काममयोऽपि गताश्रयणोऽपि पराश्रयगाशयचञ्चलितोऽपि ।
वैषयिकादरसंवलितोऽपि कृष्ण तवास्मि न चाऽस्मि परस्य ।। ३

उत्तमधैर्यविभिन्नतरोऽपि निजोदरपोषणहेतुपरोऽपि ।
स्वीकृतमत्सरमोहमदोऽपि कृष्ण तवास्मि न चास्मि परस्य ।। ४

भक्तिपथादरमात्रकृतोऽपि व्यर्थविरुद्धकृतिप्रसृतोऽपि ।
त्वत्पदसन्मुखतापतितोऽपि कृष्ण तवास्मि न चास्मि परस्य ।। ५

संसृतिगेहकलत्ररतोऽपि व्यर्थधनार्जनखेदसहोऽपि ।
उन्मदमानससंश्रयणोऽपि कृष्ण तवास्मि न चास्मि परस्य ।। ६

कृष्णपथेतरधर्मरतोऽपि स्वस्थितविस्मृतिसद्धृदयोऽपि ।
दुर्जनदुर्वचनादरणोऽपि कृष्ण तवास्मि न चास्मि परस्य ।। ७

वल्लभवंशजनुः सबलोऽपि स्वप्रभुपादसरोजफलोऽपि ।
लौकिकवैदिक धर्मखलोऽपि कृष्ण तवास्मि न चास्मि परस्य ।। ८

पञ्चाक्षरमहामन्त्रगर्भितस्तोत्रपाठतः ।
श्रीमदाचार्यदासानां तदीयत्वं भवेद्ध्रुवम् ॥ ९

—*—

श्रीकृष्णदासकृतं

## बालकृष्णाष्टकम्

श्रीमन्नन्दयशोदाहृदयस्थितभावतत्परो भगवान् ।
पुत्रीकृतनिजरूपः स जयति पुरतः कृपालुर्बालकृष्णः ॥ १

कथमपि रिङ्गणमकरोदङ्गणगतजानुघर्षणोद्युक्तः ।
कटितटकिङ्किणिजालस्वनशङ्कितमानसः सदा ह्यास्ते ॥ २

विकसितपङ्कजनयनः प्रकटितहर्षः सदैव धूसराङ्गः ।
परिगच्छति कटिभङ्गप्रसरीकृतपाणियुग्माभ्याम् ॥ ३

उपलक्षितदधिभाण्डः स्फुरितब्रह्माण्डविग्रहो भुंक्ते ।
मुष्टीकृतनवनीतः परमपुनीतो मुग्धभावात्मा ॥ ४

नम्रीकृतविधुवदनः प्रकटीकृतचौर्यगोपनायासः ।
स्वाम्बोत्संगविलासः क्षुधितः संप्रति दृश्यते स्तनार्थी ॥ ५

सिंहनखाकृतिभूषणभूषितहृदयः सुशोभते नित्यम् ।
कुण्डलमण्डितगण्डः साञ्जननयनो निरञ्जनः शेते ॥ ६

कार्यासक्तयशोदागृहकर्माविरोधकः सदास्ते ।
तस्याः स्वान्तनिविष्टप्रणयप्राभाजनो यतोऽयम् ॥ ७

इत्थं व्रजपतितरुणी नमनीयं ब्रह्मरुद्राद्यैः ।
कमनीयं निजसूनुं लालयति स्म प्रत्यहं प्रीत्या ॥ ८

श्रीमद्वल्लभकृपया विशदीकृतमेतदष्टकं पठेद्यः ।
तस्य दयानिधिकृष्णे भक्तिः प्रेमैकलक्षणा शीघ्रम् ।। ९

—*—

## बालमुकुन्दाष्टकम्

करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तम्।
वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि ।। १

संहृत्य लोकान्वटपत्रमध्ये शयानमाद्यन्तविहीनरूपम्।
सर्वेश्वरं सर्वहितावतारं बालं मुकुन्दं मनसा स्मरामि ।। २

इन्दीवरश्यामलकोमलाङ्गं इन्द्रादिदेवार्चितपादपद्मम्।
सन्तानकल्पद्रुममाश्रितानां बालं मुकुन्दं मनसा स्मरामि ।। ३

लम्बालकं लम्बितहारयष्टिं शृङ्गारलीलाङ्कितदन्तपङ्क्तिम्।
विम्बाधरं चारुविशालनेत्रं बालं मुकुन्दं मनसा स्मरामि ।। ४

शिक्ये निधायाद्य पयोदधीनि बहिर्गतायां व्रजनायिकायाम्।
भुक्त्वा यथेष्टं कपटेन सुप्तं बालं मुकुन्दं मनसा स्मरामि ।। ५

कलिन्दजान्तः स्थितकालियस्य फणाग्ररङ्गे नटनप्रियं तम्।
तत्पुच्छहस्तं शरदिन्दुवक्त्रं बालं मुकुन्दं मनसा स्मरामि ।। ६

उलूखले बद्धमुदारशौर्यं उत्तुङ्गयुग्मार्जुनभङ्गलीलम्।
उत्फुल्लपद्मायतचारुनेत्रं बालं मुकुन्दं मनसा स्मरामि ।। ७

आलोक्य मातुर्मुखमादरेण स्तन्यं पिबन्तं सरसीरुहाक्षम्।
सच्चिन्मयं देवमनन्तरूपं बालं मुकुन्दं मनसा स्मरामि ।। ८

—*—

श्रीविश्वनाथचक्रवर्तिविरचितं

# बृन्दावनाष्टकम्।

न योगसिद्धिर्न च माऽस्तु मोक्षो वैकुण्ठलोकेऽपि न पार्षदत्वम्।
प्रेमापि न स्यादिति चेत्तरां तु ममास्तु बृन्दावन एव वासः ॥ १

तार्णं जनुर्यत्र विधिर्ययाचे सद्भक्तचूडामणिरुद्धवोपि।
वीक्ष्यैव माधुर्यधुरां तदस्मिन् ममास्तु बृन्दावन एव वासः ॥ २

किं ते कृतं हन्त तपः क्षितीति गोप्योऽपि भूमेः स्तुवते स्म कीर्तिम्।
येनैव कृष्णाङ्घ्रिपदाङ्कितेऽस्मिन् ममास्तु बृन्दावन एव वासः ॥ ३

गोपाङ्गनालम्पटतैव यत्र यस्यां रसः पूर्णतमत्वमाप।
यतो रसौ वै स इति श्रुतिस्तन्ममास्तु बृन्दावन एव वासः ॥ ४

भण्डीर गोवर्धन रासपीठैस्त्रिसीमके योजनकपञ्चकेन।
मिते विभुत्वादमितेपि चास्मिन् ममास्तु बृन्दावन एव वासः ॥ ५

यत्राधिपत्यं वृषभानुपुत्र्या येनोदयेत्प्रेमसुखं जनानाम्।
यस्मिन्ममाशा बलवत्यतोस्मिन् ममास्तु बृन्दावन एव वासः ॥ ६

यस्मिन्महारासविलासलीला न प्राप यां श्रीरपि सा तपोभिः।
तत्रोल्लसन्मञ्जुनिकुञ्जपुञ्जो ममास्तु बृन्दावन एव वासः ॥ ७

सदा कुरुन्यङ्कुमुखा विशङ्कं खेलन्ति कूजन्ति पिकालिकीराः।
शिखण्डिनो यत्र नटन्ति तस्मिन् ममास्तु बृन्दावन एव वासः ॥ ८

बृन्दावनस्याष्टकमेतदुच्चैः पठन्ति ये निश्चलबुद्धयस्ते।
बृन्दावनेशाङ्घ्रिसरोजसेवां साक्षाल्लभन्ते जनुषोन्त एव ॥ ९

—*—

## बृन्दावनस्तोत्रम्

बृन्दाटवी सहजवीतसमस्तदोषा
दोषाकरानपि गुणाकरतां नयन्ती।
पोषाय मे सकलधर्मबहिष्कृतस्य
शोषाय सुस्तरमहाघचयस्य भूयात्॥ १

बृन्दाटवी बहुभवीयसुपुण्यपुञ्जा
क्षेत्रातिथिर्भवति यस्य महामहिम्नः।
तस्येश्वरः सकलकर्म मृषा करोति
ब्रह्मादयस्तमतिभक्तियुता नमन्ति॥ २

बृन्दावने सकलपावनपावनेऽस्मिन्
सर्वोत्तमोत्तमचरस्थिरसत्वजातौ।
श्रीराधिकारमणभक्तिरसैककोशे
तोषेण नित्यपरमेण कदा वसामि॥ ३

बृन्दावने स्थिरचराखिलसत्वबृन्दा-
नन्दांबुधिस्वपनदिव्यमहाप्रभावे।
भावेन केनचिदिहाऽमृति ये वसन्ति
ते सन्ति सर्वपरवैष्णवलोकभूम्नि॥ ४

—*—

श्रीशङ्करभगवत्पादप्रणीतं

## भगवन्मानसपूजनम्

हृदम्भोजे कृष्णः सजलजलदश्यामलतनुः
सरोजाक्षः स्रग्वी मुकुटकटकाद्याभरणवान्।

शरद्राकानाथप्रतिमवदनः श्रीमुरलिकां
वहन्ध्येयो गोपीगणपरिवृतः कुङ्कुमचितः ॥ १

पयोम्भोधेर्द्वीपान्मम हृदयमायाहि भगवन्
मणिव्रातभ्राजत्कनकवरपीठं भज हरे।
सुचिह्नौ ते पादौ यदुकुलज नेनेज्मि सुजलैः
गृहाणेदं दूर्वादलजलवदर्घ्यं मुररिपो ॥ २

त्वमाचामोपेन्द्र त्रिदशसरिदम्भोऽतिशिशिरं
भजस्वेमं पञ्चामृतचितमाप्लावमघहन्।
द्युनद्याः कालिन्द्या अपि कनककुम्भस्थितमिदं
जलं तेन स्नानं कुरु कुरु कुरुष्वाचमनकम् ॥ ३

तडिद्वर्णे वस्त्रे भज विजयकान्ताधिहरण
प्रलम्बारिभ्रातर्मृदुलमुपवीतं कुरु गले।
ललाटे पाटीरं मृगमदयुतं धारय हरे
गृहाणेदं माल्यं शतदलतुलस्यादिरचितम् ॥ ४

दशाङ्गं धूपं सद्वरदचरणाग्रेऽर्पितमये
मुखं दीपेनेन्द्रप्रभवरजसा देव कलये।
इमौ पाणी वाणीपतिनुत सकर्पूररजसा
विशोध्याग्रे दत्तं सलिलमिदमाचाम नृहरे ॥ ५

सदातृप्तान्नं षड्रसवदखिलव्यञ्जनयुतं
सुवर्णामत्रे गोघृतचषकयुक्ते स्थितमिदम्।
यशोदासूनो तत्परमदययाऽशान सखिभिः
प्रसादं वाञ्छद्भिः सह तदनु नीरं पिब विभो ॥ ६

सच्चन्द्रं ताम्बूलं मुखरुचिकरं भक्षय हरे
फलं स्वादु प्रीत्या परिमलवदास्वादय चिरम्।
सपर्यापर्याप्त्यै कनकमणिजातं स्थितमिदं
प्रदीपैरारार्तिं जलधितनयाश्लिष्ट रचये ॥ ७

विजातीयैः पुष्पैरतिसुरभिभिर्बिल्वतुलसी-
युतैश्चेमं पुष्पाञ्जलिमजित ते मूर्ध्नि निदधे।
तव प्रादक्षिण्यक्रमणमघविध्वंसि रचितं
चतुर्वारं विष्णो जनिपथगतिश्रान्तविदुषा ॥ ८

नमस्कारोऽष्टाङ्गः सकलदुरितध्वंसनपटुः
कृतं नृत्यं गीतं स्तुतिरपि रमाकान्त त इमम्।
तव प्रीत्यै भूयादहमपि च दासस्तव विभो
कृतं छिद्रं पूर्णं कुरु कुरु नमस्तेऽस्तु भगवन् ॥ ९

सदा सेव्यः कृष्णः सजलघननीलः करतले
दधानो दध्यन्नं तदनु नवनीतं मुरलिकाम्।
कदाचित्कान्तानां कुचकलशपत्रालिरचना
समासक्तं स्निग्धैः सह शिशुविहारं विरचयन् ॥ १०

—*—

## श्रीशङ्करभगवत्पादविरचितं भजगोविन्दस्तोत्रम्

भज गोविन्दं भज गेविन्दं भज गोविन्दं मूढमते।
सम्प्राप्ते सन्निहिते काले नहि नहि रक्षति डुकृञ्करणे ॥ १

मूढ जहीहि धनागमतृष्णां कुरु सद्बुद्धिं मनसि वितृष्णाम्।
यल्लभसे निजकर्मोपात्तं वित्तं तेन विनोदय चित्तम् ॥ २

नारीस्तनभरनाभीदेशं दृष्ट्वा मा गा मोहावेशम्।
एतन्मांसवसादिविकारं मनसि विचिन्तय वारं वारम्।। ३

नलिनीदलगतजलमतितरलं तद्वज्जीवितमतिशयचपलम्।
विद्धि व्याध्यभिमानग्रस्तं लोकं शोकहतं च समस्तम्।। ४

यावद्वित्तोपार्जनसक्तस्तावन्निजपरिवारो रक्तः।
पश्चाज्जीवति जर्जरदेहे वार्तां कोपि न पृच्छति गेहे।। ५

यावत्पवनो निवसति देहे तावत्पृच्छति कुशलं गेहे।
गतवति वायौ देहापाये भार्या बिभ्यति तस्मिन् काये।। ६

अर्थमनर्थं भावय नित्यं नास्ति ततः सुखलेशः सत्यम्।
पुत्रादपि धन भाजां भीतिः सर्वत्रैषा विहिता रीतिः।। ७

बालस्तावत्क्रीडासक्तस्तरुणस्तावत्तरुणीसक्तः।
वृद्धस्तावच्चिन्तासक्तः परे ब्रह्मणि कोपि न सक्तः।। ८

का ते कान्ता कस्ते पुत्रः संसारोऽयमतीव विचित्रः।
कस्य त्वं वा कुत आयातः तत्वं चिन्तय तदिह भ्रातः।। ९

सत्सङ्गत्वे निःसङ्गत्वं निःसङ्गत्वे निर्मोहत्वम्।
निर्मोहत्वे निश्चलतत्वं निश्चलतत्वे जीवन्मुक्तिः।। १०

वयसि गते कः कामविकारः शुष्के नीरे कः कासारः।
क्षीणे वित्ते कः परिवारः ज्ञाते तत्वे कः संसारः।। ११

मा कुरु धनजनयौवनगर्वं हरति निमेषात् कालः सर्वम्।
मायामयमिदमखिलं हित्वा ब्रह्मपदं त्वं प्रविश विदित्वा।। १२

दिनयामिन्यौ सायं प्रातः शिशिरवसन्तौ पुनरायातः।
कालः क्रीडति गच्छत्यायुस्तदपि न मुञ्चत्याशावायुः।। १३

द्वादशमञ्जरिकाभिरशेषः कथितो वैयाकरणस्यैषः ।
उपदेशोऽभूद्विद्यानिपुणैः श्रीमच्छङ्कर भगवच्चरणैः ॥ १४

—*—

विट्ठलेश्वरप्रणीतं

## भुजङ्गप्रयाताष्टकम् ।

सुधाधामनैजाधराधारवेणुं कराग्रैरुदग्रैरतिव्यग्रशीलैः ।
सदा पूरयंश्चारयन्गोवरूथान्पुरः प्रादुरास्तां ममाभीरवीरः ॥ १

यशोदायशोदानदक्षांबुजाक्ष प्रतीपप्रमादप्रहाणप्रवीण ।
निजापाङ्गसङ्गोद्भवानङ्गगोपाङ्गनापाङ्गनृत्याङ्गणीभूतदेह ॥ २

सदाराधिकाराधिकासाधकार्थप्रतापप्रसाद प्रभो कृष्णदेव ।
अनङ्गीकृतानङ्गसेव्यन्तरङ्गप्रविष्टप्रतापाघहन्मे प्रसीद ॥ ३

रमाकान्त शान्त प्रतीपान्त मेऽन्तः स्थिरीभूतपादाम्बुजस्त्वं भवाशु ।
सदा कृष्ण कृष्णेति नाम त्वदीयं विभो गृह्णतो हे यशोदाकिशोर ॥ ४

स्फुरद्रङ्गभूमिष्ठमञ्चोपविष्टोच्छलच्छत्रुपक्षे भयं चानिनीषो ।
अलिव्रात जुष्टोत्तमस्रग्धरश्रीमनोमन्दिर त्वं हरे मे प्रसीद ॥ ५

स्मरस्मेर कस्मात्त्वमस्मान्स्वतो न स्मरस्यम्बुजस्मेरनेत्रानुकंपिन् ।
स्मितोद्भावितानङ्गगोपाङ्गनाङ्गोल्लसत्स्वाङ्गसत्सङ्गलम्भेश पाहि ॥ ६

रमाराम रामामनोहारिवेषोद्धतक्षोणिपालौघपापक्षयेश ।
दरोत्फुल्लपङ्केरुहस्मेरहास प्रपन्नार्तिहृन्नन्दसूनो प्रसीद ॥ ७

कुरङ्गीदृशामङ्गसङ्गेन शश्वन्निजानन्ददानन्दकन्दातिकाल ।
कलिन्दोद्भवोद्भूतपङ्केरुहाक्ष स्वभक्तानुरक्ताक्तपाद प्रसीद ॥ ८

भुजङ्गप्रयाताष्टकेनानुयातो भुजङ्गे शयानं हरिं संस्तवीति।
रतिस्तस्य कृष्णे भवत्याशु नित्या किमन्यैः फलैः फल्गुभिः सेवकस्य ॥

—*—

हरिदासोक्तं

## भुजङ्गप्रयाताष्टकम्

सदा गोपिकामण्डले राजमानं लसन्नृत्यबन्धादिलीलानिदानम्।
गलद्दर्पकन्दर्पशोभाऽभिधानं भजे नन्दसूनुं सदानन्दरूपम् ॥ १

व्रजस्त्रीजनानन्दसंदोहसक्तं सुधावर्षिवंशीनिनादानुरक्तम्।
त्रिभङ्गाकृतिस्वीकृतस्वीयभक्तं भजे नन्दसूनुं सदानन्दरूपम् ॥ २

स्फुरद्रासलीलाविलासातिरम्यं परित्यक्तगेहादिदासैकगम्यम्।
विमानस्थिताशेषदेवादिनम्यं भजे नन्दसूनुं सदानन्दरूपम् ॥ ३

स्वलीलारसानन्ददुग्धोदमग्नं प्रियस्वामिनीबाहुकण्ठैकलग्नम्।
रसात्मैक रूपावबोधं त्रिभङ्गं भजे नन्दसूनुं सदानन्दरूपम् ॥ ४

रसामोदसम्पादकं मन्दहासं कृताभीरनारीविहारैकरासम्।
प्रकाशीकृतस्वीयनानाविलासं भजे नन्दसूनुं सदानन्दरूपम् ॥ ५

जितानङ्गसर्वांगशोभाभिरामं क्षपापूरितस्वामिनीवृन्दकामम्।
निजाधीनतावर्तिरामातिवामं भजे नन्दसूनुं सदानन्दरूपम् ॥ ६

स्वसङ्गीकृतानन्तगोपालबालं वृतस्वीयगोपीमनोवृत्तिपालम्।
कृतानन्दचौर्यादिलीलारसालं भजे नन्दसूनुं सदानन्दरूपम् ॥ ७

धृताद्रीशगोवर्धनाधारहस्तं परित्रातगोगोपगोपीसमस्तम्।
सुराधीशसर्वादिदेवप्रशस्तं भजे नन्दसूनुं सदानन्दरूपम् ॥ ८

श्री वल्लभाचार्यकृतं

# श्रीमधुराष्टकम्

अधरं मधुरं वदनं मधुरं नयनं मधुरं हसितं मधुरम्।
हृदयं मधुरं गमनं मधुरं मधुराधिपतेरखिलं मधुरम्॥ १

वचनं मधुरं चरितं मधुरं वसनं मधुरं वलितं मधुरम्।
चलितं मधुरं भ्रमितं मधुरं मधुराधिपतेरखिलं मधुरम्॥ २

वेणुर्मधुरो रेणुर्मधुरः पाणिर्मधुरः पादौ मधुरौ।
नृत्यं मधुरं सख्यं मधुरं मधुराधिपतेरखिलं मधुरम्॥ ३

गीतं मधुरं पीतं मधुरं भुक्तं मधुरं सुप्तं मधुरम्।
रूपं मधुरं तिलकं मधुरं मधुराधिपतेरखिलं मधुरम्॥ ४

करणं मधुरं तरणं मधुरं हरणं मधुरं स्मरणं मधुरम्।
वमितं मधुरं शमितं मधुरं मधुराधिपतेरखिलं मधुरम्॥ ५

गुञ्जा मधुरा माला मधुरा यमुना मधुरा वीची मधुरा।
सलिलं मधुरं कमलं मधुरं मधुराधिपतेरखिलं मधुरम्॥ ६

गोपी मधुरा लीला मधुरा युक्तं मधुरं भुक्तं मधुरम्।
इष्टं मधुरं शिष्टं मधुरं मधुराधिपतेरखिलं मधुरम्॥ ७

गोपी मधुरा गावो मधुरा यष्टिर्मधुरा सृष्टिर्मधुरा। 1
दलितं मधुरं फलितं मधुरं मधुराधिपतेरखिलं मधुरम्॥ ८

—*—

## कुलशेखरकृता

# मुकुन्दमाला

वन्दे मुकुन्दमरविन्ददलायताक्षं कुन्देन्दुशङ्खदशनं शिशुगोपवेषम्।
इन्द्रादिदेवगणवन्दितपादपीठं वृन्दावनालयमहं वसुदेवसूनुम्॥ १

श्रीवल्लभेति वरदेति दयापरेति भक्तिप्रियेति भवलुण्ठनकोविदेति।
नाथेति नागशयनेति जगन्निवासेत्यालापिनं प्रतिदिनं कुरु मां मुकुन्द॥

जयतु जयतु देवो देवकीनन्दनोऽयं
जयतु जयतु कृष्णो वृष्णिवंशप्रदीपः।
जयतु जयतु मेघश्यामलः कोमलाङ्गो
जयतु जयतु पृथ्वीभारनाशो मुकुन्दः॥ ३

मुकुन्द मूर्ध्ना प्रतिपत्य याचे भवन्तमेकान्तमियन्तमर्थम्।
अविस्मृतिस्त्वच्चरणारविन्दे भवे भवे मेऽस्तु तव प्रसादात्॥ ४

श्रीगोविन्दपदाम्भोजमधुनो महदद्भुतम्।
यत्पायिनो न मुञ्चन्ति मुञ्चन्ति यदपायिनः॥ ५

नाहं वन्दे तव चरणयोर्द्वन्द्वमद्वन्द्वहेतोः
कुम्भीपाकं गुरुमपि हरे नारकं नापनेतुम्।
रम्यारामामृदुतनुलतानन्दने नापि रन्तुं
भावे भावे हृदयभवने भावयेयं भवन्तम्॥ ६

नास्था धर्मे न वसुनिचये नैव कामोपभोगे
यद्भाव्यं तद्भवतु भगवन् पूर्वकर्मानुरूपम्।
एतत्प्रार्थ्यं मम बहु मतं जन्मजन्मान्तरेऽपि
त्वत्पादाम्भोरुहयुगगता निश्चला भक्तिरस्तु॥ ७

दिवि वा भुवि वा ममास्तु वासो नरके वा नरकान्तक प्रकामम्।
अवधीरितशारदारविन्दौ चरणौ ते मरणेऽपि चिन्तयामि॥ ८

सरसिजनयने सशङ्खचक्रे मुरभिदि मा विरमेह चित्त रन्तुम्।
सुखतरमपरं न जातु जाने हरिचरणस्मरणामृतेन तुल्यम्॥ ९

मा भैर्मन्द मनो विचिन्त्य बहुधा यामीश्चिरं यातनाः
नैवामी प्रभवन्ति पापरिपवः स्वामी ननु श्रीधरः।
आलस्यं व्यपनीय भक्तिसुलभं ध्यायस्व नारायणं
लोकस्य व्यसनापनोदनकरो दासस्य किं न क्षमः॥ १०

भवजलधिगतानां द्वन्द्ववाताहतानां
सुतदुहितृ कलत्रत्राणभारार्दितानाम्।
विषमविषयतोये मज्जतामप्लवानां
भवति शरणमेको विष्णुपोतो नराणाम्॥ ११

रजसि निपतितानां मोहजालावृतानां
जननमरणदोलादुर्गसंसर्गगाणाम्।
शरणमशरणानामेक एवातुराणां
कुशलपथनियुक्तश्चक्रपाणिर्नराणाम्॥ १२

अपराधसहस्रसंकुलं पतितं भीमभवार्णवोदरे।
अगतिं शरणागतं हरे कृपया केवलमात्मसात्कुरु॥ १३

मा मे स्त्रीत्वं मा च मे स्यात्कुभावो मा मूर्खत्वं मा कुदेशेषु जन्म।
मिथ्यादृष्टिर्मा च मे स्यात्कदाचिज्जातौ जातौ विष्णुभक्तो भवेयम्॥ १४

कायेन वाचा मनसेन्द्रियैश्च बुद्ध्यात्मना वाऽनुसृतः स्वभावात्।
करोमि यद्यत्सकलं परस्मै नारायणायैव समर्पयामि॥ १५

यत्कृतं यत्करिष्यामि तत्सर्वं न मया कृतम्।
त्वया कृतं तु फलभुक् त्वमेव मधुसूदन ॥ १६

भवजलधिमगाधं दुस्तरं निस्तरेयं
कथमहमिति चेतो मा स्म गाः कातरत्वम्।
सरसिजदृशि देवे तावकी भक्तिरेका
नरकभिदि निषण्णा तारयिष्यत्यवश्यम् ॥ १७

तृष्णातोये मदनपवनोद्धूतमोहोर्मिमाले
दारावर्ते तनयसहजग्राहसङ्घाकुले च।
संसाराख्ये महति जलधौ मज्जतां नस्त्रिधामन्
पादाम्भोजे वरद भवतो भक्तिभावं प्रदेहि ॥ १८

पृथ्वी रेणुरणुः पयांसि कणिकाः फल्गुः स्फुलिङ्गो लघुः
तेजो निःश्वसनं मरुत्तनुतरं रन्ध्रं सुसूक्ष्मं नभः।
क्षुद्रा रुद्रपितामहप्रभृतयः कीटाः समस्ताः सुराः
दृष्टा यत्र स तारको विजयते श्रीपादधूलीकणः ॥ १९

आम्नायाभ्यसनान्यरण्यरुदितं कृच्छ्रव्रतान्यन्वहं
मेदश्छेदफलानि पूर्तविधयः सर्वं हुतं भस्मनि।
तीर्थानामवगाहनानि च गजस्नानं विना यत्पद-
द्वन्द्वाम्भोरुहसंस्मृतिं विजयते देवः स नारायणः ॥ २०

आनन्द गोविन्द मुकुन्द राम नारायणानन्त निरामयेति।
वक्तुं समर्थोऽपि न वक्ति कश्चिदहो जनानां व्यसनानि मोक्षे ॥ २१

क्षीरसागरतरङ्गसीकरासारतारकितचारुमूर्तये।
भोगिभोगशयनीयशायिने माधवाय मधुविद्विषे नमः ॥ २२

# श्री मुकुन्दस्तोत्रम्

श्रीधाम्नि दुग्धोदधिपुण्डरीके यश्चञ्चरीकद्युतिमातनोति।
नीलोत्पलश्यामलदेहकान्तिः स वोऽस्तु भूत्यै भगवान्मुकुन्दः ॥ १

वृन्दारका यस्य भवन्ति भृङ्गाः मन्दाकिनी यन्मकरन्दबिन्दुः।
तवारविन्दाक्ष पदारविन्दं वन्दे चतुर्वर्गचतुष्पदं तत् ॥ २

जयत्युपेन्द्रः स चकार दूतो बिभित्सया यः क्षणलब्धलक्ष्यया।
दृशेव कोपारुणया रिपोरुरः स्वयं भयाद्भिन्न मिवा स्रपाटलम् ॥ ३

सकलभुवनबन्धोर्वैरमिन्दोः सरोजैः
अनुचितमिति मत्वा यः स्वपादारविन्दम्।
घटयितुमिव मायी योजयत्याननेन्दौ
वटदलपुटशायी मङ्गलं वः कृषीष्ट ॥ ४

जीयादम्बुधितनयाऽधररसमास्वादयन्मुरारिरयम्।
अम्बुधिमथनक्लेशं कलयान्विफलं च सफलं च ॥ ४

—*—

श्रीमाधवेन्द्रपुरीविरचितं

# ॥ श्रीयुगलाष्टकम् ॥

बृन्दावनविहाराढ्यौ सच्चिदानन्दविग्रहौ।
मणिमण्डपमध्यस्थौ राधाकृष्णौ नमाम्यहम् ॥ १

पीतनीलपटौ शान्तौ श्यामगौरकलेबरौ।
सदा रासतरतौ सत्यौ राधाकृष्णौ नमाम्यहम् ॥ २

भावाविष्टौ सदा रम्यौ रासचातुर्यपण्डितौ।
मुरलीगानतत्वज्ञौ राधाकृष्णौ नमाम्यहम्।। ३

यमुनोपवनावासौ कदम्बवनमन्दिरौ।
कल्पद्रुमवनाधीशौ राधाकृष्णौ नमाम्यहम्।। ४

यमुनास्नान सुभगौ गोवर्धनविलासिनौ।
दिव्यमन्दारमालाढ्यौ राधाकृष्णौ नमाम्यहम्।। ५

मञ्जीररञ्जितपदौ नासाग्रगजमौक्तिकौ।
मधुरस्मेरसुमुखौ राधाकृष्णौ नमाम्यहम्।। ६

अनन्तकोटिब्रह्माण्डे सृष्टिस्थित्यन्तकारिणौ।
मोहनौ सर्वलोकानां राधाकृष्णौ नमाम्यहम्।। ७

परस्परसाविष्टौ परस्परगणप्रियौ।
रससागरसम्पन्नौ राधाकृष्णौ नमाम्यहम्।। ८

—*—

श्रीमद्रूपगोस्वामिविरचितं

## श्रीयुगलकिशोराष्टकम्

नवजलधरविद्युद्द्योतवर्णौ प्रसन्नौ
वदननयनपद्मौ चारुचन्द्रावतंसौ।
अलकतिलकफालौ केशवेशप्रफुल्लौ
भज भज तु मनो रे राधिकाकृष्णचन्द्रौ।। १

वसनहरितनीलौ चन्दनालेपनाङ्गौ
मणिमरकतदीप्तौ स्वर्णमालाप्रयुक्तौ।

कनकवलयहस्तौ रासनाट्यप्रसक्तौ
भज भज तु मनो रे राधिकाकृष्णचन्द्रौ ।। २

अतिमतिहरवेशौ रङ्गभङ्गीत्रिभङ्गौ
मधुर मृदुलहास्यौ कुण्डलाकीर्णकर्णौ।
नटवरवररम्यौ नृत्यगीतानुरक्तौ
भज भज तु मनो रे राधिकाकृष्णचन्द्रौ ।। ३

विविधगुणविदग्धौ वन्दनीयौ सुवेशौ
मणिमय मकराद्यैः शोभिताङ्गौ स्फुरन्तौ।
स्मितनमितकटाक्षौ धर्मकर्मप्रदत्तौ
भज भज तु मनो रे राधिकाकृष्णचन्द्रौ ।। ४

कनकमुकुटचूडौ पुष्पितोद्भूषिताङ्गौ
सकलवननिविष्टौ सुन्दरानन्दपुञ्जौ।
चरणकमलदिव्यौ देवदेवादिसेव्यौ
भज भज तु मनो रे राधिकाकृष्णचन्द्रौ ।। ५

अतिसुवलितगात्रौ गन्धमाल्यैर्विराजौ
कति कति रमणीनां सेव्यमानौ सुवेशौ।
मुनिसुरगणभाव्यौ वेदशास्त्रादिविज्ञौ
भज भज तु मनो रे राधिकाकृष्णचन्द्रौ ।। ६

अतिसुमधुरमूर्तौ दुष्टदर्पप्रशान्तौ
सुखरसवरदौ द्वौ सर्वसिद्धिप्रदानौ।
अतिरसवशमग्नौ गीतवाद्यैर्वितानौ
भज भज तु मनो रे राधिकाकृष्णचन्द्रौ ।। ७

अगमनिगमसारौ सृष्टिसंहारकारौ
वयसि नवकिशोरौ नित्यबृन्दावनस्थौ।
शमनभयविनाशौ पापिनस्तारयन्तौ
भज भज तु मनो रे राधिकाकृष्णचन्द्रौ ॥ ८

इदं मनोहरं स्तोत्रं श्रद्धया यः पठेन्नरः ।
राधिकाकृष्णचन्द्रौ च सिद्धिदौ नात्र संशयः ॥ ९

—*—

## श्रीराधाकृष्णाष्टकम्

यः श्रीगोवर्धनाद्रिं सकलसुरपतिं त्रस्तगोगोपवृन्दं
स्वीयं संरक्षितुं चेत्यमरसुखकरं मोहयन् सन्दधार।
तन्मानं खण्डयित्वा विजितरिपुकुलो नीलधाराधराभः
कृष्णो राधासमेतो विलसतु हृदये सोऽस्मदीये सदैव ॥ १

यं दृष्ट्वा कंसभूपः स्वकृततिमहो संस्मरन्मन्त्रिवर्यान्
किं वाऽपूर्वं मयेदं कृतमिति वचनं दुःखितः प्रत्युवाच।
आज्ञप्तो नारदेन स्मितयुतवदनः पूरयन्सर्वकामान्
कृष्णो राधासमेतो विलसतु हृदये सोऽस्मदीये सदैव ॥ २

येन प्रोद्यत्प्रतापा नृपतिकुलभवाः पाण्डवाः कौरवाब्धिं
तीर्त्वा पारं तदीयं जगदखिलनृणां सुस्तरं चेति जग्मुः।
तत्पत्नी चीरवृद्धिप्रविदितमहिमा भूतले भूपतीशः
कृष्णो राधासमेतो विलसतु हृदये सोऽस्मदीये सदैव ॥ ३

यस्मै चोद्धृत्य पात्राद्दधियुतनवनीतं करैर्गोपिकाभिः
दत्तं तद्भावपूर्तौ विनिहितहृदयः सत्यमेवं निरोधात्।

मुक्तागुञ्जावलीभिः प्रचुरतमरुचिः कुण्डलाक्रान्तगण्डः
कृष्णो राधासमेतो विलसतु हृदये सोऽस्मदीये सदैव ॥ ४

यस्माद्विश्वाभिरामादिह जननविधौ सर्वनन्दादिगोपाः
संसारार्तैर्विमुक्ताः सकलसुखकराः सम्पदः प्रापुरेव ।
इत्थं पूर्णेन्दुवक्त्रः कलकमलदृशः स्वीयजन्म स्तुवन्तः
कृष्णो राधासमेतो विलसतु हृदये सोऽस्मदीये सदैव ॥ ५

यस्य श्रीनन्दसूनोर्व्रजयुवतिजनाश्चागता भर्तृपुत्रान्
त्यक्त्वा श्रुत्वा समीपे विचकितनयनाः सप्रमोदाः स्वगेहे ।
रन्तुं रासादिलीला मनसिजदलिता वेणुनादं च रम्यं
कृष्णो राधासमेतो विलसतु हृदये सोऽस्मदीये सदैव ॥ ६

यस्मिन् दृष्टे समस्ते जगति युवतयः प्राणनाथव्रता याः
ता अप्येवं हि नूनं किमपि च हृदये काम भावं दधत्यः ।
तत्स्नेहाब्धिं वपुश्चेदविदितधरणौ सूर्यबिम्बस्वरूपाः
कृष्णो राधासमेतो विलसतु हृदये सोऽस्मदीये सदैव ॥ ७

यः स्वीये गोकुलेऽस्मिन्विदितनिजकुलोद्भूतबालैः समेता
मातर्येवं चकार प्रसृततमगुणान्बाललीलाविलासान् ।
हत्वा वत्सप्रलम्बद्विविदबकखरान्गोपवृन्दं जुगोप
कृष्णो राधा समेतो विलसतु हृदये सोऽस्मदीये सदैव ॥ ८

कृष्णराधाष्टकं प्रातरुत्थाय प्रपठेन्नरः ।
य एव सर्वदा नूनं स प्राप्नोति परां गतिम् ॥ ९

—*—

## श्रीराधाकृष्णस्तुतिः

नवललितवयस्कौ नव्यलावण्यपुञ्जौ
नवरसचलचित्तौ नूतनप्रेमवृत्तौ ।
नवनिधुवनलीलाकौतुकेनातिलोलौ
स्मरनिभृतनिकुञ्जे राधिकाकृष्ण चन्द्रौ ॥

द्रुतसुकनकसुगौरस्निग्धमेघौघनील-
च्छविभिरखिलबृन्दारण्यमुद्भासयन्तौ ।
मृदुलनवदुकूले नीलपीते दधानौ
स्मर निभृतनिकुञ्जे राधिकाकृष्णचन्द्रौ ॥

—*—

## रुक्मिणीस्तुतिः

श्लाघ्याशेषतनुं सुदर्शनकरः सर्वाङ्गलीलाजित
त्रैलोक्यां चरणारविन्दललितेनाक्रान्तलोको हरिः ।
बिभ्राणां मुखमिन्दुसुन्दररुचं चन्द्रात्मचक्षुर्दधत्
स्थाने यां स्वतनोरपश्यदधिकां सा रुक्मिणी वोऽवतात् ॥

—*—

## वेणुस्तुतिः

क्रेङ्कारः स्मरकार्मुकस्य सुरतक्रीडापिकीनां रवो
झङ्कारो रतिमञ्जरीमधुलिहां लीलाचकोरीध्वनिः ।
तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्खलत्कङ्कण-
क्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वनः ॥

—*—

श्रीकृष्णचैतन्यविरचितं

# शिक्षाष्टकम्

चेतोदर्पणमार्जनं भवमहादावाग्निनिर्वापणं
श्रेयःकैरवचन्द्रिकावितरणं विद्यावधूजीवनम्।
आनन्दाम्बुधिवर्धनं प्रतिपदं पूर्णामृतास्वादनं
सर्वात्मस्नपनं परं विजयते श्रीकृष्णसङ्कीर्तनम्॥ १

नाम्नामकारि बहुधा निजसर्वशक्तिः
तत्रार्पिता नियमितः स्मरणे न कालः।
एतादृशी तव कृपा भगवन् ममापि
दुर्दैवमीदृशमिहाजनि नानुरागः॥ २

तृणादपि सुनीचेन तरोरपि सहिष्णुना।
अमानिना मानदेन कीर्तनीयः सदा हरिः॥ ३

न धनं न जनं न सुन्दरीं कवितां वा जगदीश कामये।
मम जन्मनि जन्मनीश्वरे भवताद्भक्तिरहैतुकी त्वयि॥ ४

नयनं गलदश्रुधारया वदनं गद्गदरुद्धया गिरा।
पुलकैर्निचितं वपुः कदा तव नामग्रहणे भविष्यति॥ ५

अयि नन्दतनूज किङ्करं पतितं मां विषमे भवाम्बुधौ।
कृपया तव पादपङ्कजस्थितधूलीसदृशं विचिन्तय॥ ६

युगायितं निमेषेण चक्षुषा प्रावृषायितम्।
शून्यायितं जगत्सर्वं गोविन्दविरहेण मे॥ ७

आश्लिष्य वा पादरतं पिनष्टु मा मदर्शनान्मर्महतं करोतु वा।
यथा तथा वा विदधातु लम्पटो मत्प्राणनाथस्तु स एव नापरः॥ ८

—*—

## बुद्धस्तवः ।

षट्चक्रे क्रमभावनापरिगतं हृत्पद्ममध्यस्थितं
संपश्यञ्छिवरूपिणं लयवशादात्मानमध्याश्रितः ।
युष्माकं मधुसूदनो बुधवपुर्धारी स भूयान्मुदे
यस्तिष्ठेत्कमलासने कृतरुचिर्बुद्धैकलिङ्गाकृतिः ॥ १

रेतोरक्तमयान्यमूनि भविनां विण्मूत्रपूर्णोदरा-
ण्यालोक्येव कलेवराणि विगलत्तोयार्द्ररन्ध्राणि यः ।
मायाजालनियन्त्रितानि घृणया नोन्मीलयत्यक्षिणी
निर्व्याजप्रणिधाननिश्चलमतिर्बुद्ध्यै स बुद्धोऽस्तु वः ॥ २

ध्यानव्याजमुपेत्य चिन्तयसि कामुन्मील्य चक्षुः क्षणं
पश्यानङ्गशरातुरं जनमिमं त्रातापि नो रक्षसि ।
मिथ्याकारुणिकोऽसि निर्घृणतरस्त्वत्तः कुतोऽन्यः पुमान्
शश्वन्मारवधूभिरित्यभिहितो बुद्धो जिनः पातु वः ॥ ३

आबाहूद्गतमण्डलाग्ररुचयः संनद्धवक्षःस्थलाः
सोष्माणो व्रणिनो विपक्षहृदयप्रोन्माथिनःकर्कशाः ।
उत्सृष्टाम्बरदृष्टिविभ्रमभरा यस्य स्मराग्रेसरा
योधा वारवधूस्तनाश्च न दधुः क्षोभं स वोऽव्याज्जिनः ॥ ४

बद्ध्वा पद्मासनं यो नयनयुगमिदं न्यस्य नासाग्रदेशे
धृत्वा मूर्तौ च शान्तौ समरसमिलितौ चन्द्रसूर्याख्यवातौ ।
पश्यन्नन्तर्विशुद्धं किमपि च परमं ज्योतिराकारहीनं
सौख्याम्भोधौ निमग्नः स दिशतु भवतां ज्ञानबोधं बुधोऽयम् ॥ ५

कामेनाकृष्य चापं हतपटुपटहं वल्गुभिर्मारवीरैः
भ्रूभङ्गोत्क्षेपजृम्भास्मितललितदृशा दिव्यनारीजनेन ।

सिद्धैः प्रह्वोत्तमाङ्गैः पुलकितवपुषा विस्मयाद्वासवेन
ध्यायन्यो योगपीठादचलित इति वः पातु दृष्टो मुनीन्द्रः ॥ ६

किं स्याद्भास्वान्न भानोरमृतघनरसस्यन्दिनः सन्ति पादाः
किं वा राकाशशाङ्को न हितुहिन रुचिः कुत्रचिन्निष्कलङ्कः ।
साक्षाच्चिन्तामणिः किं विपुलफलमणेः सौकुमार्यं कुतस्त्यं
संदेहान्मुग्धधीभिः प्रथममिति मुनेः पातु दृष्टं वपुर्वः ॥ ७

—*—

## कल्किस्तवः

उद्यत्करकरवालः शकतिमिरध्वंसने महानिपुणः ।
कल्किहरिर्वः पायादपायतः कलिनिशान्तोत्थः ॥ १

यवनीनयनाम्बुधोरणीभिर्धरिणीनामपनीय तापवह्निम् ।
सुकृतद्रुमसेकमाचरन्तं धृतकल्कं प्रणमामि निर्विकल्पम् ॥ २

प्रेङ्खद्वाजितरङ्गमुन्मदगजग्राहप्रगल्भं भट
व्यावल्गत्स्फुटपुण्डरीकनिलयं डिण्डीरपिण्डावलिम् ।
म्लेच्छानीकमहार्णवं सुविपुलं सङ्ग्रामकल्पावधौ
यश्चौर्वाग्निरिवाभवद्दचतु स वः कल्पानि कल्की हरिः ॥ ३

—*—

सुशान्ताकृतं

## कल्किस्तोत्रम्

जय हरेऽमराधीशसेवितं तव पदाम्बुजं भूरिभूषणम् ।
कुरु ममाग्रतः साधु सत्कृतं त्यज महामते मोहमात्मनः ॥ १

तव वपुर्जगद्रूपसंपदा विरचितं सतां मानसे स्थितम् ।

रतिपतेर्मनोमोहदायकं कुरु विचेष्टितं कामलम्पटम् ।। २

तव यशो जगच्छोकनाशनं मृदुकथामृतं प्रीतिदायकम् ।
स्मितसुधोक्षितं चन्द्रवन्मुखं तव करोत्यलं लोकमङ्गलम् ।। ३

मम पतिस्त्वयं सर्वदुर्जयो यदि तवाप्रियं कर्मणाऽऽचरेत् ।
जहि तदात्मनः शत्रुमुद्यतं कुरु कृपां न चेदीदृगीश्वरः ।। ४

महदहंयुतं पञ्चमात्रया प्रकृतिजायया निर्मितं वपुः ।
तव निरीक्षणाल्लीलया जगत्स्थितिलयोदयं ब्रह्मकल्पितम् ।। ५

भूवियन्मरुद्वारितेजसां राशिभिः शरीरेन्द्रियाश्रितैः ।
त्रिगुणया स्वया मायया विभो कुरु कृपां भवत्सेवनार्थिनाम् ।। ६

तव गुणालयं नाम पावनं कलिमलापहं कीर्तयन्ति ये ।
भवभयक्षयं तापतापिता मुहुरहो जनाः संसरन्ति नो ।। ७

तव जनुः सतां मानवर्धनं जिनकुलक्षयं देवपालकम् ।
कृतयुगार्पकं धर्मपूरकं कलिकुलान्तकं शं तनोतु मे ।। ८

मम गृहं पतिपुत्रनप्तृकं गजरथैर्ध्वजैश्चामरैर्धनैः ।
मणिवरासनं सत्कृतिं विना तव पदाब्जयोः शोभयन्ति किम्।।९

तव जगद्वपुः सुन्दरस्मितं मुखमनिन्दितं सुन्दरारवम् ।
यदि न मे प्रियं वल्गुचेष्टितं परिकरोत्यहो मृत्युरस्त्विह ।। १०

हयचर भयहर कर हरशरण खरतरवरशर दशबलदमन ।
जय हतपरभर भववरनाशन शशधरशतसमरसभरमदन ।। ११

(कल्किपुराणे)

—*—

## अम्बरीषकृतम्

# सुदर्शनस्तोत्रम्

त्वमग्निर्भगवान्सूर्यस्त्वं सोमो ज्योतिषां पतिः।
त्वमापस्त्वं क्षितिर्व्योम वायुर्मात्रेन्द्रियाणि च॥ १

सुदर्शन नमस्तुभ्यं सहस्राराच्युतप्रिय।
सर्वास्त्रघातिन्विप्राय स्वस्ति भूया इडस्पते॥ २

त्वं धर्मस्त्वमृतं सत्यं त्वं यज्ञोऽखिलयज्ञभुक्।
त्वं लोकपालः सर्वात्मा त्वं तेजः पौरुषं परम्॥ ३

नमः सुनाभाखिलधर्मसेतवे ह्यधर्मशीलासुरधूमकेतवे।
त्रैलोक्यगोपाय विशुद्धवर्चसे मनोजवायाद्भुतकर्मणे गृणे॥ ४

त्वत्तेजसा धर्ममयेन संहृतं तमः प्रकाशश्च धृतो महात्मनाम्।
दुरत्ययस्ते महिमा गिरां पते त्वद्रूपमेतत्सदसत्परावरम्॥ ५

यदा विसृष्टस्त्वमनञ्जनेन वै बलं प्रविष्टोऽजित दैत्यदानवम्।
बाहूदरोर्वङ्घ्रिशिरोधराणि वृक्णन्नजस्रं प्रधने विराजसे॥ ६

स त्वं जगत्त्राणखलप्रहाणये निरूपितः सर्वसहो गदाभृता।
विप्रस्य चास्मत्कुलदैवहेतवे विधेहि भद्रं तदनुग्रहो हि नः॥ ७

यद्यस्ति दत्तमिष्टं वा स्वधर्मो वा स्वनुष्ठितः।
कुलं नो विप्रदैवं चेद्द्विजो भवतु विज्वरः॥ ८

यदि नो भगवान्प्रीत एकः सर्वगुणाश्रयः।
सर्वभूतात्मभावेन द्विजो भवतु विज्वरः॥ ९

—*—

वेदान्तदेशिक कृतम्

## सुदर्शनाष्टकम्

प्रतिभट श्रेणि भीषण वरगुणस्तोमभूषण
जनि भयस्थान तारण जगदवस्थानकारण।
निखिल दुष्कर्म कर्शन निगम सद्धर्म दर्शन
जय जय श्री सुदर्शन जय जय श्री सुदर्शन ॥ १

शुभ जगद्रूप मण्डन सुर गण त्रास खण्डन
शतमख ब्रह्म वन्दित शतपथ ब्रह्मनन्दित।
प्रथित विद्वत्सपक्षित भजदहिर्बुध्न्य लक्षित
जय जय श्री सुदर्शन जय जय श्री सुदर्शन ॥ २

स्फुट तटिज्जाल पिञ्जर पृथु-तर ज्वाल पञ्जर
परिगतप्रत्न विग्रह परिमित प्रज्ञ दुर्ग्रह
प्रहरण ग्राम मण्डित परिजनत्राण पण्डित
जय जय श्री सुदर्शन जय जय श्री सुदर्शन ॥ ३

निज पद प्रीत सद्गण निरुपधिस्फीतषड्गुण
निगमनिर्व्यूढवैभव निजपरव्यूहवैभव।
हरि हय द्वेषि दारण हर पुर प्लोषकारण
जय जय श्री सुदर्शन जय जय श्री सुदर्शन ॥ ४

दनुजविस्तारकर्तन जनितमिस्राविकर्तन
दनुजविद्यानिकर्तन भजदविद्या निवर्तन।
अमर दृष्ट स्व विक्रम समर जुष्ट भ्रमि क्रम
जय जय श्री सुदर्शन जय जय श्री सुदर्शन ॥ ५

प्रतिमुखालीढबन्धुर पृथुमहाहेतिदन्तुर
विकट माया बहिष्कृत विविध माला परिष्कृत।
पृथु महायन्त्र तन्त्रित दृढदया तन्त्र यन्त्रित
जय जय श्री सुदर्शन जय जय श्री सुदर्शन ॥ ६

महित संपत्सदक्षर विहितसंपत्षडक्षर
षडर चक्रप्रतिष्ठित सकल तत्त्व प्रतिष्ठित।
विविध सङ्कल्प कल्पक विबुधसङ्कल्पकल्पक
जय जय श्री सुदर्शन जय जय श्री सुदर्शन ॥ ७

भुवन नेतस्त्रयीमय सवन तेजस्त्रयीमय
निरवधि स्वादु चिन्मय निखिल शक्ते जगन्मय।
अमित विश्व क्रियामय शमितविष्वग्भयामय
जय जय श्री सुदर्शन जय जय श्री सुदर्शन ॥ ८

द्विचतुष्कमिदं प्रभूतसारं पठतां वेङ्कटनायक प्रणीतम्।
विषमेऽपि मनोरथः प्रधावन् न विहन्येत रथाङ्गधुर्यगुप्तः ॥ ९

—*—

## सुदर्शनषट्कम्

सहस्रादित्यसङ्काशं सहस्रवदनं परम्।
सहस्रदोस्सहस्रारं प्रपद्येऽहं सुदर्शनम् ॥ १

रणत्किङ्किणि जालेन राक्षसघ्नं महाद्भुतम्।
व्याप्तकेशं विरूपाक्षं प्रपद्येऽहं सुदर्शनम् ॥ २ 15

प्राकारसहितं मन्त्रं वदन्तं शत्रुनिग्रहम्।
भूषणैर्भूषितकरं प्रपद्येऽहं सुदर्शनम् ॥ ३

पुष्करस्थमनिर्देश्यं महामन्त्रेण संयुतम्।
शिवं प्रसन्नवदनं प्रपद्येऽहं सुदर्शनम्॥ ४

हुङ्कारभैरवं भीमं प्रपन्नार्तिहरं प्रियम्।
सर्वपापप्रशमनं प्रपद्येऽहं सुदर्शनम्॥ ५

अनन्तहारकेयूरमुकुटादिविभूषितम्।
सर्वपापप्रशमनं प्रपद्येऽहं सुदर्शनम्॥ ६

एतैष्षड्भिस्तुतो देवो भगवांच्छ्रीसुदर्शनः।
रक्षां करोति सर्वत्र सर्वत्र विजयी भवेत्॥ ७

—*—

सूर्यकृतं

## सुदर्शनस्तोत्रम्

(भविष्योत्तरपुराणे कुम्भघोण माहात्म्यतः)

सुदर्शन महाज्वाल प्रसीद जगतः पते।
तेजोराशे प्रसीद त्वं कोटिसूर्यामितप्रभ॥ १

अज्ञानतिमिरध्वंसिन् प्रसीद परमाद्भुत।
सुदर्शन नमस्तेऽस्तु देवानां त्वं सुदर्शनः॥ २

असुराणां सुदुर्दर्श पिशाचानां भयङ्कर।
भञ्जकाय नमस्तेऽस्तु सर्वेषामपि तेजसाम्॥ ३

शान्तानामपि शान्ताय घोराय च दुरात्मनाम्।
चक्राय चक्ररूपाय परचक्राय मायिने॥ ४

हेतये हेतिरूपाय हेतीनां पतये नमः।
कालाय कालरूपाय कालचक्राय ते नमः॥ ५

उग्राय चोग्ररूपाय क्रुद्धोल्काय नमो नमः ।
सहस्राराय शूराय सहस्राक्षाय ते नमः ॥ ६

सहस्राक्षादिपूज्याय सहस्रारिसे नमः ।
ज्योतिर्मण्डलरूपाय जगत्त्रितयधारिणे ॥ ७

त्रिणेत्राय त्रयीधाम्ने नमस्तेऽस्तु त्रिरूपिणे ।
त्वं यज्ञस्त्वं वषट्कारः त्वं ब्रह्मा त्वं प्रजापतिः ॥ ८

त्वमेव वह्निस्त्वं सूर्यः त्वं वायुस्त्वं विशांपतिः ।
आदिमध्यान्तशून्याय नाभिचक्राय नमः ॥ ९

ज्ञानविज्ञानरूपाय ध्यानध्येयस्वरूपिणे ।
चिदानन्दस्वरूपाय प्रकृतेः पृथगात्मने ॥ १०

चराचराणां भूतानां सृष्टिस्थित्यन्तकारिणे ।
सर्वेषामेव भूतानां त्वमेव परमा गतिः ॥ ११

त्वयैव सर्वं देवेश भासते सकलं जगत् ।
त्वदीयेन प्रसादेन भास्करोऽस्मि सुदर्शन ॥ १२

त्वत्तेजसां प्रभावेन मम तेजो हतं प्रभो ।
भूयः संहर तेजस्त्वं अविषह्यं सुरासुरैः ॥ १३

त्वत्प्रसाददहं भूयो भविष्यामि प्रभान्वितः ।
क्षमस्व ते नमस्तेऽस्तु अपराधं कृतं मया ॥ १४

भक्तवत्सल सर्वेश प्रणमामि पुनः पुनः ।
इति स्तुतो भानुमता सुदर्शनो हतप्रभेणाद्भुत धामवैभवः ।
शशाम धाम्नाऽतिशयेन धाम्नां सहस्रभानौ कृपया प्रसन्नः ॥ १५

—*—

वेदान्तदेशिककृतम्

## श्रीहयग्रीवस्तोत्रम्

ज्ञानानन्दमयं देवं निर्मलस्फटिकाकृतिम्।
आधारं सर्वविद्यानां हयग्रीवमुपास्महे ॥ १

स्वतःसिद्धं शुद्धस्फटिक मणिभूभृत्प्रतिभटं
सुधासध्रीचीभिर्द्युतिभिरवदातत्रिभुवनम्।
अनन्तैस्त्रय्यन्तैरनुविहित हेषाहलहलं
हताशेषावद्यं हयवदनमीडीमहि महः ॥ २

समाहारः साम्नां प्रतिपदमृचां धाम यजुषां
लयः प्रत्यूहानां लहरिविततिर्बोधजलधेः।
कथा दर्पक्षुभ्यत्कथक कुल कोलाहलभवं
हरत्वन्तर्ध्वान्तं हयवदन हेषा हलहलः ॥ ३

प्राची सन्ध्या काचिदन्तर्निशायाः प्रज्ञादृष्टेरञ्जन श्रीरपूर्वा।
वक्त्री वेदान् भातु मे वाजिवक्त्रा वागीशाख्या वासुदेवस्य मूर्तिः ॥ ४

विशुद्ध विज्ञानघन स्वरूपं विज्ञान विश्राणन बद्धदीक्षम्।
दयानिधिं देहभृतां शरण्यं देवं हयग्रीवमहं प्रपद्ये ॥ ५

अपौरुषेयैरपि वाक्प्रपञ्चैः अद्यापि ते भूतिमदृष्टपाराम्।
स्तुवन्नहं मुग्ध इति त्वयैव कारुण्यतो नाथ ! कटाक्षणीयः ॥ ६

दाक्षिण्यरम्या गिरिशस्य मूर्तिः देवी सरोजासनधर्मपत्नी।
व्यासादयोऽपि व्यपदेश्यवाचः स्फुरन्ति सर्वे तव शक्तिलेशैः ॥ ७

मन्दोऽभविष्यन्नियतं विरिञ्चो वाचां निधे ! वञ्चितभागधेयः।
दैत्यापनीतान् दययैव भूयोऽप्यध्यापयिष्यो निगमान् न चेत् त्वम् ॥८

वितर्कडोलां व्यवधूय सत्त्वे बृहस्पतिं वर्तयसे यतस्त्वम्।
तेनैव देव ! त्रिदशेश्वराणाम् अस्पृष्टडोलायितमाधिराज्यम्॥ ९

अग्नौ समिद्धार्चिषि सप्ततन्तोः आतस्थिवान् मन्त्रमयं शरीरम्।
अखण्डसारैर्हविषां प्रदानैः आप्यायनं व्योमसदां विधत्से॥ १०

यन्मूलमीदृक् प्रतिभाति तत्त्वं या मूलमाम्नाय महाद्रुमाणाम्।
तत्त्वेन जानन्ति विशुद्ध सत्त्वाः त्वामक्षरामक्षरमातृकां ते॥ ११

अव्याकृताद् व्याकृतवानसि त्वं नामानि रूपाणि च यानि पूर्वम्।
शंसन्ति तेषां चरमां प्रतिष्ठां वागीश्वर ! त्वां त्वदुपज्ञवाचः॥ १२

मुग्धेन्दु निष्यन्द विलोभनीयां मूर्तिं तवानन्दसुधाप्रसूतिम्।
विपश्चितश्चेतसि भावयन्ते वेलामुदारामिव दुग्धसिन्धोः॥ १३

मनोगतं पश्यति यः सदा त्वां मनीषिणां मानस राजहंसम्।
स्वयं पुरोभाव विवादभाजः किं कुर्वते तस्य गिरो यथार्हम्॥ १४

अपि क्षणार्धं कलयन्ति ये त्वां आप्लावयन्तं विशदैर्मयूखैः।
वाचां प्रवाहैरनिवारितैस्ते मन्दाकिनीं मन्दयितुं क्षमन्ते॥ १५

स्वामिन् ! भवद्ध्यान सुधाभिषेकात् वहन्ति धन्याः पुलकानुबन्धम्।
अलक्षिते क्वापि निरूढमूलं अङ्गेष्विवानन्दथुं अङ्कुरन्तम्॥ १६

स्वामिन् ! प्रतीचा हृदयेन धन्याः त्वद्ध्यान चन्द्रोदय वर्धमानम्।
अमान्तमानन्द पयोधिमन्तः पयोभिरक्ष्णां परिवाहयन्ति॥ १७

स्वैरानुभावास्त्वदधीन भावाः समृद्धवीर्यास्त्वदनुग्रहेण।
विपश्चितो नाथ ! तरन्ति मायां वैहारिकीं मोहन पिञ्छिकां ते॥ १८

प्राङ्निर्मितानां तपसां विपाकाः प्रत्यग्रनिःश्रेयस संपदो मे।
समेधिषीरंस्तव पादपद्मे सङ्कल्प चिन्तामणयः प्रणामाः॥ १९

विलुप्त मूर्धन्य लिपि क्रमाणां सुरेन्द्र चूडापद लालितानाम्।
त्वदङ्घ्रि राजीव रजःकणानां भूयान् प्रसादो मयि नाथ ! भूयात्॥ २०

परिस्फुरन्नूपुरचित्रभानु प्रकाश निर्धूत तमोनुषङ्गाम्।
पदद्वयीं ते परिचिन्महेऽन्तः प्रबोध राजीव विभात सन्ध्याम्॥ २१

त्वत्किङ्करालङ्करणोचितानां त्वयैव कल्पान्तर पालितानाम्।
मञ्जुप्रणादं मणिनूपुरं ते मञ्जूषिकां वेदगिरां प्रतीमः॥ २२

सञ्चिन्तयामि प्रतिभादशास्थान् सन्धुक्षयन्तं समयप्रदीपान्।
विज्ञान कल्पद्रुम पल्लवाभं व्याख्यानमुद्रामधुरं करं ते॥ २३

चित्ते करोमि स्फुरिताक्षमालं सव्येतरं नाथ ! करं त्वदीयम्।
ज्ञानामृतोदञ्चन लम्पटानां लीलाघटीयन्त्रमिवाश्रितानाम्॥ २४

प्रबोध सिन्धोररुणैः प्रकाशैः प्रवाल सङ्घातमिवोद्वहन्तम्।
विभावये देव ! सपुस्तकं ते वामं करं दक्षिणमाश्रितानाम्॥ २५

तमांसि भित्त्वा विशदैर्मयूखैः संप्रीणयन्ते विदुषश्चकोरान्।
निशामये त्वां नवपुण्डरीके शरद्घने चन्द्रमिव स्फुरन्तम्॥ २६

दिशन्तु मे देव ! सदा त्वदीयाः दयातरङ्गानुचराः कटाक्षाः।
श्रोत्रेषु पुंसाममृतं क्षरन्तीं सरस्वतीं संश्रित कामधेनुम्॥ २७

विशेषवित्पारिषदेषु नाथ ! विदग्ध गोष्ठी समराङ्गणेषु।
जिगीषतो मे कवितार्किकेन्द्रान् जिह्वाग्र सिंहासनमभ्युपेयाः॥ २८

त्वां चिन्तयंस्त्वन्मयतां प्रपन्नः त्वामुद्गृणन् शब्दमयेन धाम्ना।
स्वामिन् ! समाजेषु समेधिषीय स्वच्छन्द वादाहव बद्धशूरः॥ २९

नानाविधानामगतिः कलानां न चापि तीर्थेषु कृतावतारः।
ध्रुवं तवानाथपरिग्रहायाः नवं नवं पात्रमहं दयायाः॥ ३०

अकम्पनीयान्यपनीतिभेदैः अलङ्कृषीरन् हृदयं मदीयम्।
शङ्काकलङ्कापगमोज्ज्वलानि तत्त्वानि सम्यञ्चि तव प्रसादात्।। ३१

व्याख्यामुद्रां करसरसिजैः पुस्तकं शङ्खचक्रे
बिभ्रद्भिन्न स्फटिकरुचिरे पुण्डरीके निषण्णः।
अम्लानश्रीरमृतविशदैरंशुभिः प्लावयन् माम्
आविर्भूयादनघ महिमा मानसे वागधीशः।। ३२

वागर्थ सिद्धिहेतोः पठत हयग्रीव संस्तुतिं भक्त्या।
कवितार्किककेसरिणा वेङ्कटनाथेन विरचितामेताम्।। ३३

—*—

## श्री हयग्रीवाभिगमनम्

अनिरुद्धतनोर्जातमात्मभूक्लेशनाशनम्।
अभिगच्छामि लक्ष्मीशं हयग्रीववपुर्धरम्।। १

सूर्योऽधुना सरसिजानि विकास्य सर्वान्
उत्थापयन् निजकरैस्तिमिरं निरस्य।
प्रत्युद्गतो धृतनवासनपुण्डीकः
श्रीवाजिवक्त्र भगवंस्तव सुप्रभातम्।। २

वेधाः पुरस्तदनु तन्महिषी गिरीशो
वाचस्पतिः कविबुधौ च कलानिधिश्च।
देवर्षयश्च मिलिता गुरवः परे च
श्री वाजिवक्त्र भगवंस्तव सुप्रभातम्।। ३

अन्वेषणाय मधुकैटभयोः समुद्रे
वेदाहृतेश्च कृत आद्दतसंप्रचारौ।

ब्रह्मादिभक्तजनशीर्षपरिष्क्रियार्हौ
श्रीवाजिवक्त्रचरणौ शरणं प्रपद्ये ॥ ४

श्रीमन् लक्ष्मीहयमुख विभो स्वीकुरुष्वार्चनं मे
श्रीमत् तेऽहं चरणकमलं संश्रयन् साधु याचे ।
इन्दुस्यन्दाधिकशुभसुधासाररूपं त्वदीयं
रूपं चित्ते लसतु महितं सुन्दरं सेन्दिरं मे ॥ ५

दत्त्वा वेदं द्रुतमथ मधुं कैटभञ्चास्य चोरौ
हत्वा यस्त्वं निखिलभुवनस्रष्टृरक्षामतानीः ।
श्रीमन् लक्ष्मीहयमुख विधेह्यद्भुतं तत्त्वबोधं
क्षोभे प्राप्तेऽपि च बहुविधे प्रच्युतिर्यस्य न स्यात् ॥ ६

यं त्वं लक्ष्मीहयमुख पुरा स्वर्गिणां कामकामैः
आराध्यत्वं फलमपि दिशन् वेदतत्त्वार्थमन्यम् ।
तेभ्योऽवोचः सकलवचसामुत्तमेऽर्थे पुमर्थे
सर्वान्तस्स्थे त्वयि भवतु मे पारमैकान्त्यनिष्ठा ॥ ७

नानाबाह्येन्द्रियपरवशं वानरप्रायमेतत्
चित्तं ध्यानं कथमिह ततो वाजिवक्त्र प्रसन्नः ।
स्वच्छ-स्वादु-प्रगुण-सुभग-व्योमगङ्गाप्रवाह-
स्फीतोत्कर्षं हयमुख वचः संतनु श्रेष्ठतीर्थम् ॥८

वैराग्यर्द्धौ विहितमनसां नैव देवान्तरार्चा
मा भूदेषा क्वचिदनुमते सत्समृद्ध्यादिकेऽपि ।
त्वय्यभ्यर्थ्यं भवति यदिदं श्रीहयग्रीव तस्मिन्
निष्ठाभङ्गक्षपणनिपुणस्त्वं हिते चोदयेर्माम् ॥ ९

सत्यं सत्यप्रभृति सुहितं पुष्पमाध्यात्मिकं यत्
तेनैवार्चा तव हयमुख श्रीपते पूर्णतृप्त्यै ।
यावद् रक्ष्यं भवति गृहिणो देहवद् दारपुत्रा-
द्येतत्त्यागे त्वघमिति धिया, तत्र युक्ते नियुंक्ष्व ।। १०

कैङ्कर्यं यत् तुरगवदन त्वत्त्वदीयप्रसत्त्यै
भक्तेर्ज्ञानस्य च दृढभुवस्तत्परीवाहभूतम् ।
ज्ञानं तन्मे वितनु कृपया दुष्कृतान्ताः कृतान्त-
प्रीत्यै जाता भुवि बहुतताः येन निर्मूलिताः स्युः ।। ११

त्वत्सारूप्यं सितहयमुख त्वत्स्नुषा प्राप्य पत्यु-
र्जिह्वावासा जयति चतुरास्यश्च स त्वत्कृपातः ।
पौत्रः शम्भुर्गिरिवरपतिर्दक्षिणामूर्तिरेवं
सर्वज्ञोऽभून्मयि च निखिलो बन्धुरेवं प्रसीद ।। १२

मधुसूदनवीक्षणावदाता इति तस्मिन् महिते निवेदयन्तः ।
शुभधीगुणशील वाग्विलासाः सुखिनः स्युः स्वकरस्थपूरुषार्थाः ।। १३

—*—

## श्री लक्ष्मीहयवदन प्रपत्तिः

विशुद्धविज्ञानघनस्वरूपं विज्ञान विश्राणन बद्धदीक्षम् ।
दयानिधिं देहभृतां शरण्यं देवं हयग्रीवमहं प्रपद्ये ।। १

ब्रह्माणमादौ व्यदधादमुष्मै वेदांश्च यः स्म प्रहिणोति नित्यान् ।
स्वगोचरज्ञान विधायिनं तं देवं हयग्रीवमहं प्रपद्ये ।। २

उद्गीथतारस्वरपूर्वमन्तः प्रविश्य पातालतलादहार्षीत् ।
आम्नायमाकण्ठहयो य एतं देवं हयग्रीवमहं प्रपद्ये ।। ३

प्रदाय पुत्राय पुनः श्रुतीर्यो जघान दैत्यौ नियताब्धिवासम्।
हव्यैश्च कव्यैश्च तमर्च्यमानं देवं हयग्रीवमहं प्रपद्ये ।। ४

यन्नाभि नालीकदलस्थनीरबिन्दूत्थितौ तौ मधुकैटभाख्यौ।
वेदापहाराय तमो रजस्तं देवं हयग्रीवमहं प्रपद्ये ।। ५

काम्याचर्यतां प्राप्य वरं सुरेषु गतेषु यज्ञाग्रहरोऽर्थितो यः ।
अदर्शयत् काय हयं वपुस्तं देवं हयग्रीवमहं प्रपद्ये ।। ६

यो जायमानं पुरुषं प्रपश्यन् मोक्षार्थचिन्तापरमातनोति ।
विद्याधिदेवं मधुसूदनं तं देवं हयग्रीवमहं प्रपद्ये ।। ७

आदित्यबिम्बेऽश्ववपुर्दधत् सन् अयातयामान् निगमान् अदिक्षत्।
यो याज्ञवल्क्याय दयानिधिं तं देवं हयग्रीवमहं प्रपद्ये ।। ८

विज्ञानदानप्रथिता जगत्यां व्यासादयो वागपि दक्षिणा सा।
यद्वीक्षणांशाऽऽहितवैभवांस्तं देवं हयग्रीवमहं प्रपद्ये ।। ९

मत्स्यादिरूपाणि यथा तथैव नानाविधाचार्यवपूंषि गृह्णन्।
वेदान्तविद्याः प्रचिनोति यस्तं देवं हयग्रीवमहं प्रपद्ये ।। १०

श्रेष्ठः कृतज्ञः सुलभोऽन्वितानां शान्तः सुबुद्धिः प्रथितो हि वाजी।
तदाननाविष्कृत सद्गुणौघं देवं हयग्रीवमहं प्रपद्ये ।। ११

हस्तैर्दधानं दरचक्रकोशव्याख्यानमुद्राः सितपद्मपीठम्।
विद्याख्यलक्ष्म्यञ्चितवामभागं देवं हयग्रीवमहं प्रपद्ये ।। १२

—*—

## श्री लक्ष्मीहयग्रीवमङ्गलम्

अशेषवेदरूपाय यथार्थज्ञानदायिने।
विद्यालक्ष्मीसमेताय वाजिवक्त्राय मङ्गलम्।। १

पालने ज्ञानदाने च प्रवणात् अनिरुद्धतः ।
आविर्भूताय वेधोऽर्थमश्वग्रीवाय मङ्गलम् ॥ २

स्वनाभिपद्मजायादौ स्वोपदिष्टाः श्रुतीः समाः ।
स्थिरं पुनरदात् योऽस्मै तुरङ्गास्याय मङ्गलम् ॥ ३

मध्वाभान्मधुमब्बिन्दोः कैटभं कठिनादपि ।
कृत्वाऽरी शिक्षिताजाय गन्धर्वास्याय मङ्गलम् ॥ ४

पादव्यवस्था यत्रार्थवशेनैव मृगात्मने ।
यजुषे यज्ञरूपाय हयग्रीवाय मङ्गलम् ॥ ५

यदुद्गीथस्वरत्रस्तौ दैत्यौ वेदापहारिणौ ।
प्रणवोद्गीथरूपाय पुण्यह्रेषाय मङ्गलम् ॥ ६

वामपुस्तकहस्तस्वभुजाऽऽश्लिष्टरमात्मने ।
व्याख्यामुद्रान्यहस्ताय वाजिवक्त्राय मङ्गलम् ॥ ७

शरद्घनस्थचन्द्राय पुण्डरीकस्थमूर्तये ।
शङ्खचक्रधरायास्तु सैन्धवास्याय मङ्गलम् ॥ ८

ज्ञानामृतघटीयन्त्र साक्षचिन्मुद्रपाणये ।
मुमुक्षाहेतुवीक्षाय मधुहन्त्रेऽस्तु मङ्गलम् ॥ ९

यस्याक्षरसमाम्नायो ह्यकारादिर्हलन्त्यवाक् ।
मध्ये हयवरश्लिष्टो हयास्यस्यास्य मङ्गलम् ॥ १०

अश्विदध्यङ्याज्ञवल्क्य कश्यपादिश्रिताङ्घ्रये ।
वैष्णवक्रतुनेष्टाय वाजिवक्त्राय मङ्गलम् ॥ ११

रजोमूर्तेर्वधूं वाणीं कुर्वते सत्त्वहेतवे ।
तमोमूर्तिश्च सर्वज्ञं तुरगास्याय मङ्गलम् ॥ १२

रामदेशितमार्गेण पाश्वालेनार्चिताङ्घ्रये।
व्यासादिजप्यमन्त्राय वाजिकण्ठाय मङ्गलम्॥ १३

सर्वसूक्ष्मार्थविज्ञानं साधुव्याहारधोरणी।
यन्मन्त्रजपतस्तस्मै हयग्रीवाय मङ्गलम्॥ १४

दशावतारा यस्य स्युः पाश्चात्याः वेधसां गुरोः।
हव्यकव्यभुजे तस्मै हयग्रीवाय मङ्गलम्॥ १५

श्रवणोदग्रकर्णाय श्रवणर्क्षोद्भवाय च।
श्रवणग्राह्यवाग्दात्रे श्रीहयास्याय मङ्गलम्॥ १६

यत्कटाक्षकलालेशकलनात् सकलाः कलाः।
स्वयमाविर्भवन्त्यस्मै शीर्षण्यश्वाय मङ्गलम्॥ १७

धर्माविरुद्धयोरर्थकामयोरमृतस्य च।
हेतुं वाचं ददानाय हयग्रीवाय मङ्गलम्॥ १८

सर्वविद्याप्रतिष्ठानब्रह्मविद्याप्रदायिने।
वागीश्वरेश्वरायास्तु वाजिवक्त्राय मङ्गलम्॥ १९

ज्ञानाय ज्ञानरूपाय ज्ञानिने ज्ञानदायिने।
सर्वोत्तमाय श्रीशाय हयग्रीवाय मङ्गलम्॥ २०

य इदं श्रीहयग्रीवमङ्गलं नियतं पठेत्।
विद्यावाग्धनवंशायुर्वृद्धिसौख्यानि सोऽश्नुते॥ २१

—*—

प्रह्लादकृतम्

# श्री हर्यष्टकम्

हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ।
अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः ॥ १

स गङ्गा स गया सेतुः स काशी स च पुष्करम् ।
जिह्वाग्रे वर्तते यस्य हरिरित्यक्षर द्वयम् ॥ २

वाराणस्यां कुरुक्षेत्रे नैमिशारण्य एव च ।
यत्कृतं तेन येनोक्तं हरिरित्यक्षर द्वयम् ॥ ३

पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च ।
तानि सर्वाण्यशेषाणि हरिरित्यक्षर द्वयम् ॥ ४

गवां कोटिसहस्राणि हेमकन्यासहस्रकम् ।
दत्तं स्यात्तेन येनोक्तं हरिरित्यक्षर द्वयम् ॥ ५

ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः ।
अधीतस्तेन येनोक्तं हरिरित्यक्षर द्वयम् ॥ ६

अश्वमेधैर्महायज्ञैः नरमेधैस्तथैव च ।
इष्टं स्यात्तेन येनोक्तं हरिरित्यक्षर द्वयम् ॥ ७

प्राण प्रयाण पाथेयं संसार व्याधिनाशनम् ।
दुःखात्यन्त परित्राणं हरिरित्यक्षर द्वयम् ॥ ८

बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ।
सकृदुच्चारितं येन हरिरित्यक्षर द्वयम् ॥ ९

हर्यष्टकमिदं पुण्यं प्रातरुत्थाय यः पठेत् ।
आयुष्यं बलमारोग्यं यशो वृद्धिश्श्रियावहम् ।। १०

प्रह्लादेन कृतं स्तोत्रं दुःखसागर शोषणम् ।
यः पठेत्स नरो याति तद्विष्णोः परमं पदम् ।। ११

—*—

धर्मराजविरचितं

## श्रीहरिहरात्मकस्तोत्रम्

गोविन्द माधव मुकुन्द हरे मुरारे शम्भो शिवेश शशिशेखर शूलपाणे ।
दामोदराच्युत जनार्दन वासुदेव त्याज्या भटा य इति सन्ततमामनन्ति ।। १

गङ्गाधरान्धकरिपो हर नीलकण्ठ वैकुण्ठ कैटभरिपो कमठाब्जपाणे ।
भूतेश खण्डपरशो मृड चण्डिकेश त्याज्या भटा य इति सन्ततमामनन्ति ।। २

विष्णो नृसिंह मधुसूदन चक्रपाणे गौरीपते गिरिश शङ्कर चन्द्रचूड ।
नारायणासुरनिबर्हण शार्ङ्गपाणे त्याज्या भटा य इति सन्ततमामनन्ति ।।३

मृत्युञ्जयोग्र विषमेक्षण कामशत्रो श्रीकान्त पीतवसनाम्बुदनील शौरे ।
ईशान कृत्तिवसन त्रिदशैकनाथ त्याज्या भटा य इति सन्ततमामनन्ति ।। ४

लक्ष्मीपते मधुरिपो पुरुषोत्तमाद्य श्रीकण्ठ दिग्वसन शान्त पिनाकपाणे ।
आनन्दकन्द धरणीधर पद्मनाभ त्याज्या भटा य इति सन्ततमामनन्ति ।। ५

सर्वेश्वर त्रिपुरसूदन देवदेव ब्रह्मण्यदेव गरुडध्वज शङ्खपाणे ।
त्र्यक्षोरगाभरण बालमृगाङ्कमौले त्याज्या भटा य इति सन्ततमामनन्ति ।। ६

श्रीराम राघव रमेश्वर रावणारे भूतेश मन्मथरिपो प्रमथाधिनाथ ।
चाणूरमर्दन हृषीकपते मुरारे त्याज्या भटा य इति सन्ततमामनन्ति ।। ७

शूलिन्गिरीश रजनीशकलावतंस कंसप्रणाशन सनातन केशिनाश।
भर्ग त्रिनेत्र भव भूतपते पुरारे त्याज्या भटा य इति सन्ततमामनन्ति ।। ८

गोपीपते यदुपते वसुदेवसूनो कर्पूरगौर वृषभध्वज भालनेत्र।
गोवर्धनोद्धरण धर्मधुरीण गोप त्याज्या भटा य इति सन्ततमामनन्ति ।। ९

स्थाणो त्रिलोचन पिनाकधर स्मारारे कृष्णानिरुद्ध कमलाकर कल्मषारे।
विश्वेश्वर त्रिपथगार्द्रजटाकलाप त्याज्या भटा य इति सन्ततमामनन्ति ।। १०

अष्टोत्तराधिकशतेन सुचारुनाम्नां सन्दर्भितां ललितरत्नकदम्बितेन।
सन्नायकां दृढगुणां निजकण्ठगां यः कुर्यादिमां स्रजमहो स यमं न पश्येत् ।। ११

गणावूचतुः ।।

इत्थं द्विजेन्द्र निजभृत्यगणान्सदैव संशिक्षयेदवनिगान्स हि धर्मराजः।
अन्येऽपि ये हरिहरांकधराधरायां ते दूरतः पुनरहो परिवर्जनीयाः ।। १२

अगस्त्य उवाच–

यो धर्मराजरचितां ललितप्रबन्धां
नामावलिं सकलकल्मषबीजहन्त्रीम्।
धीरोऽत्र कौस्तुभभृतः शशिभूषणस्य
नित्यं जपेत्स्तनरसं न पिबेत्स मातुः ।। १३

(श्रीस्कन्दपुराणे काशीखण्डे)

—*—

अप्पयदीक्षितकृता

## हरिहराभेदस्तुतिः

मारमणमुमारमणं फणधरतल्पं फणाधराकल्पम्।
मुरमथनं पुरमथनं वन्दे बाणारिमसमबाणारिम् ।। १

गोनयनमिलानयनं रविशशिनेत्रं रवीन्दुवह्न्यक्षम्।
स्मरतनयं गुहतनयं वन्दे वैकुण्ठमुडुपतीचूडम्।। २

कृष्णतनुमुमार्धतनुं श्वशुरगृहस्थं सुमेरुशृङ्गस्थम्।
दशवपुषं वसुवपुषं वन्दे भूजानिमचलभूजानिम्।। ३

कुध्रधरमुदग्निधरं जलधिसुताकान्तमचलजाकान्तम्।
गरुडस्थं वृषभस्थं वन्दे पञ्चास्त्रमखिलदिग्वस्त्रम्।। ४

ब्रह्मनुतं ऋगादिनुतं गजगिरिवासं गजेन्द्रचर्माङ्गम्।
सुरशरणं हरिशरणं वन्दे भूदारमखिलभूदारम्।। ५

पार्थसखमुपात्तमखं जलधरकान्तिं जलन्धरारातिम्।
विधितनयं गुहतनयं वन्दे नीलेशमखिलभूतेशम्।। ६

पीतपटं त्वरुणजटं परिमलदेहं पवित्रभूत्यङ्गम्।
जलजकरं डमरुकरं वन्दे योगस्थमखिलयोगीड्यम्।। ७

चक्रकरमभयकरं मणिमयभूषं फणामणीभूषम्।
धृतधनुषं गिरिधनुषं वन्दे गोविन्दमनघगोवाहम्।। ८

खड्गधरमुरगकटकं कमलकराभं कलेशवक्त्राभम्।
स्मितवदनं शुभवदनं वन्दे रक्षोघ्नमरुणदन्तघ्नम्।। ९

नरसूतमुभयसूनुं जलजपदाभं जलेशपापघ्नम्।
ध्वजगरुडं ध्वजवृषभं वन्दे वामाङ्गमिहिरदक्षाङ्गम्।। १०

मोमारमण स्तवनं पठन्ति भक्त्या हरीशयोः कृपया।
भुक्त्वे हसकलभोगान् अन्ते गच्छत्यनुत्तमं धाम।। ११

वस्तां पिशङ्गं वसनं दिशो वा गरुत्मता यातु ककुद्मता वा।
निद्रातु वा नृत्यतु वाऽधिरङ्गं नमे भिदा भाति परस्य तस्य।। १२

## हरिहरस्तुतिः

जाह्नवी मूर्ध्नि पादे वा कालः कण्ठे वपुष्यथ।
कामारिं कामतातं वा कञ्चिद्देवं भजामहे॥ १

गाङ्गयामुनयोगेन तुल्यं हारिहरं वपुः।
पातु नाभिगतं पद्मं यस्य तन्मध्यगं यथा॥ २

अबलाढ्यविग्रहश्रीरमर्त्यनतिरक्षमालयोपेतः।
पञ्चक्रमोदितमुखः पायात्परमेश्वरो मुहुरनादिः॥ ३

पन्नगधारिकराग्रो गङ्गोमालक्षितोऽङ्गदोऽग्रभुजः।
शशिखण्डशेखर उमापरिग्रहो मुहुरनादिरवतु त्वाम्॥ ४

गवीशपत्रो नगजार्तिहारी कुमारतातः शशिखण्डमौलिः।
लङ्केशसंपूजितपादपद्मः पायादनादिः परमेश्वरो वः॥ ५

स्फटिकमरकतश्रीहारिणोः प्रीतियोगात्
तदवतु वपुरेकं कामकंसद्विषोर्वः।
भवति गिरिसुतायाः सार्धमम्भोधिपुत्र्या
सदृशमहसि कण्ठे यत्र सीमाविवादः॥ ६

सम्प्राप्तं मकरध्वजेन मथनं त्वत्तो मदर्थे पुरा
तद्युक्तं बहुमार्गगां मम पुरो निर्लज्ज वोढुस्तव।
तामेवानुनयस्व-भावकुटिलां हे कृष्ण कण्ठग्रहं
मुञ्चेत्याह रुषा यमद्रितनया लक्ष्मीश्च पायात्स वः॥ ७

यौ तौ शङ्खकपालभूषितकरौ मालास्थिमालाधरौ
देवौ द्वारवतीश्मशाननिलयौ नागारिगोवाहनौ।

16

द्विन्यक्षौ बलिदक्षयज्ञमथनौ श्रीशैलजावल्लभौ
पापं वो हरतां सदा हरिहरौ श्रीवत्सगङ्गाधरौ ॥ ८

लोले ब्रूहि कपालिकामिनि पिता कस्ते पतिः पाथसां
कः प्रत्येति जलादपत्यजननं प्रत्येति यः प्रस्तरात्।
इत्थं पर्वतसिन्धुराजसुतयोराकर्ण्य वाक्चातुरीं
संस्मेरस्य हरेर्हरस्य च मुदो निघ्नन्तु विघ्नं तु वः ॥ ९

यस्मादासीत्कुमारः कुवलयदलवल्लीलयोवाह गङ्गां
वामा यस्याङ्गसङ्गा पिहितजनचयो यो गवीशध्वजोऽपि।
लङ्केशाद्येकनाथो हिमकररुचिभृद्भूविशेषाश्रयोऽसौ
वर्णस्याद्यस्य लोपादपहरतु हरिः पातकं वः स्मरारिः ॥ १०

—*—

रामानन्दकृतम्

## शिवरामाष्टकम्

शिव हरे शिव रामसखे प्रभो त्रिविधतापनिवारण हे विभो।
अज जनेश्वर यादव पाहि मां शिव हरे विजयं कुरु मे वरम् ॥ १

कमललोचन राम दयानिधे हर गुरो गजरक्षक गोपते।
शिवतनो भव शङ्कर पाहि मां शिव हरे विजयं कुरु मे वरम् ॥ २

स्वजनरञ्जन मङ्गलमन्दिरं भजति ते पुरुषं परमं पदम्।
भवति तस्य सुखं परमद्भुतं शिव हरे विजयं कुरु मे वरम् ॥ ३

जय युधिष्ठिरवल्लभ भूपते जय जयार्जित पुण्यपयोनिधे।
जय कृपामय कृष्ण नमोऽस्तु ते शिव हरे विजयं कुरु मे वरम् ॥ ४

भवविमोचन माधव मापते सुकविमानसहंस शिवारते।
जनकजारत राघव रक्ष मां शिव हरे विजयं कुरु मे वरम् ॥ ५

अवनिमण्डलमङ्गल मापते जलदसुन्दर राम रमापते।
निगमकीर्ति गुणार्णव गोपते शिव हरे विजयं कुरु मे वरम्॥ ६

पतितपावन नाममयी लता तव यशो विमलं परिगीयते।
तदपि माधव मां किमुपेक्षसे शिव हरे विजयं कुरु मे वरम्॥ ७

अमरतापरदेव रमापते विजयतस्तव नाम घनोपमा।
मयि कथं करुणार्णव जायते शिव हरे विजयं कुरु मे वरम्॥ ८

हनुमतः प्रिय चापकर प्रभो सुरसरिद्धृतशेखर हे गुरो।
मम विभो किमु विस्मरणं कृतं शिव हरे विजयं कुरु मे वरम्॥ ९

नरहरेरतिरञ्जनसुन्दरं पठति यः शिवरामकृतस्तवम्।
विशति रामरमाचरणाम्बुजे शिव हरे विजयं कुरु मे वरम्॥ १०

प्रातरुत्थाय यो भक्त्या पठेदेकाग्रमानसः।
विजयो जायते तस्य विष्णुमाराध्यमाप्नुयात्॥ ११

—*—

श्रीधरवेङ्कटेशार्यकृता

## हरिहरस्तुतिः

स्मराराते शम्भो पुरहर शिवोमाधव हरे
मुरारे गोविन्दामरवरमुकुन्देत्यविरतैः।
शिवाख्यापीयषोर्मिभिरपि दये मां कवलितं
कदा वा कुर्वीरंस्तव गुणझरा मज्जितहराः॥ २२

उमापति रमापती मम शिवौ जहीतां मनो
न जातु करुणे यथा कुरु तथैव बुद्धिं दृढाम्।

तथैव रसनाममूं शिव शिवेति वागुद्धरां
न चैतदुभयं विना किमपि मेऽभिलषितास्पदम् ॥ ९९
दयाशतके।

स्वकरप्रतिपादितस्वचापः
स्वदृगम्भोजसमर्चितस्वकाङ्घ्रिः।
स्वपदाब्ववतंसितस्वमूर्धा
शरणं मेऽस्तु स कोऽपि विश्वहेतुः ॥ १३

श्रीपत्युमापतिपदाद्यभिधेयमूर्ति-
रूपं तथा हरिहरादिमनामरूपम्।
रूपं तवेश सुखचिद्वपुषो द्विरूपं
त्वत्प्राप्तिकल्पलतिकोदयबीजभूतम् ॥ १४

ज्योत्स्नागौरं यदचलसुताजानि संविद्धनं यत्
मेघश्यामं गिरिश कमलावल्लभं वाऽपि रूपम्।
तद्धन्यानां भवभयहरं दर्शयन्त्याद्यवाचः
तत्राद्ये मे वहति कुतुकं चित्तमुत्तंसितेन्दौ ॥ १५
—स्तुतिपद्धतौ

गाम्नातवान् सखितयाऽऽदृतवान्कपींस्त्वं
भूषात्मनाऽहिचयं आप्ततया पिशाचान्।
गृह्णास्यमीषु यदि मामपि कश्चिदीश
का हानिरस्य भवतः कृपया तु भाव्यम् ॥ १६

—*—

## त्रिमूर्तिस्तुतिः

नमस्त्रिमूर्तये तुभ्यं प्राक्सृष्टेः केवलात्मने।
गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥ १

नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते।
अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधास्थितात्मने ॥ २

रजोजुषे जन्मनि सत्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे।
अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः ॥ ३

श्यामश्वेतारुणाङ्गा जलधरणिधरोत्फुल्लपङ्केरुहस्था
मोमासावित्र्युपेता रथचरणपिनाकोग्रहुङ्कारशस्त्राः।
देवा द्वित्र्यष्टनेत्रा जगदवनसमुच्छेदनोत्पत्तिदीक्षाः
प्रीता वः पान्तु नित्यं हरिहरविधयस्तार्क्ष्यगोहंसपत्राः ॥ ४

—*—

दिव्यक्षेत्रविष्णुमूर्तिस्तोत्राणि

श्रीशङ्करभगवत्पादविरचितं

## श्रीरङ्गनाथाष्टकम्

आनन्दरूपे निजबोधरूपे ब्रह्मस्वरूपे श्रुतिमूर्तिरूपे।
शशाङ्करूपे रमणीयरूपे श्रीरङ्गरूपे रमतां मनो मे ॥ १

कावेरितीरे करुणाविलोले मन्दारमूले धृतचारुखेले।
दैत्यान्तकालेऽखिललोकलीले श्रीरङ्गलीले मनो मे ॥ २

लक्ष्मीनिवासे जगतां निवासे हृत्पद्मवासे रविबिम्बवासे।
कृपानिवासे गुणबृन्दवासे श्रीरङ्गवासे रमतां मनो मे ॥ ३

ब्रह्मादिवन्द्ये जगदेकवन्द्ये मुकुन्दवन्द्ये सुरनाथवन्द्ये।
व्यासादिवन्द्ये सनकादिवन्द्ये श्रीरङ्गवन्द्ये रमतां मनो मे ॥ ४

ब्रह्माधिराजे गरुडाधिराजे वैकुण्ठराजे सुरराजराजे।
त्रैलोक्यराजेऽखिललोकराजे श्रीरङ्गराजे रमतां मनो मे ॥ ५

अमोघमुद्रे परिपूर्णनिद्रे श्रीयोगनिद्रे ससमुद्रनिद्रे।
श्रितैकभद्रे जगदेकभद्रे श्रीरङ्गभद्रे रमतां मनो मे ॥ ६

स चित्रशायी भुजगेन्द्रशायी नन्दाङ्कशायी कमलाङ्कशायी।
क्षीराब्धिशायी वटपत्रशायी श्रीरङ्गशायी रमतां मनो मे ॥ ७

इदं हि रङ्गं त्यजतामिहाङ्गं पुनर्न चाङ्गं, यदि चाङ्गमेति।
पाणौ रथाङ्गं चरणेऽम्बु गाङ्गं याने विहङ्गं शयने भुजङ्गम् ॥ ८

रङ्गनाथाष्टकं पुण्यं प्रातरुत्थाय यः पठेत्।
सर्वान् कामानवाप्नोति रङ्गिसायुज्यमाप्नुयात् ॥ ९

—*—

पराशरभट्टकृतम्

## श्रीरङ्गनाथस्तोत्रम्

(श्रीरङ्गक्षेत्रे)

सप्तप्राकारमध्ये सरसिजमुकुलोद्भासमाने विमाने
कावेरीमध्यदेशे मृदुतरफणिराड्भोगिपर्यङ्कभागे।
निद्रामुद्राभिरामं कटिनिकटशिरःपार्श्वविन्यस्तहस्तं
पद्माधात्रीकराभ्यां परिचितचरणं रङ्गराजं भजेऽहम् ॥ १

कस्तूरीकलितोर्ध्वपुण्ड्रतिलकं कर्णान्तलोलेक्षणं
मुग्धस्मेरमनोहराधरदलं मुक्ताकिरीटोज्ज्वलम्।

पश्यन्मानसपश्यतोहररुचिं पर्यायपङ्केरुहं
श्रीरङ्गाधिपतेः कदा नु वदनं सेवेय भूयोऽप्यहम् ।। २

कदाऽहं कावेरीतटपरिसरे रङ्गनगरे
शयानं भोगीन्द्रे शतमखमणिश्यामळरुचिम् ।
उपासीनः क्रोशन्मधुमथन नारायण हरे
मुरारे गोविन्देत्यनिशमनुनेष्यामि दिवसान् ।। ३

कदाहं कावेरीविमलसलिले वीतकलुषो
भवेयं तत्तीरे श्रममुषि वसेयं घनवने ।
कदा वा तत्पुण्ये महति पुळिने मङ्गलगुणं
भजेयं रङ्गेशं कमलनयनं शेषशयनम् ।। ४

पूगीकण्ठद्वयससरसस्निग्धनीरोपकण्ठां
आविर्मोदस्तिमितशकुनानूदितब्रह्मघोषाम् ।
मार्गेमार्गे पथिकनिवहैरुञ्छ्यमानापवर्गां
पश्येयं तां पुनरपि पुरीं श्रीमतीं रङ्गधाम्नः ।। ५

स जातु पीतामृतमूर्च्छितानां नाकौकसां नन्दनवाटिकासु ।
रङ्गेश्वर त्वत्पुरमाश्रितानां रथ्याशुनामन्यतमो भवेयम् ।। ६

श्रीरङ्गं करिशैलमञ्जनगिरिं ताक्ष्याद्रिसिंहाचलौ
श्रीकूर्मं पुरुषोत्तमं च बदरीनारायणं नैमिशम् ।
श्रीमद् द्वारवतीं प्रयागमधुरायोध्यागयाः पुष्करं
सालग्रामगिरिं निषेव्य रमते रामानुजोऽयं मुनिः ।। ७

असन्निकृष्टस्य निकृष्टजन्तोर्मिथ्यापवादेन करोषि शान्तिम् ।
ततो निकृष्टे मयि संनिकृष्टे कां निष्कृतिं रङ्गपते करोषि ।। ८

—*—

वेदान्तदेशिकप्रणीतः

# अभीतिस्तवः

(श्रीरङ्गक्षेत्रे)

अभीतिरिह यज्जुषां यदवधीरितानां भयं
भयाभयविधायिनो जगति यन्निदेशे स्थिताः।
तदेतदतिलङ्घितद्रुहिणशम्भुशक्रादिकं
रमासखमधीमहे किमपि रङ्गधुर्यं महः ॥ १

दयाशिशिरिताशया मनसि मे सदा जागृयुः
श्रियाध्युषितवक्षसः श्रितमरुद्वृधासैकताः।
जगद्दुरितघस्मरा जलधिडिम्भडम्भस्पृहः
सकृत्प्रणतरक्षणप्रथितसंविदः संविदः ॥ २

यदद्य मितबुद्धिना बहुलमोहभाजा मया
गुणग्रथितकायवाङ्मनसि वृत्तिवैचित्र्यतः।
अतर्कितहिताहितक्रमविशेषमारभ्यते
तदप्युचितमर्चनं परिगृहाण रङ्गेश्वर ॥ ३

मरुत्तरणिपावकत्रिदशनाथकालादयः
स्वकृत्यमधिकुर्वते त्वदपराधतो बिभ्यतः।
महत्किमपि वज्रमुद्यतमिवेति यत् श्रूयते
तरत्यनघ यद्भयं य इह तावकस्तावकः ॥ ४

भवन्तमिह यः सुधीर्नियतचेतनाचेतनं
पनायति नमस्यति स्मरति वक्ति पर्येति वा।
गुणं कमपि वेत्ति वा तव गुणेश गोपायितुः
कदाचन कुतश्चन क्वचन तस्य न स्याद्भयम् ॥ ५

स्थिते मनसि विग्रहे गुणिनि धातुसाम्ये सति
स्मरेदखिलदेहिनं य इह जातुचित्त्वामजम्।
तयैव खलु सन्धया तमथ दीर्घनिद्रावशं
स्वयं विहितसंस्मृतिर्नयसि धाम नैःश्रेयसम्॥ ६

रमादयित रङ्गभूरमण कृष्ण विष्णो हरे
त्रिविक्रम जनार्दन त्रियुगनाथ नारायण।
इतीव शुभदानि यः पठति नामधेयानि ते
न तस्य यमवश्यता नरकपातभीतिः कुतः॥ ७

कदाचिदपि रङ्गभूरसिक यत्र देशे वशी
त्वदेकनियताशयस्त्रिदशवन्दितो वर्तते।
तदक्षततपोवनं तव च राजधानी स्थिरा
सुखस्य सुखमास्पदं सुचरितस्य दुर्गं महत्॥ ८

त्रिवर्गपथवर्तिनां त्रिगुणलङ्घनोद्योगिनां
द्विषत्प्रमथनार्थिनामपि च रङ्गदृश्योदयाः।
स्खलत्समयकातरीहरणजागरूकाः प्रभो
करग्रहणदीक्षिताः क इह तेन दिव्या गुणाः॥ ९

बिभेति भवभृत्प्रभो त्वदुपदेशतीव्रौषधात्
कदध्वरसदुर्विषे बडिशभक्ष्यवत्प्रीयते।
अपथ्यपरिहारधीविमुखमित्थमाकस्मिकी
तमप्यवसरे क्रमादवति वत्सला त्वद्दया॥ १०

अपार्थ इति निश्चितः प्रहरणादियोगस्तव
स्वयं वदसि निर्भयस्तदपि रङ्गपृथ्वीपते।
स्वरक्षणमिवाभवत्प्रणतरक्षणं तावकं
यदात्थ परमार्थविन्नियतमन्तरात्मेति ते॥ ११

लघिष्ठसुखसङ्गतैः स्वकृतकर्मनिर्वर्तितैः
कलत्रसुतसोदरानुचरबन्धुसम्बन्धिभिः ।
धनप्रभृतिकैरपि प्रचुरभीतिभेदोत्तरैः
न बिभ्रति धृतिं विभो त्वदनुभूतिभोगार्थिनः ॥ १२

न वक्तुमपि शक्यते नरकगर्भवासादिकं
वपुश्च बहुधातुकं निपुणचिन्तने तादृशम् ।
त्रिविष्टपमुखं तथा दिवि पदस्य देदीप्यतः
किमत्र न भयास्पदं भवति रङ्गपृथ्वीपते ॥ १३

भवन्ति मुखभेदतो भयनिदानमेव प्रभो
शुभाशुभविकल्पिता जगति देशकालादयः ।
इति प्रचुरसाध्वसे मयि दयिष्यसे त्वं न चेत्
क इत्थमनुकम्पिता त्वदनुकम्पनीयश्च कः ॥ १४

सकृत्प्रपदनस्पृशामभयदाननित्यव्रती
न च द्विरभिभाषसे त्वमिति विश्रुतः स्वोक्तितः ।
यथोक्तकरणं विदुस्तव तु यातुधानादयः
कथं वितथमस्तु तत्कृपणसार्वभौमे मयि ॥ १५

अनुक्षणसमुत्थिते दुरितवारिधौ दुस्तरे
यदि क्वचन निष्कृतिर्भवति सापि दोषाविला ।
तदित्थमगतौ मयि प्रतिविधानमाधीयतां
स्वबुद्धिपरिकल्पितं किमपि रङ्गधुर्य त्वया ॥ १६

विषादबहुलादहं विषयवर्गतो दुर्जयात्
बिभेमि वृजिनोत्तरस्त्वदनुभूतिविच्छेदतः ।
मया नियतनाथवानयमिति त्वमर्थापयन्
दयाघन जगत्पते दयित रङ्ग संरक्ष माम् ॥ १७

निसर्गनिरनिष्टता तव निरंहसः श्रूयते
ततस्त्रियुगसृष्टिवद्भवति संहृतिः क्रीडितम्।
तथापि शरणागतप्रणयभङ्गभीतो भवान्
मदिष्टमिह यद्भवेत्किमपि मा स्म तज्जीहपत्॥ १८

कयाधुसुतवायसद्विरदपुङ्गवद्रौपदी-
विभीषणभुजङ्गमव्रजगणाम्बरीषादयः।
भवत्पदसमाश्रिता भयविमुक्तिमापुर्यथा
लभेमहि तथा वयं सपदि रङ्गधुर्य त्वया॥ १९

भयं शमय रङ्गधाम्न्यनितराभिलाषस्पृशां
श्रियं बहुलय प्रभो श्रितविपक्षमुन्मूलय।
स्वयं समुदितं वपुस्तव निशामयन्तः सदा
वयं त्रिदशनिर्वृतिं भुवि मुकुन्द विन्देमहि॥ २०

श्रियः परिवृढे त्वयि श्रितजनस्य संरक्षके
सदद्भुतगुणोदधाविति समर्पितोऽयं भरः।
प्रतिक्षणमतः परं प्रथय रङ्गधामादिषु
प्रभुत्वमनुपाधिकं प्रथितहेतिभिर्हेतिभिः॥ २१

कलिप्रणिधिलक्षणैः कलितशाक्यलोकायतैः
तुरुष्कयवनादिभिर्जगति जृम्भमाणं भयम्।
प्रकृष्टनिजशक्तिभिः प्रसभमायुधैः पञ्चभिः
क्षितित्रिदशरक्षकैः क्षपय रङ्गनाथ क्षणात्॥ २२

दितिप्रभवदेहभिद्दहनसोमसूर्यात्मकं
तमःप्रमथनं प्रभो समुदितास्त्रवृन्दं स्वतः।
स्ववृत्तिवशवर्ति तत्त्रिदशवृत्ति चक्रं पुनः
प्रवर्तयतु धाम्नि ते महति धर्मचक्रस्थितिम्॥ २३

मनुप्रभृतिमानिते महति रङ्गधामादिके
दनुप्रभवदारुणैर्दरमुदीर्यमाणं परैः ।
प्रकृष्टगुणकः श्रिया वसुधया च संधुक्षितः
प्रयुक्तकरुणोदधिः प्रशमय स्वशक्त्या स्वयम् ।। २४

भुजङ्गमविहङ्गमप्रवरसैन्यनाथाः प्रभो
तथैव कुमुदादयो नगरगोपुरद्वारपाः ।
अचिन्त्यबलविक्रमास्त्वमिव रङ्ग संरक्षका
जितं त इति वादिनो जगदनुग्रहे जाग्रतु ।। २५

विधिस्त्रिपुरमर्दनस्त्रिदशपुङ्गवः पावको
यमप्रभृतयोऽपि यद्भिमतरक्षणे न क्षमाः ।
रिरक्षिषति यत्र च प्रतिभयं न किञ्चित्कचित्
स नः प्रतिभटान्प्रभो शमय रङ्गधामादिषु ।। २६

स कैटभतमोरविर्मधुपरागझञ्झामरुत्
हिरण्यगिरिदारणस्त्रुटितकालनेमिद्रुमः ।
किमत्र बहुना भजद्भवपयोधिमुष्टिन्धयः
त्रिविक्रम भवत्क्रमः क्षिपतु मंक्षु रङ्गद्विषः ।। २७

यतिप्रवरभारतीरसभरेण नीतं वयः
प्रफुल्लपलितं शिरः परमिह क्षमं प्रार्थये ।
निरस्तरिपुसंभवे क्वचन रङ्गमुख्ये विभो
परस्परहितैषिणां परिसरेषु मां वर्तय ।। २८

प्रबुद्धगुरुवीक्षणप्रथितवेङ्कटेशोद्भवां
इमामभयसिद्धये पठत रङ्गभर्तुः स्तुतिम् ।
भयं त्यजत भद्रमित्यभिदधत्स वः केशवः
स्वयं घनघृणानिधिर्गुणगणेन गोपायति ।। २९

—*—

वेदान्तदेशिककृतम्

## भगवद्ध्यानसोपानम्

(श्रीरङ्गक्षेत्रे)

अन्तर्ज्योतिः किमपि यमिनामञ्जनं योगदृष्टेः
चिन्तारत्नं सुलभमिह नः सिद्धिमोक्षानुरूपम्।
दीनानाथव्यसनशमनं दैवतं दैवतानां
दिव्यं चक्षुः श्रुतिपरिषदां दृश्यते रङ्गमध्ये॥ १

वेलातीतश्रुतिपरिमलं वेधसां मौलिसेव्यं
प्रादुर्भूतं कनकसरितः सैकते हंसजुष्टे।
लक्ष्मीभूम्योः करसरसिजैर्लालितं रङ्गभर्तुः
पादाम्भोजं प्रतिफलति मे भावनादीर्घिकायाम्॥ २

चित्राकारां कटकरुचिभिश्चारुवृत्तानुपूर्वां
काले दूत्यद्रुततरगतिं कान्तिलीलाकलाचीम्।
जानुच्छायाद्विगुणसुभगां रङ्गभर्तुर्मदात्मा
जङ्घां दृष्ट्वा जननपदवीजाङ्घिकत्वं जहाति॥ ३

कामारामस्थिरकदलिकास्तम्भसंभावनीयं
क्षौमाश्लिष्टं किमपि कमलाभूमिनीलोपधानम्।
न्यञ्चत्काञ्चीकिरणरुचिरं निर्विशत्यूरुयुग्मं
लावण्यौघद्वयमिव मतिर्मामिका रङ्गयूनः॥ ४

संप्रीणाति प्रतिकलमसौ मानसं मे सुजाता
गम्भीरत्वात्क्वचन समये गूढनिक्षिप्तविश्वा।
नालीकेन स्फुरितरजसा वेधसो निर्मिमाणा
रम्यावर्तद्युतिसहचरी रङ्गनाथस्य नाभिः॥ ५

श्रीवत्सेन प्रथितविभवं श्रीपदन्यासधन्यं
मध्यं बाह्वोर्मणिवररुचारञ्जितं रङ्गधाम्नः ।
सान्द्रच्छायं तरुणतुलसीचित्रया वैजयन्त्या
सन्तापं मे शमयति धियश्चन्द्रिकोदारहारम् ॥ ६

एकं लीलोपहितमितं बाहुमाजानुलम्बं
प्राप्ता रङ्गे शयितुरखिलप्रार्थनापारिजातम् ।
दृप्ता सेयं दृढनियमिता रश्मिभिर्भूषणानां
चिन्ताहस्तिन्यनुभवति मे चित्रमालानयन्त्रम् ॥ ७

साभिप्रायस्मितविकसितं चारुबिम्बाधरोष्ठं
दुःखापायप्रणयिनि जने दूरदत्ताभिमुख्यम् ।
कान्तं वक्त्रं कनकतिलकालङ्कृतं रङ्गभर्तुः
स्वान्ते गाढं विलगति मम स्वागतोदारनेत्रम् ॥ ८

माल्यैरन्तःस्थिरपरिमलैर्वल्लभास्पर्शमान्यैः
कुप्यच्चोलीवचनकुटिलैः कुन्तलैः श्लिष्टमूले ।
रत्नापीडद्युतिशबलिते रङ्गभर्तुः किरीटे
राजन्वत्यः स्थितिमधिगता वृत्तयश्चेतसो मे ॥ ९

पादाम्भोजं स्पृशति भजते रङ्गनाथस्य जङ्घां
ऊरुद्वन्द्वे विलगति शनैरूर्ध्वमभ्येति नाभिम् ।
वक्ष्यस्यास्ते वलति भुजयोर्मामिकेयं मनीषा
वक्त्राभिख्यां पिबति वहते वासनां मौलिबन्धे ॥ १०

कान्तोदारैरयमिह भुजैः कङ्कणज्याकिणाङ्कैः
लक्ष्मीधाम्नः पृथुलपरिघैर्लक्षिताभीतिहेतिः ।
अग्रे किञ्चिद्भुजगशयनः स्वात्मनैवात्मनः सन्
मध्येरङ्गं मम च हृदये वर्तते सावरोधः ॥ ११

रङ्गास्थाने रसिकमहिते रञ्जिताशेषचित्ते
विद्वत्सेवाविमलमनसा वेङ्कटेशेन क्लृप्तम् ।
अक्लेशेन प्रणिहितधियामारुरुक्षोरवस्थां
भक्तिं गाढां दिशतु भगवद्ध्यानसोपानमेतत् ॥ १२

—*—

कुम्भकोणस्थले

## श्री कोमलाम्बासमेत शार्ङ्गपाणिस्तुतिः

त्रयस्त्रिंशत्कोटि त्रिदशगणसंसेवितपदः
सह श्रीभूमिभ्यां कनकनलिनी रोधसि वसन् ।
अमन्दानानन्दान् स्वयमवकिरन् सेवकदृशोः
मुकुन्दः शार्ङ्गाख्यो मनसि मम नित्यं विहरतु ॥ १

कुशलमवनतानां कुम्भकोणस्थले यः
कलयति निवसन् वै काञ्चनाब्जिन्युपान्ते ।
कुलिशधरमुखेभ्यः कोमलाम्बासहायः
स भवतु मम चित्ते सन्ततं शार्ङ्गधन्वा ॥ २

त्रिंशत्त्रिकोटि वसुरुद्रदिवाकरादि-
देवादिदेवगणसम्मतसेव्यमानम् ।
अम्भोजसंभवचतुर्मुखगीयमानं
वन्दे शयानमिह भोगिनि शार्ङ्गपाणिम् ॥ ३

उत्तानशायिनमुदारकिरीटचूडं
उत्फुल्लपद्मनयनं ह्युपधानबाहुम् ।
आजानुबाहुममलं फणिराजतल्पे
शार्ङ्गेशमच्युतमहं प्रणतोऽस्मि नित्यम् ॥ ४

सकलभुवनमाता सागराधीशजाता
प्रणमदमरकामा भास्करक्षेत्रधामा ।
शकलितभवमूला शार्ङ्गधन्वानुकूला
प्रविमलमुखबिम्बा पातु मां कोमलाम्बा ।। ५

मथितादमृताम्भोधेरवतारमवाप्य या ।
जगतामभयं चक्रे तनुतां कोमला श्रियम् ।। ६

—*—

हेममुनिकृतं

## श्रीशार्ङ्गपाणिस्तोत्रम्

नमो नमोऽगण्यगुणैकसिन्धवे कल्याणसद्विग्रहशालिने प्रभो ।
योगीन्द्रहृत्पङ्कजमध्यवासिने योगाय योगीन्द्रकरार्चिताय ।। १

कामादिषड्वर्गविभेदकाय भक्तार्तिसंभेदन दीक्षिताय ।
कल्याणनाथाय कलाधरार्कसुरेन्द्र संपूजित विग्रहाय ।। २

कालात्मने कालसुयोगकारिणे श्रीकालचक्राय सुचक्रधारिणे ।
भूचक्रसंस्थाय सुमानिताय खगध्वजेशाय नमामि सन्ततम् ।। ३

मत्स्याय कूर्माय किटीन्द्ररूपिणे श्रीनारसिंहाय नमो नमस्ते ।
इन्द्रानुजाय दितिजेन्द्रविभेदकाय निशाचरेशवरकण्ठविभेदकाय ।। ४

गोपीकुचासक्तयदूद्वहाय नमामि बुद्धाय रमाधिहारिणे ।
ज्ञानेतरध्वान्त निवारकाय विज्ञानवैराग्य सुभक्तिदायिने ।। ५

प्रज्ञात्मने प्राज्ञसंपूजिताय प्रह्लाद संरक्षणदीक्षिताय ।
आनन्दपूर्णाय सदाऽन्तरात्मने वेदान्तवेद्याय नमो नमस्ते ।। ६

सर्गस्थिति प्रलयकारणकारणाय भोगीन्द्रतल्पाश्रितविग्रहाय।
कल्पार्धकल्पाय फलप्रदायिने कञ्जासनापूजितमङ्गलाङ्घ्रिने ।। ७

नमो नमस्ते करुणाकराय नागारिदिव्यांसगताय विष्णवे।
श्रीभूमिनीलार्चितसुन्दराङ्घ्रिने नमो नमः शार्ङ्गधराय तुभ्यम् ।। ८

पुनः पुनस्ते प्रणमामि विष्णो त्वत्पार्श्वयोः पुरतः पृष्ठतश्च ।
सर्वत्र ते सन्ततमादरेण नमामि शार्ङ्गेश महाप्रभो विभौ ।। ९

—*—

वेदान्तदेशिककृतम्

## वेगासेतुस्तोत्रम्

(வெஃகா - काञ्चीक्षेत्रे वेगवतीतीरे)

एकं वेगवतीमध्ये हस्तिशैले च दृश्यते।
उपायफलभावेन स्वयं व्यक्तं परं महः ।। १

ईष्टे गमयितुं पारमेष सेतुरभङ्गरः ।
यत्र सारस्वतं स्रोतो विश्राम्यति विशृङ्खलम् ।। २

जयति जगदेकसेतुः वेगवतीमध्यलक्षितो देवः ।
प्रशमयति यः प्रजानां प्रथितान् संसारजलधिकल्लोलान् ।। ३

विभातु मे चेतसि विष्णुसेतुः वेगापगावेगविघातहेतुः ।
अम्भोजयोनेर्यदुपज्ञमासीत् अभङ्गरक्षा हयमेधदीक्षा ।। ४

चतुरानन सप्ततन्तु गोप्ता सरितं वेगवतीमसौ निरुन्धन् ।
परिपुष्यति मङ्गलानि पुंसां भगवद्भक्तिमतां यथोक्तकारी ।। ५

श्रीमान् पितामहवधूपरिचर्यमाणः
शेते भुजङ्गशयने स महाभुजङ्गः ।

प्रत्यादिशन्ति भवसञ्चरणं प्रजानां
भक्तानुगन्तुरह यस्य गतागतानि ॥ ६

प्रशमितहयमेधव्यापदं पद्मयोनेः
श्रितजनपरतन्त्रं शेषभोगे शयानम् ।
शरणमुपगताः स्मः शान्तनिःशेषदोषं
शतमख मणिसेतुं शाश्वतं वेगवत्याः ॥ ७

शरणमुपगतानां सोऽयमादेशकारी
शमयति परितापं संमुखः सर्वजन्तोः ।
शतगुणपरिणामः सन्निधौ यस्य नित्यं
वरवितरणभूमा वारणाद्रीश्वरस्य ॥ ८

काञ्चीभाग्यं कमलनिलया चेतसोऽभीष्टसिद्धिः
कल्याणानां निधिरविकलः कोऽपि कारुण्य राशिः ।
पुण्यानां नः परिणतिरसौ भूषयन् भोगिशय्यां
वेगासेतुर्जयति विपुलो विश्वरक्षैकहेतुः ॥ ९

वेगासेतोरिदं स्तोत्रं वेङ्कटेशेन निर्मितम् ।
ये पठन्ति जनास्तेषां यथोक्तं कुरुते हरिः । १०

—*—

वेदान्तदेशिककृता

## परमार्थस्तुतिः

(गृध्रसरसि திருப்புட்குழி)

श्रीमद्गृध्रसरस्तीरपारिजातमुपास्महे ।
यत्र तुङ्गैरतुङ्गैश्च प्रणतैर्गृह्यते फलम् ॥ १

गुरुभिस्त्वदनन्य सर्वभावैः गुणसिन्धौ कृतसंप्लवस्त्वदीये।
रणपुङ्गव वन्दिभावमिच्छन् अहमस्म्येकमनुग्रहास्पदं ते॥ २

भुवनाश्रय भूषणास्त्रवर्गं मनसि त्वन्मयतां ममातनोतु।
वपुराहव पुङ्गव त्वदीयं महिषीणामनिमेषदर्शनीयम्॥ ३

अभिरक्षितुमग्रतः स्थितं त्वां प्रणवे पार्थरथे च भावयन्तः।
अहित प्रशमैरयत्नलभ्यैः कथयन्त्याहवपुङ्गवं गुणज्ञाः॥ ४

कमला निरपायधर्मपत्नी करुणाद्याः स्वयमृत्विजो गुणास्ते।
अवनं श्रयतामहीनमाद्यं स च धर्मस्त्वदनन्य सेवनीयः॥ ५

कृपणाः सुधियः कृपासहायं शरणं त्वां रणपुङ्गव प्रपन्नाः।
अपवर्गनयादनन्यभावाः वरिवस्यारसमेकमाद्रियन्ते॥ ६

अवधीर्य चतुर्विधं पुमर्थं भवदर्थे विनियुक्तजीवितः सन्।
लभते भवतः फलानि जन्तुः निखिलान्यत्र निदर्शनं जटायुः॥ ७

शरणागत रक्षण व्रती मां न विहातुं रणपुङ्गवार्हसि त्वम्।
विदितं भुवने विभीषणो वा यदि वा रावण इत्युदीरितं ते॥ ८

भुजगेन्द्र गरुत्मदादिलभ्यैः त्वदनुज्ञानुभवप्रवाह भेदैः।
स्वपदे रणपुङ्गव स्वयं मां परिचर्याविभवैः परिष्क्रियेथाः॥ ९

विमलाशय वेङ्कटेशजन्मा रमणीया रणपुङ्गव प्रसादात्।
अनसूयुभिरादरेण भाव्या परमार्थस्तुतिरन्वहं प्रपन्नैः॥ १०

—*—

## वेदान्तदेशिककृता

# देहलीशस्तुतिः

(गोपपुरे திருக்கோவலூர் पण्णातटे)

विक्रम्य येन विजितानि जगन्ति भूम्ना
विश्वस्य यं परमकारणमामनन्ति।
विश्राणयन् प्रणयिनां विविधान् पुमर्थान्
गोप्ता स मे भवतु गोपपुराधिराजः ॥ १

देहल्यधीश्वर तवेदृशमीश्वरत्वं
तुष्टूषतां दिशति गद्गदिकानुबन्धम्।
वाचालयस्यथ च मां क्वचन क्षपायां
क्षान्तेन दान्त कविमुख्य विमर्दनेन ॥ २

त्वच्चक्रवद् द्रुतमनेहसि घूर्णमाने
निम्नोन्नत क्रम निदर्शित नेमि वृत्ताः।
आराध्य गोपनगरे कृपयोदितं त्वां
स्वाराज्यमग्र्यमलभन्त सुरासुरेन्द्राः ॥ ३

आकल्प पुष्प सुभगोन्नत बाहु शाखः
पादे सदा परिपचेलिमसत्फलस्त्वम्।
पण्णा तट स्पृशि मृकण्डु तपोवनेऽस्मिन्
छाया निलीन भुवनोऽसि तमाल शाखी ॥ ४

चक्रस्य दैत्य दनुजादिषु वाम भावं
शङ्खस्य चाश्रित जनेष्वपि दक्षिणत्वम्।
व्यक्तं प्रदर्शयति गोपपुराधिराज
व्यत्यस्य नूनमनयोः करसंप्रयोगम् ॥ ५

दीपेन केनचिदशीत रुचा निशीथे
स्नेहोपपन्न परिशुद्ध गुणार्पितेन ।
दह्रावकाश निबिडं ददृशुर्भवन्तं
स्वाध्याय योग नयनाः शुचयः कवीन्द्राः ॥ ६

कासारपूर्वकविमुख्य विमर्दजन्मा
पण्णा तटेक्षु सुभगस्य रसो बहुस्ते ।
त्वत्पाद पद्म मधुनि त्वदनन्य भोग्ये
नूनं समाश्रयति नूतनशर्करात्वम् ॥ ७

वैरोचनेः सदसि वामनभूमिकावान्
विक्रान्ति ताण्डवरसेन विजृम्भमाणः ।
चक्रे भवान् मकरकुण्डल कर्णपाशः
श्यामैक मेघ भरितामिव सप्तलोकीम् ॥ ८

चित्रं न तत् त्रिषु मितानि पदेषु धत्ते
विश्वान्यमूनि भुवनानि विशङ्कटेषु ।
भक्तैः समं क्वचिदसौ भवनैकदेशे
माति स्म मूर्तिरमिता तदिहाद्भुतं नः ॥ ९

भक्तप्रिय त्वयि तथा परिवर्धमाने
मुक्तावितान विततिस्तव पूर्वमासीत् ।
हारावलिः परमथो रशनाकलापः
तारागणस्तदनु मौक्तिक नूपुर श्रीः ॥ १०

भिक्षोचितं प्रकटयन् प्रथमाश्रमं त्वं
कृष्णाजिनं यवनिकां कृतवान् प्रियायाः ।
व्यक्ताकृतेस्तव समीक्ष्य भुजान्तरे तां
त्वामेव गोपनगरीश जना विदुस्त्वाम् ॥ ११

सत्कुर्वतां तव पदं चतुराननत्वं
पादोदकं च शिरसा वहतां शिवत्वम्।
एकत्र विक्रमणकर्मणि तद् द्वयं ते
देहल्यधीश युगपत् प्रथितं पृथिव्याम्॥ १२

भक्तोपरोधसह पादसरोजतस्ते
मन्दाकिनी विगलिता मकरन्दधारा।
सद्यस्त्रिवर्गं अपवर्गमपि क्षरन्ती
पुण्या बभूव पुरशासन मौलिमाला॥ १३

विक्रान्ति केतु पटिका पदवाहिनी ते
न्यञ्चन्त्युपैति नतजीवित शिंशुमारम्।
औत्तानपादिममृतांशुमशीतभानुं
हेमाचलं पशुपतिं हिमवन्तमुर्वीम्॥ १४

वेधः कमण्डलुजलैर्विहितार्चनं ते
पादाम्बुजं प्रतिदिनं प्रतिपद्यमाना।
स्तोत्रप्रिय त्रिपथगादि सरिद्वराणां
पण्णा बभूव भुवने बहुमान पात्रम्॥ १५

स्वच्छन्द विक्रम समुन्नमितादमुष्मात्
स्रोतस्त्रयं यदभवत् तव पादपद्मात्।
वेताल भूत सरसामपदिश्य वाचं
प्रायेण तत् प्रसवभूमिमवाप भूयः॥ १६

क्रीडापरेण भवता विहितोपरोधान्
आराधकाननुपरोधमुदञ्चयिष्यन्।
ताम्रेण पाद नखरेण तदाऽण्डमध्ये
घण्टापथं कमपि नूनमवर्तयस्त्वम्॥ १७

कामाविलेऽपि करुणार्णवबिन्दुरेकः
क्षिप्तः स्वकेलि तरसा तव देहलीश।
तत्सन्ततेरुभयथा विततिं भजन्त्याः
संसारदावदहनं शमयत्यशेषम्॥ १८

नीडोदरान्निपतितस्य शुकार्भकस्य
त्राणेन नाथ विहरन्निव सार्वभौमः।
आदाय गोप नगराधिपते स्वयं मां
क्रीडा दया व्यतिकरेण कृतार्थय त्वम्॥ १९

लीलाशकुन्तमिव मां स्वपदोपलब्ध्यै
स्वैरं क्षिपन् दुरितपञ्जरतो गुणस्थम्।
तत्तादृशं कमपि गोप पुरी विहारिन्
सन्तोषमुल्ललय सागर संभवायाः॥ २०

वातूल कल्प वृजिन प्रभवैर्मदीयां
वैयाकुलीं विषय सिन्धु तरङ्ग भङ्गैः।
दासोपमर्दसह दुर्निरसां त्वदन्यैः
अन्वीक्ष्य गाढमनुकम्पितुमर्हसि त्वम्॥ २१

एनस्विनीमिति सदा मयि जायमानां
देहल्यधीश दृषदोऽपि विलापयन्तीम्।
नाथे समग्र शकने त्वयि जागरूके
किं ते सहेत करुणा करुणामवस्थाम्॥ २२

आत्मोन्नतिं परनिकर्षमपीह वाञ्छन्
निम्नेऽपि मोहजलधौ निपतामि भूयः।
तन्मामुदञ्चय तवोन्नत पाद निघ्नं
देहल्यधीश गुणितेन दयागुणेन॥ २३

अक्षीण कल्मष रसोऽपि तवानृशंस्यात्
लक्ष्मीसमक्षपि विज्ञपयाम्यभीतः ।
भक्तोपमर्दरसिक स्वयमल्पबुद्धेः
यन्मन्यसे मम हितं तदुपाददीथाः ॥ २४

मन्ये दयार्द्र हृदयेन महाधनं मे
दत्तं त्वयेदमनपायमकिञ्चनत्वम् ।
येन स्तनन्धयमिव स्वहितानभिज्ञं
न्यासीकरोषि निजपादसरोरुहे माम् ॥ २५

दुर्वार तीव्र दुरित प्रति वावदूकैः
औदार्यवद्भिरनघस्मित दर्शनीयैः ।
देहल्यधीश्वर दयाभरितैरपाङ्गैः
वाचं विनापि वदसीव मयि प्रसादम् ॥ २६

अयमनवम सूक्तैरादिभक्तैर्यथावत्
विशदित निज तत्त्वो विश्वमव्यादभव्यात् ।
रथ चरण निरूढव्यञ्जनानां जनानां
दुरित मथन लीलादोहली देहलीशः ॥ २७

इयमवितथ वर्णा वर्णनीय स्वभावात्
विदित निगम सीम्ना वेङ्कटेशेन गीता ।
भवमरुभुवि तृष्णालोभपर्याकुलानां
दिशतु फलमभीष्टं देहलीशस्तुतिर्नः ॥ २८

—*—

श्री काञ्चीपूर्ण विरचितं

## देवराजाष्टकम्

(काञ्च्यां वरदराज क्षेत्रे)

नमस्ते हस्तिशैलेश श्रीमन्नम्बुजलोचन।
शरणं त्वां प्रपन्नोऽस्मि प्रणतार्तिहराच्युत॥ १

समस्तप्राणिसन्त्राण प्रवीण करुणोल्बणाः।
विलसन्तु कटाक्षास्ते मय्यस्मिन् जगतां पते॥ २

निन्दिताचारकरणं निवृत्तं कृत्यकर्मणः।
पापीयांसममर्यादं पाहि मां वरद प्रभो॥ ३

संसारमरुकान्तारे दुर्व्याधिव्याघ्रभीषिणे।
विषयक्षुद्रगुल्माढ्ये तृषापादपशालिनि॥ ४

पुत्रदारगृहक्षेत्र मृगतृष्णाम्बुपुष्कले।
कृत्याकृत्यविवेकान्धं परिभ्रान्त मितस्ततः॥ ५

अजस्रं जाततृष्णार्तमवसन्नाङ्गमक्षमम्।
क्षीणशक्तिबलारोग्यं केवलं क्लेशसंश्रयम्॥ ६

सन्तप्तं विविधैर्दुःखैर्दुर्वचैरेवमादिभिः।
देवराज ! दयासिन्धो ! देवदेव ! जगत्पते॥ ७

त्वदीक्षणसुधासिन्धु वीचिविक्षेप शीकरैः।
कारुण्यमारुतानीतैश्शीतलै रभिषिञ्च माम्॥ ८

——*——

(काञ्च्यां वरदराज क्षेत्रे)

अप्पयदीक्षितेन्द्रविरचितः

## श्रीवरदराजस्तवः

उद्धाट्य योगकलया हृदयाब्जकोशं
धन्यैश्चिरादपि यथारुचि गृह्यमाणः ।
यः प्रस्फुरत्यविरतं परिपूर्णरूपः
श्रेयः स मे दिशतु शाश्वतिकं मुकुन्दः ॥ १

जातो न वेत्ति भगवन्न जनिष्यमाणः
पारं परं परमपूरुष ते महिम्नः ।
तस्य स्तुतौ तव तरङ्गितसाहसिक्यः
किं मादृशो बुधजनस्य भवेन्न हास्यः ॥ २

मन्ये निजस्खलनदोषमवर्जनीय-
मन्यस्य मूर्ध्नि विनिवेश्य बहिर्बुभूषुः ।
आविश्य देव रसनानि महाकवीनां
देवी गिरामपि तव स्तवमातनोति ॥ ३

नेतस्तथापि तव निर्ममलोकसेव्यां
मूर्तिं मदावलमहीधररत्नभूषाम् ।
वैकुण्ठ वर्णयितुमस्मि धृताभिलाषः
त्वन्नामरूपगुणचिन्तनलाभलोभात् ॥ ४

मन्ये सृजन्त्वभिनुतिं कविपुंगवास्ते
तेभ्यो रमारमण मादृश एव धन्यः ।
त्वद्वर्णने धृतरसः कवितातिमान्द्यात्
यस्तत्तदङ्गचिर चिन्तनभाग्यमेति ॥ ५

काञ्ची महार्घमणिकाञ्चन धामचित्रा
विश्वम्भरां विबुधनाथ विभूषयन्ती।
भाता गजाद्रिशिखरे तव भक्तचिन्ता-
रत्नेन राजतितरां शुभविग्रहेण॥ ६

अस्यां भवन्तमभितः स्थितदुग्धसिन्धौ
मध्ये त्रयीमय महारविमण्डलस्य।
पश्यन्नधःकृतचतुर्मुखविष्टपायां
धामत्रयेऽपि कुतुकं विजहाति विद्वान्॥ ७

अस्याममेयगुणपुर्यपराजितायां
अश्वत्थवर्यजुषि दिव्यसरःसमीपे।
मध्ये हिरण्मयगृहं महिषीयुतं त्वां
दृष्ट्वा जनो न पुनरेति भवान्तरार्तिम्॥ ८

संप्राप्य दुग्धतटिनीविरजां विशुद्धाः
सन्तो भवद्भजनदां पदमागतास्ते।
त्वत्पादतोयतुलसीकुसुमेषु लग्नं
गन्धं रसं च गरुडध्वज ते लभन्ते॥ ९

सौवर्णसालवलयान् समनुप्रविश्य
कोशानिव त्रिदशनायक कोऽपि धन्यः।
आनन्दवल्ल्युदितदिव्यफलानुरूपं
रूपं त्वदीयमवलोकयतेऽभिरूपम्॥ १०

मातङ्ग शैलमणिशृङ्ग महाविमान-
सोपानपर्वचतुरुत्तरविंशतिर्वा।
तामेव तत्त्ववितितिं पुरुषो विलङ्घ्य
पश्यन्भवन्तमुपयाति भवाब्धिपारम्॥ ११

नापारि लब्धुमरविन्दभुवाऽपि साक्षाद्
यं पूर्वमीश्वर विना हयमेधपुण्यम् ।
अन्यैरनाप्य स कथं तव पुण्यकोटिं
प्राप्यस्त्वदाकृतिविलोकनजः प्रमोदः ॥ १२

प्रत्यङ्मुखं तव गजाचलराज रूपं
प्रत्यङ्मुखाश्चिरतरं नयनैर्निपीय ।
अस्थानमाप्तवचसामवितर्कणीय-
माश्चर्यमेतदिति निश्चयमावहन्ते ॥ १३

यस्मिञ्जहात्यतिशयोक्तिरलङ्कृतित्वं
न्यूनोपमात्वमुपमा समुपैति सर्वा ।
सूक्ष्मस्वभावकलनापि च न प्रतर्क्या
तद्वर्णयामि भवतः कथमाभिरूप्यम् ॥ १४

लक्ष्म्याः प्रियोऽसि रतिकेलिकृतः पितासि
विश्वैकमोहनरसस्य च देवताऽसि ।
आवासभूमिरसि सर्वगुणोत्तमानां
वैकुण्ठ वर्णयतु कस्तव रूपरेखाम् ॥ १५

सर्वोत्तरोऽसि सकलत्रिदशाश्रयोऽसि
ज्योतिश्छटाघटितचक्रपरिष्कृतोऽसि ।
शृङ्गारशेवधिरसि द्विपशैलमौले
कल्याणरूप इति कस्त्वयि चित्रवादः ॥ १६

अङ्गानि ते निखिललोकविलोचनानां
संभावनीयगुण संसरणानि सत्यम् ।
येष्वेकमाप्य न पुराऽधिगतं स्मरन्ति
वाञ्छन्ति नान्यदपि लब्धुमदो विहाय ॥ १७

एकत्र मन्मथमजीजनदिन्दिरायां
पूर्वं भवानिति बुधा किमपूर्वमाहुः।
अद्यापि तं न जनयस्यरविन्दनाभ
कासु प्रसन्नमधुरस्मितकामिनीषु ॥ १८

निक्षिप्य हृत्त्वयि पुनर्लभते न कोऽपि
निर्याति इत्यधिप न त्वयि चित्रमेतत्।
हत्वा हठान्मृगदृशां हृदयानि यस्त्व-
मेवं निलीय किल तिष्ठसि शैलशृङ्गे ॥ १९

मोहं जगत्त्रयभुवामपनेतुमेत-
दादाय रूपमखिलेश्वर देहभाजाम्।
निस्सीमकान्ति रसनीरधिनाऽमुनैव
मोहं विवर्धयसि मुग्धविलोचनानाम् ॥ २०

उच्छेदमेकविषयात्कथयन्ति बोधान्
मोहस्य ये खलु कथं न मृषावदास्ते।
लावण्यमीश तव यन्नयनैर्निपीय
तत्रैव मोहमधिकं दधते तरुण्यः ॥ २१

शुभ्रांशुवक्त्र शुभगोचरलाभतोषात्
संप्रस्थितो मृगदृशां नयनांबुजौघः।
त्वद्धासरित्यथ बिभर्ति मोहं
प्रायः फलन्ति विफलन्ति च दैवचिन्ताः ॥ २२

यत्प्राण संयमजुषां यमिनां मनांसि मूर्तिं विशन्ति तव माधव कुम्भकेन।
प्रत्यङ्ग मूर्च्छदतिवेलमहाप्रवाहलावण्यसिन्धुतरणाय तदित्यवैमि ॥ २३

लावण्य सागरभुवि प्रणयं विशेषाद्
दुग्धाम्बुराशिदुहितुस्तव तर्कयामि।
यत्तां बिभर्षि वपुषा निखिलेन लक्ष्मी-
मन्यां तु केवलमधोक्षज वक्षसैव ॥ २४

सारस्वतं वदनपद्मभुवं प्रवाहं
त्रैस्रोतसं च तव पादभुवं निरीक्ष्य।
सर्वप्रतीकनिकरात्प्रवहन्त्यजस्र-
मीर्ष्यावतीश यमुना किमु कायकान्तिः ॥ २५

आपूरितत्रिभुवनोदरमंशुजालं
मन्ये महेन्द्रमणिबृन्दमनोहरं ते।
त्वद्रागदीपितहृदां त्वरितं वधूनां
प्राप्ते सरित्सहचरं प्रलयेऽभिवृद्धम् ॥ २६

युक्त्याऽऽगमेन च भवान् शशिवर्ण एव
निष्कृष्टसत्वगुणमात्रविवर्तभूमिः।
धत्ते कृपाम्बुभरतस्त्विषमैन्द्रनीलीं
शुभ्रोऽपि साम्बुरसितः खलु दृश्यतेऽब्दः ॥ २७

सर्वातिशायिसहजद्युतिभूषितस्य
विश्वैकनायक विभूषणधारणं ते।
आबद्धसौहृदमपारसुखाम्बुराशेः
वीक्षे तवैव विषयादिकुतूहलेन ॥ २८

मध्ये स्फुरन्मकरतोरणमण्डलस्य
चामीकराभरणभूषितसर्वगात्रः।
आदित्यबिम्बगतमाप्रपदात्सुवर्णं
भासा भवाननुकरोति भवन्तमेव ॥ २९

सेवारसागतसुराद्यनुबिम्बदृश्यं
भूषामणिप्रकरदर्शितसर्ववर्णम् ।
त्वां विश्वरूपवपुषेव जनं समस्तं
पश्यामि नागगिरिनाथ कृतार्थयन्तम् ।। ३०

शृङ्गीसुवर्णरुचिपिञ्जरितैकभागा-
न्यङ्गेषु देव तव भूषणमौक्तिकानि ।
प्रत्यक्षयन्ति भवतः प्रतिरोमकूप-
विश्रान्तिसान्द्रजगदण्डसहस्रशोभम् ।। ३१

आबद्धपङ्क्तिमहितानि तव त्रिधामन्
दीघ्राणि हीरशकलानि विभूषणेषु ।
संमोहनानि सरसीरुहलोचनानां
मन्त्राक्षराणि कलये मकरध्वजस्य ।। ३२

आपादमौलि विधृतेषु विभान्ति देव
स्थूलेन्द्रनीलमणयो मणिभूषणेषु ।
रागादुपेत्य तव सुन्दर तत्तदङ्ग-
लग्नानि लोकसुदृशामिव लोचनानि ।। ३३

त्वां वीक्ष्य मुक्तिद ! जनास्तरणिं सखायं
भिन्द्युः किलेति तव भूषणपद्मरागाः ।
शङ्के चिरं जनदृशः स्वकरैः क्षिपन्ति
तन्मात्रतोऽपि तव मुक्तिदतामबुद्ध्वा ।। ३४

पादावुपेन्द्र सुकुमारतमाविमौ ते
भूषाभरादरुणिमानमिवोद्वमन्तौ ।
इत्थं किमस्ति सुकुमारमितीव बोद्धुं
लोकत्रयेऽपि च करैः स्पृशतः पदार्थान् ।। ३५

मूर्तिं प्रसाधयति ते चरणांशुपुञ्जः
तां जैमिनिः कथमधीश निराकरोतु।
सर्वत्र योगमुपपादयताऽरुणिम्नः
तेनारुणाधिकरणे हि मुनिः स भग्नः ॥ ३६

अन्तस्तमांसि यमिनामपसारयन्ती
हृत्पङ्कजान्यपि च नाथ विकासयन्ती।
भक्तप्रवेकभववारिनिधेस्तरण्योः
त्वत्पादयोर्जयति काऽपि मयूखमाला॥ ३७

मुष्णन्प्रभातसमयेषु मुरान्तकारिन्-
अंघ्रिद्वयश्रियमहस्करतस्करस्ते।
यत्प्राप्यते न करभङ्गममुष्य बाल-
मित्रत्वमेव मिषति ध्रुवमत्र हेतुः ॥ ३८

अङ्घ्रिद्वयस्य तव सन्ततमन्तरङ्ग-
मम्भोजवर्गमिह योजयति श्रिया यत्।
उत्कोचदानमिदमुष्णकरस्य बाल्यात्
तत्कान्तिरत्नचयचोरण तत्परस्य॥ ३९

भानुर्निशासु भवदङ्घ्रिमयूखशोभा-
लोभात्प्रताप्य किरणोत्करमाप्रभातम्।
तत्रोद्धृते हुतवहात्क्षणलुसरागे
तापं भजत्यनुदिनं स हि मन्दतातः ॥ ४०

तौल्यं वदन्तु कवयस्तरुपल्लवानां
मुग्धास्त्वदीयचरणेन मुकुन्द किं तैः।
तान्येव तत्तदधरोष्ठमिषात्तदानीं
कम्पं भजन्ति कथयन्ति किलात्मनैच्यम्॥ ४१

पद्मोपमात्पदयुगात्तव रत्नगर्भा
जातेति पद्मसदृशाकृतिमाहुरेनाम्।
कार्यं हि कारणगुणानतिवर्ति लोके
प्रायः पतङ्गपतिवाह विलोकयामः ॥ ४२

कल्याणशालिकमलाकरलालनीय-
मासेवकश्रुतिमनोहरनादि हंसम्।
आमोदमेदुरमरुन्नमितालिकान्तं
शङ्के तवेश्वर पदं शतपत्रमेव ॥ ४३

स्पर्शं ययोः समधिगम्य झटित्यहल्या
देवी च भूरभवदुज्झितसर्वपङ्का।
ताभ्यां घटेत समता भवतः पदाभ्यां
आजन्म पङ्कवसतेः कथमम्बुजस्य ॥ ४४

मातङ्गशैलमणिशेखर ते पदाभ्यां
मोहेन साम्यमनुचिन्त्य कृतापराधम्।
शङ्के सरोजमनयोरुभयोरुपेत्य
रेखाच्छलेन सततं विदधाति सेवाम् ॥ ४५

लेखाधिनाथवनपल्लवधैर्यचोरे
रेखामयं पदतले कमलं यदेतत्।
तत्रैव विश्रमजुषोऽच्युतरागलक्ष्म्याः
क्रीडानिशान्तकमलं तदिति प्रतीमः ॥ ४६

यस्याः स्वमूर्त्यनुगुणाकृतिशक्तियुक्तः
पादाम्बुजद्वयमिषात्कमठाधिराजः।
मूले वसत्युचितमेव निगद्यते सा
मूर्तिर्महापुरुष तेऽखिललोकरूपा ॥ ४७

किं द्वादशात्मनि रवौ भगवन्धृतेर्ष्यः
चन्द्रस्ततोऽप्यधिकतामधिगन्तुमेव ।
एते तवेह दश भान्ति पदाङ्गुलीषु
स्वात्मान इत्यजनि चित्तदृगर्णवेभ्यः ॥ ४८

भासा पदं तव रमाधिप भूषयन्ति
संसेवकांश्च विबुधान् परितोषयन्ति ।
नाथ क्षिपन्ति च तमांसि नखेन्दवस्ते
संशोषयन्त्यपि तु भक्तभवांम्बुराशिम् ॥ ४९

गङ्गाच्छलेन तव निःसृतमूर्ध्वगाण्ड-
संघट्टनात्पदनखाग्रमयूखलेशम् ।
आलोक्य नूनममराः पतितं पयोधा-
वामथ्य तं जगृहुरीश तदिन्दुरूपम् ॥ ५०

पादानमत्सुरशिरोमणिपद्मरागान्
सद्यः स्फुरत्सहजरुक्प्रकरान्कराग्रैः ।
मुक्तामयान्विदधतां प्रकटं मुरारे
जैवातृकत्वमुचितं ननु ते नखानाम् ॥ ५१

यत्ते पदाम्बुरुहमम्बुरुहासनेड्यं
धन्याः प्रपद्य सकृदीश भवन्ति मुक्ताः ।
नित्यं तदेव भजतामतिमुक्त लक्ष्मी-
युक्तैव दिव्यमणिनूपुरमौक्तिकानाम् ॥ ५२

नाथ त्वदङ्घ्रिनखधावनतोयलग्नाः
तत्कान्तिलेशकणिकाजलधिं प्रविष्टाः ।
ता एव तस्य मथनेन घनीभवन्त्यो
नूनं समुद्रनवनीतपदं प्रपन्नाः ॥ ५३

सव्यापसव्यशरमोक्षकृतीक्षुधन्वा
जङ्घे तव स्वशरधी इति सन्दिहानः।
आलोकतेऽङ्घ्रिकटकोद्गतरुक्छलेन
न्यस्याभितो निजशराननुरूपभावम्॥ ५४

जानुद्वयं तव जगत्त्रयनाथ मन्ये
मारस्य केलिमणिदर्पणतामुपेतम्।
आलोकयन् यदवदातमनोज्ञवृत्तं
रूपं निजं कलयते विपरीतमेषः॥ ५५

ऊरोः किमन्यदयतामुपमानभावं
वामस्य दक्षिणममुष्य च तं विहाय।
रम्भादयः सदृश इत्युचितं किमेतद्
यस्योर्वशी सुभग साऽपि विभूतिलेशः॥ ५६

नाथ त्वया परिहितं वरवर्णिनीनां
रागस्य यद्वसनमास्पदतां बिभर्ति।
सौन्दर्यसारनिलयेन कटीतटेन
तस्यैव किन्नु महिमा परिशीलनस्य॥ ५७

संप्राप्य सारसनमध्यतलोदयाद्रिं
मध्याम्बरं मसृणयन्नरुणैर्मयूखैः।
संवीक्ष्यते सुकृतिभिर्मणिरेष पूषा
संसाररात्र्युपरतिं गतवद्भिरेव॥ ५८

नाभेरभूत्तव चतुर्भुज नान्तरिक्षं
यन्नाभिरेव यदुनेतरियं ततोऽभूत्।
नाभ्या इति श्रुतिविपर्ययगे विभक्ती
तां जैमिनेरनुससार पशोश्च सूत्रम्॥ ५९

आरोपमध्यवसितिं च विना तवास्यां
नाभौ सरःपदमुपैति कथं नु वृत्तिम्।
साक्षादियं सरसिजस्य समुद्रशायिन्
उत्पत्तिभूरिति हि नायक नायमूहः ॥ ६०

कल्पान्तरेषु विततिं कमलासनानां
भूयोऽपि कर्तुमिव भूरि रजो दधानम्।
नाभिह्रदे समुदितं नलिनं तवैतद्
भूयात्सदैव मम भूतिकरं मुरारे ॥ ६१

उल्लासयत्युदरबन्धनिबद्धदिव्य-
शोणाश्मरश्मिकलिकावलिरच्युतैषा।
आगाम्यनेकशतकल्पविधातृगर्भ-
नाभ्युद्गताम्बुरुहकुट्मलपङ्क्तिशोभाम्॥ ६२

ऊर्ध्वं विरिञ्चिभवनात्तव नाभिपद्माद्
रोमावलीपदजुषस्तमसः परस्तात्।
मुक्तौघमण्डितमुरःस्थलमुन्मयूखं
पश्यामि देव परमं पदमेव साक्षात्॥ ६३

सालैरुदंशुचयरत्नललन्तिकाढ्यैः
स्फीतोल्लसत्कुसुमया वनमालया च।
विभ्राजते विपुलमेनदुरस्त्वदीय-
मन्तःपुरं जलधिराजकुमारिकायाः ॥ ६४

प्रालम्बिकामुपगतास्तव पद्मरागाः
प्रत्यग्रघर्मकरमण्डलनिर्विशेषाः।
पर्यङ्कके वरद वक्षसि भान्ति लक्ष्म्याः
क्रीडोपबर्हतिलका इव पार्श्वभाजः ॥ ६५

अस्तु त्रयीमयतनुस्तव लम्बनाली-
रत्नैस्तिरस्क्रियत एव तथाऽपि भानुः ।
सोढः सतां बत निशान्तमुपागतानां
एवं तिरस्कृदीश्वर कः समर्थः ।। ६६

नष्टेऽपि भस्मनि वने गिरिशेन दग्धं
स्त्रीणां हृदीश मदनं प्रतिबोधयन्तः ।
भस्मोच्चये कृतकचप्रतिबोधनं तं
शुक्रं जयन्तु न कथं तव हारताराः ।। ६७

उत्प्रेक्षयत्यधिभुजान्तरमुल्लसन्ती
पार्श्वद्वये परमपूरुष हारमाला ।
तत्रत्यकान्तिसरितस्तरलैः प्रणुन्नां
ऊर्म्युत्करैरुभयतः सितफेन पङ्क्तिम् ।। ६८

त्वां सर्वभूतमयमाश्रितसर्ववर्णं
यद्वैजयन्त्युपगताच्युत सर्वगन्धम् ।
तेनैव किं त्रिभुवनैकमहावदान्य-
सारूप्यमावहति ते सकलाभिनन्द्यम् ।। ६९

ताराभिरामपरिणाहलसत्सिताभ्रं
तापिञ्छमेचकमुरः शरदन्तरिक्षम् ।
प्राप्यैव देव तव कौस्तुभपूर्णचन्द्रः
पूर्णां बिभर्ति पुरुषोत्तम कान्तिरेखाम् ।। ७०

नाभी सरोजकिरणैर्मणिराजभाभिः
आत्मप्रभाभिरपि संवलितं विभाति ।
श्रीवत्सविग्रहजुषः प्रकृतेस्त्वदीयं
वक्षः परीतमिव सत्त्व रजस्तमोभिः ।। ७१

वक्षःस्थलं वरद नन्दनमाश्रितस्ते
येषां विभाति हरिचन्दन एव मध्ये ।
एते चतुर्भुज भुजास्तव तस्य शाखाः
शङ्के कराब्जदलकोमलिताग्रभागाः ॥ ७२

जात्यैव यद्वरद पल्लवराग एष
यल्लाल्यते च भवता कटके निवेश्य ।
मन्ये मणिस्तदुपगम्य मदान्धभावं
साक्षादयं सवितुरेव करोत्यवज्ञाम् ॥ ७३

ऐन्द्रोपलप्रभमधो भुजदण्डनालं
एकत्र चक्रमपरत्र च शङ्खहंसम् ।
दृष्ट्वा कथं न कलयेमहि कान्तिसिन्धोः
उत्फुल्लपद्मयुगमूर्ध्वकरद्वयं ते ॥ ७४

चन्द्रार्कचारुतरशङ्खरथाङ्गशोभा-
संभाव्यरात्रिदिवसात्मकपार्श्वयुग्मम् ।
नक्षत्रदृश्यनवमौक्तिकहारिरूपं
मन्ये महापुरुषरूपधरं भवन्तम् ॥ ७५

संवर्तजृम्भितविकर्तनदुर्निरीक्षं
पश्यामि दक्षिणकरे तव चक्रराजम् ।
दैत्यौघसिन्धुपतिमन्थमहाचलस्य
बाहोः प्रतापघनमिद्धमिवोद्गतं ते ॥ ७६

आभाति देव विधृतस्तव सव्यपाणौ
अन्तर्बहिश्च शुचिरच्युत पाञ्चजन्यः ।
अन्तेवसन्निव गलस्य गुरोर्गभीर-
ध्यानक्रियोपनिषदध्ययनार्थमेषः ॥ ७७

कौमोदकी स्फुरति ते करपल्लवाग्रे
वैरिश्ववाक्यविकृतेव सरस्वती सा।
त्रिस्रोतसस्तव पदाब्जभुवो विशेषं
आकांक्ष्य पाणिकमलात्तव निस्सरन्ती ॥ ७८

हस्ते विराजति तवाभयमुद्रितेऽस्मिन्
अव्याजकोमलरुचिप्रकराभिरामे।
वज्रोर्मिकांशुनिकरः कमलाधिराज्य-
पट्टाभिषेकसलिलौघ इवावदातः ॥ ७९

नामैव ते वरद वाञ्छितदातृभावं
व्याख्यानतो न वहसे वरदानमुद्राम्।
न ह्यागमोदितरसः श्रुतिसिद्धमर्थं
लिङ्गेन बोध्यमुररीकुरुते विपश्चित् ॥ ८०

आभाति मौक्तिकगुणग्रथितैरनल्पैः
नीलोत्पलैर्वलयितस्तव नाथ कण्ठः।
संवर्तमेघवसतिं ध्वननैस्तदन्तैः
निश्चित्य तन्निकटगैरिव मेघडिम्भैः ॥ ८१

यद्ब्रह्मणश्च जनिभूः प्रियमिन्दिरायाः
सस्पर्धमोषधिपतौ च सकर्णिकं च।
एतैर्गुणैर्गुणनिधे कतमस्त्वदीयं
वक्त्रं मनोज्ञमवगच्छतु नारविन्दम् ॥ ८२

वक्त्रेण ते यदभिभूतमभूत्सरोजं
तन्नाभिभूतमिति शब्दमवाच्यनूनम्।
शब्दच्छलादपनिनीषु जनापवादं
नाभेरभूत्तव रमाधिप विश्रुतायः ॥ ८३

उन्मीलयन्कुमुदमुज्ज्वलयन् गिरीशं
उन्मूलयन्विषमवाहभवाभितापम्।
उद्दीपयन्वरवधूजनतानुरागं
उद्द्योतते वरद ते वदनामृतांशुः ॥ ८४

पक्षद्वयक्रशिमपोषविभाव्यमान-
चान्द्रायणव्रतनिषेवण एष नित्यम्।
कुर्वन्प्रदक्षिणमुपेन्द्र सुरालयं ते
लिप्सुर्मुखाब्जरुचिमेव तपस्यतीन्दुः ॥ ८५

नाथ त्वदीयमकलङ्कमिमं मुखेन्दुं
आपीय तृप्यति सदा वसुधा यतस्ते।
तेनैव किं नवसुधारसगोचरोऽभूत्
इन्दुः कलङ्कमलिनीकृतमध्यभागः ॥ ८६

आश्रित्य नूनममृतद्युतयः पदं ते
देहक्षये विधृतदिव्यपदाभिमुख्याः।
लावण्यपुण्यनिचयं सुहृदि त्वदास्ये
विन्यस्य यान्ति मिहिरं प्रतिमासभिन्नाः ॥ ८७

त्वद्वक्त्रसाम्यमयमम्बुजकोशमुद्रा-
भङ्गात्ततत्सुषममित्रकरोपक्लृप्त्या।
लब्ध्वाऽपि पर्वणि विधुः क्रमहीयमानः
शंसत्यनीत्युपचितां श्रियमाशुनाशाम्॥ ८८

दृग्भ्यां मुकुन्द मृगलोचनकोमलाभ्यां
जाताधिकद्युति विलोक्य तवाननाब्जम्।
मन्ये स्वमण्डलमितोऽप्यधिकं विधित्सुः
तस्मिन्बिभर्ति मृगमेव जडः सितांशुः ॥ ८९

मालिन्यमब्जशशिनोर्मधुलिट्कलङ्कौ
धत्तो मुखे तु तव दृक्तिलकात्मनाऽऽभाम्।
दोषावतः क्वचन मेलनतो गुणत्वं
वक्तुर्यथेश वचसि भ्रमविप्रलम्भौ ॥ ९०

आमोदकान्तिभृदहर्निशमेकरूपं
आसेवितं द्विजगणैर्दिविषद्गणैश्च।
अङ्काधिरूढसहजश्रि मुखं त्वदीयं
शङ्कामहे वरद संहतमब्जयुग्मम्॥ ९१

बिम्बस्तवायमधरः प्रतिबिम्बनेन
युक्तं सदा युवतिमानसदर्पणेषु।
बिम्बाधरः कविभिरीश्वर वर्ण्यसे त्वं
एतावतैव न तु तुच्छफलोपमानात्॥ ९२

विद्यामयेषु तव निःश्वसितेष्वपूर्वं
विद्याविशेषमिव शिक्षितुमन्तरात्मन्।
वाण्याः सदा तव मुखाम्बुरुहे वसन्त्याः
कायप्रभेव लसति स्मितचन्द्रिका ते ॥ ९३

तापत्रयौषधवरस्य तव स्मितस्य
निःश्वासमन्दमरुता निबुसीकृतस्य।
एते कडङ्गरचया इव विप्रकीर्णा
जैवातृकस्य किरणा जगति भ्रमन्ति ॥ ९४

सिद्धौषधं जयति तेऽधररत्नपात्रे
तापत्रयी झटिति मुञ्चति येन सिक्तम्।
मन्ये तुषारकिरणं गुणलेशयोगाद्
अस्यैव वारिजविलोचन कल्कपुञ्जम्॥ ९५

आतन्वतामवयवेषु गतागतानि
युक्तात्मनां वरद यौवतचक्षुषां च।
विश्रान्तिभूर्विधुकरप्रकरावदाता
मन्दस्मितच्छविरियं तव मां पुनातु॥ ९६

निःश्वासमन्दमलयानिलकन्दलेन
निर्हारिणा बहुतरेण च सौरभेण।
नासापुटौ नलिनलोचन ते मनोज्ञौ
मन्ये सदैव मधुमाधवयोर्निवासौ॥ ९७

सञ्चारशालि तव निःश्वसिते समस्त-
वेदेतिहासवपुषि द्विपशैलनाथ।
नाभीसरोरुहनवारुणमण्डले च
मन्ये मधुव्रतकुलं मधुविद्ययोक्तम्॥ ९८

देहाद्वदन्ति जननं मुनयस्तिलानां
देवेन्द्रवन्द्यचरणाम्बुज तावकीनात्।
नारायणैतदुचितं प्रकटीकरोति
नासाभिधानमिह दिव्यतिलप्रसूनम्॥ ९९

नेत्रे तव क्व भगवन् क्व च पुण्डरीकं
ब्रूते तयोस्तदुपमानमथापि वेदः।
सर्वात्मनस्तव समाधिकवस्त्वलाभाद्
आकाशवत्स खलु सर्वगतत्वमाह॥ १००

साम्यभ्रमादविनयेन समुन्नतस्य
सव्यं तवाक्षि हरति श्रियमम्बुजस्य।
तस्यापि तां समधिकां तनुते यदन्यद्
दाक्षिण्यमेव दनुजाहित तत्र मूलम्॥ १०१

पद्मानुरागजुषि लोहितशुक्लकृष्णां
आसेदुषि प्रकृतिमादृतमीनरूपे।
श्रुत्यन्तभासिनि मदावलशैलनाथ
त्वल्लोचने त्वयि च भाति न मे विशेषः॥ १०२

मुक्तः प्रजापतिरयं मम दर्शनादि-
त्यन्यं विधातुमनसस्तव भालजाता।
घर्माम्बुबिन्दुततिरेव किरीटमूल-
प्रत्युप्तमौक्तिकततिच्छलतो विभाति॥ १०३

राजन्त्यनर्घमणिसङ्घमये किरीटे
राजीवलोचन न नीलमणिप्रवेकाः।
आघ्राय गन्धमलिनस्तव कुन्तलानां
अन्तः प्रवेष्टुमनसः परितो निलीनाः॥ १०४

आपादमाचिकुरभारमशेषभङ्गं
आनन्दबृन्दलसितं सुदृशामसीमम्।
अन्तर्मम स्फुरतु सन्ततमन्तरात्मन्
अम्भोजलोचन तव श्रितहस्तिशैलम्॥ १०५

—*—

## वरदराजस्तोत्रम्

(काञ्च्याम्)

श्रीमद्वरदराजेन्द्रः श्रीवत्साङ्कः शुभप्रदः।
तुण्डीरमण्डलोल्लासी तापत्रयनिवारकः॥ १

सत्यव्रतक्षेत्रवासी सत्यवज्जनपोषकः।
सर्गस्थित्युपसंहारकारी सुगुणवारिधिः॥ २

हरिर्हस्तिगिरीशानो हृतप्रणतदुष्कृतः ।
तत्वरूपत्वष्टृकृतकाञ्चीपुरवराश्रितः ॥ ३

ब्रह्मारब्धाश्वमेधाख्यमहामखसुपूजितः ।
वेदवेद्यो वेगवतीवेगभीतात्मभूस्तुतः ॥ ४

विश्वसेतुर्वेगवतीसेतुर्विश्वार्तिकोऽनघः ।
यथोक्तकारिनामाढ्यो यज्ञभृद्यज्ञरक्षकः ॥ ५

ब्रह्मकुण्डोत्पन्नदिव्यपुण्यकोटिविमानगः ।
वाणीपत्यर्पितहयवपासुरभिलाधरः ॥ ६

वरदाभयहस्ताब्जो वनमालाविराजितः ।
शङ्खचक्रलसत्पाणिश्शरणागतरक्षकः ॥ ७

इमं स्तवं तु पापघ्नं पुरुषार्थप्रदायकम् ।
पठतां शृण्वतां भक्त्या सर्वसिद्धिर्भवेद्ध्रुवम् ॥ ८

(श्रीनारदपुराणे)

—*—

वेदान्तदेशिककृत

## वरदराजपञ्चाशत्

(काञ्च्याम्)

द्विरदशिखरिसीम्ना सद्भवान् पद्मयोनेः
तुरगसवनवेद्यां श्यामलो हव्यवाहः ।
कलश जलधिकन्या वल्लरी कल्पशाखी
कलयतु कुशलं नः कोऽपि कारुण्य राशिः ॥ १

यस्यानुभावमधिगन्तुमशक्नुवन्तो
मुह्यन्त्यभङ्गुरधियो मुनिसार्वभौमाः ।
तस्यैव ते स्तुतिषु साहसमश्नुवानः
क्षन्तव्य एष भवता करिशैलनाथ ॥ २

जानन्ननादिविहितान् अपराध वर्गान्
स्वामिन् भयात् किमपि वक्तुमहं न शक्तः ।
अव्याजवत्सल तथापि निरङ्कुशं मां
वात्सल्यमेव भवतो मुखरीकरोति ॥ ३

किं व्याहरामि वरद स्तुतये कथं वा
खद्योतवत् प्रलघु सङ्कुचित प्रकाशः ।
तन्मे समर्पय मतिं च सरस्वतीं च
त्वामञ्जसा स्तुतिपदैर्यदहं धिनोमि ॥ ४

मच्छक्ति मात्र गणने किमिहास्ति शक्यं
शक्येन वा तव करीश किमस्ति साध्यम् ।
यद्यस्ति साधय मया तदपि त्वया वा
किं वा भवेद् भवति किञ्चिदनीहमाने ॥ ५

स्तोत्रं मया विरचितं त्वदधीन वाचा
त्वत्प्रीतये वरद यत् तदिदं न चित्रम् ।
आवर्जयन्ति हृदयं खलु शिक्षकाणां
मञ्जूनि पञ्जर शकुन्त विजल्पितानि ॥ ६

यं चक्षुषामविषयं हयमेधयज्वा
द्राघीयसा सुचरितेन ददर्श वेधाः ।
तं त्वां करीश करुणापरिणामतस्ते
भूतानि हन्त निखिलानि निशामयन्ति ॥ ७

तत्तत्पदैरुपहितेऽपि तुरङ्गमेधे
शक्रादयो वरद पूर्वमलब्धभागाः।
अध्यक्षिते मखपतौ त्वयि चक्षुषैव
हैरण्यगर्भ हविषां रसमन्वभूवन्॥ ८

सर्गस्थितिप्रलय विभ्रम नाटिकायां
शैलूषवद् विविध वेष परिग्रहं त्वाम्।
संभावयन्ति हृदयेन करीश धन्याः
संसार वारिनिधि सन्तरणैक पोतम्॥ ९

प्राप्तोदयेषु वरद त्वदनुप्रवेशात्
पद्मासनादिषु शिवादिषु कञ्चुकेषु।
तन्मात्र दर्शन विलोभित शेमुषीकाः
तादात्म्य मूढ मतयो निपतन्त्यधीराः॥ १०

मध्ये विरिञ्चि शिवयोर्विहितावतारः
ख्यातोऽपि तत्समतया तदिदं न चित्रम्।
मायावशेन मकरादि शरीरिणं त्वां
तानेव पश्यति करीश यदेष लोकः॥ ११

ब्रह्मेणि शङ्कर इतीन्द्र इति स्वराडिति
आत्मेति सर्वमिति सर्वचराचरात्मन्।
हस्तीश सर्ववचसामवसानसीमां
त्वां सर्वकारणमुशन्त्यनपाय वाचः॥ १२

आशाधिपेषु गिरिशेषु चतुर्मुखेष्व(पि)
अव्याहता विधि निषेधमयी तवाज्ञा।
हस्तीश नित्यमनुपालनलङ्घनाभ्यां
पुंसां शुभाशुभमयानि फलानि सूते॥ १३

त्रातापदि स्थितिपदं भरणं प्ररोहः
छाया करीश सरसानि फलानि च त्वम्।
शाखागतत्रिदशबृन्द शकुन्तकानां
किं नाम नासि महतां निगमद्रुमाणाम्।। १४

सामान्यबुद्धि जनकाश्च सदादि शब्दाः
तत्त्वान्तर भ्रमकृतश्च शिवादि वाचः।
नारायणे त्वयि करीश वहन्त्यनन्यम्
अन्वर्थ वृत्ति परिकल्पितमैककण्ठ्यम्।। १५

सञ्चिन्तयन्त्यखिल हेय विपक्ष भूतं
शान्तोदितं शमवता हृदयेन धन्याः।
नित्यं परं वरद सर्वगतं सुसूक्ष्मं
निष्पन्द नन्दथुमयं भवतः स्वरूपम्।। १६

विश्वातिशायि सुखरूप यदात्मकस्त्वं
व्यक्तिं करीश कथयन्ति तदात्मिकां ते।
येनाधिरोहति मतिस्त्वदुपासकानां
सा किं त्वमेव तव वेति वितर्कडोलाम्।। १७

मोहान्धकार विनिवर्तन जागरूके
दोषा दिवापि निरवग्रहमेधमाने।
त्वत्तेजसि द्विरद शैलपते विमृष्टे
श्लाघ्येत सन्तमस पर्व सहस्र भानोः।। १८

रूढस्य चिन्मयतया हृदये करीश
स्तम्बानुकारि परिणाम विशेष भाजः।
स्थानेषु जाग्रति चतुर्ष्वपि सत्त्ववन्तः
शाखा विभाग चतुरे तव चातुरात्म्ये।। १९

नागाचलेश निखिलोपनिषन्मनीषा-
मञ्जूषिका मरकतं परिचिन्वतां त्वाम्।
तन्वी हृदि स्फुरति कापि शिखा मुनीनां
सौदामिनीव निभृता नव मेघ गर्भा॥ २०

औदन्वते महति सद्मनि भासमाने
श्लाघ्ये च दिव्यसदने तमसः परस्तात्।
अन्तःकलेवरमिदं सुषिरं सुसूक्ष्मं
जातं करीश कथमादरणास्पदं ते॥ २१

बालाकृतेर्वट पलाशमितस्य यस्य
ब्रह्माण्ड मण्डलमभूदुदरैकदेशे।
तस्यैव तद्वरद हन्त कथं प्रभूतं
वाराहमास्थितवतो वपुरद्भुतं ते॥ २२

भक्तस्य दानवशिशोः परिपालनाय
भद्रां नृसिंह कुहनामधिजग्मुषस्ते।
स्तम्भैक वर्जमधुनापि करीश नूनं
त्रैलोक्यमेतदखिलं नरसिंहगर्भम्॥ २३

क्रामन् जगत् कपट वामनतामुपेतः
त्रेधा करीश स भवान् निदधे पदानि।
अद्यापि जन्तव इमे विमलेन यस्य
पादोदकेन विधृतेन शिवा भवन्ति॥ २४

येनाचल प्रकृतिना रिपुसंक्षयार्थी
वारां निधिं वरद पूर्वमलङ्घयस्त्वम्।
तं वीक्ष्य सेतुमधुनापि शरीरवन्तः
सर्वे षडूर्मि बहुलं जलधिं तरन्ति॥ २५

इत्थं करीश दुरपह्नवदिव्य भव्य-
रूपान्वितस्य विबुधादि विभूतिसाम्यात्।
केचिद् विचित्र चरितान् भवतोऽवतारान्
सत्यान् दयापरवशस्य वदन्ति सन्तः ॥ २६

सौशील्य भावितधिया भवता कथञ्चित्
सञ्छादितानपि गुणान् वरद त्वदीयान्।
प्रत्यक्षयन्त्यविकलं तव सन्निकृष्टाः
पत्युस्त्विषामिव पयोद वृतान् मयूखान् ॥ २७

नित्यं करीश तिमिराविल दृष्टयोऽपि
सिद्धाञ्जनेन भवतैव विभूषिताक्षाः।
पश्यन्त्युपर्युपरि सञ्चरतामदृश्यं
मायानिगूढमनपाय महानिधिं त्वाम् ॥ २८

सद्यस्त्यजन्ति वरद त्वयि बद्ध भावाः
पैतामहादिषु पदेष्वपि भावबन्धम्।
कस्मै स्वदेत सुख सञ्चरणोत्सुकाय
कारागृहे कनकशृङ्खलयाऽपि बन्धः ॥ २९

हस्तीश दुःखविषदिग्ध फलानुबन्धि-
न्याब्रह्मकीटमपराहत संप्रयोगे।
दुष्कर्म सञ्चयवशाद्दुरतिक्रमे नः
प्रत्यस्त्रमञ्जलिरसौ तव निग्रहास्त्रे ॥ ३०

त्वद्भक्तिपोतमवलम्बितुमक्षमाणां
पारं परं वरद गन्तुमनीश्वराणाम्।
स्वैरं लिलङ्घयिषतां भव वारि राशिं
त्वामेव गन्तुमसि सेतुरभङ्गुरस्त्वम् ॥ ३१

अश्रान्त संसरण धर्म निपीडितस्य
भ्रान्तस्य मे वरद भोगमरीचिकासु।
जीवातुरस्तु निरवग्रहमेधमानो
देव त्वदीय करुणामृत दृष्टिपातः ॥ ३२

अन्तः प्रविश्य भगवन्नखिलस्य जन्तोः
आसेदुषस्तव करीश भृशं दवीयान्।
सत्यं भवेयमधुनापि स एव भूयः
स्वाभाविकी तव दया यदि नान्तरायः ॥ ३३

अज्ञातनिर्गममनागमवेदिनं माम्
अन्धं न किञ्चिदवलम्बनमश्नुवानम्।
एतावतीं गमयितुः पदवीं दयालोः
शेषाध्वलेश नयने क इवातिभारः ॥ ३४

भूयोऽपि हन्त वसतिर्यदि मे भवित्री
याम्यासु दुर्विषह वृत्तिषु यातनासु।
सम्यग् भविष्यति ततः शरणागतानां
संरक्षितेति बिरुदं वरद त्वदीयम् ॥ ३५

पर्याकुलं महति दुःख पयोनिधौ मां
पश्यन् करीश यदि जोषमवस्थितस्त्वम्।
स्फारेक्षणेऽपि मिषति त्वयि निर्निमेषं
पारे करिष्यति दया तव दुर्निवारा ॥ ३६

किं वा करीश कृपणे मयि रक्षणीये
धर्मादि बाह्य सहकारि गवेषणेन।
नन्वस्ति विश्वपरिपालन जागरूकः
सङ्कल्प एव भवतो निपुणः सहायः ॥ ३७

निर्यन्त्रणं परिणमन्ति न यावदेते
नीरन्ध्र दुष्कृतभवा दुरित प्ररोहाः ।
तावन्न चेत् त्वमुपगच्छसि शार्ङ्गधन्वा
शक्यं त्वयापि न हि वारयितुं करीश ॥ ३८

यावन्न पश्यति निकाममर्षणो मां
भ्रूभङ्गभीषण करालमुखः कृतान्तः ।
तावत् पतन्तु मयि ते भगवन् दयालोः
उन्निद्र पद्म कलिका मधुराः कटाक्षाः ॥ ३९

स त्वं स एव रभसो भवदौपवाह्यः
चक्रं तदेव शितधारमहं च पाल्यः ।
साधारणे त्वयि करीश समस्त जन्तोः
मातङ्ग मानुषभिदा न विशेष हेतुः ॥ ४०

निर्वापयिष्यति कदा करिशैल धामन्
दुर्वार कर्म परिपाक महादवाग्निम् ।
प्राचीन दुःखमपि मे सुखयन्निव त्वत्-
पादारविन्द परिचार रस प्रवाहः ॥ ४१

मुक्तः स्वयं सुकृत दुष्कृत शृङ्खलाभ्यां
अर्चिर्मुखैरधिकृतैरतिवाहिताध्वा ।
स्वच्छन्द किङ्करतया भवतः करीश
स्वाभाविकं प्रतिलभेय महाधिकारम् ॥ ४२

त्वं चेत् प्रसीदसि तवास्मि समीपतश्चेत्
त्वय्यस्ति भक्तिरनघा करिशैलनाथ ।
संसृज्यते यदि च दासजनस्त्वदीयः
संसार एष भगवन्नपवर्ग एव ॥ ४३

आहूयमानमनपाय विभूति कामैः
आलोक लुप्त जगदान्ध्यं अनुस्मरेयम्।
आलोहितांशुकं अनाकुलहेतिजालं
हैरण्यगर्भहयमेधहविर्भुजं त्वाम्॥ ४४

भूयो भूयः पुलक निचितैरङ्गकैरेधमानाः
स्थूलस्थूलान् नयन मुकुलैर्बिभ्रतो बाष्प बिन्दून्।
धन्याः केचिद् वरद भवतः संसदं भूषयन्तः
स्वान्तैरन्तर्विनय निभृतैः स्वादयन्ते पदं ते॥ ४५

वरद तव विलोकयन्ति धन्याः मरकत भूधर मातृकायमाणम्।
व्यपगत परिकर्म वारवाणं मृगमदपङ्कविशेषनीलमङ्गम्॥ ४६

अनिभृत परिरम्भैराहितामिन्दिरायाः
कनक वलय मुद्रां कण्ठ देशे दधानः।
फणिपति शयनीयादुत्थितस्त्वं प्रभाते
वरद सततमन्तर्मानसं सन्निधेयाः॥ ४७

तुरग विहगराजस्यन्दनान्दोलिकादि-
ष्वधिकमधिकमन्यामात्मशोभां दधानम्।
अनवधिक विभूतिं हस्तिशैलेश्वरं त्वाम्
अनुदिनमनिमेषैर्लोचनैर्निर्विशेयम्॥ ४८

निरन्तरं निर्विशतस्त्वदीयं अस्पृष्ट चिन्तापदमाभिरूप्यम्।
सत्यं शपे वारणशैलनाथ वैकुण्ठ वासेऽपि न मेऽभिलाषः॥ ४९

व्यातन्वाना तरुण तुलसीदामभिः स्वामभिख्यां
मातङ्गाद्रौ मरकतरुचिं पुष्णती मानसे नः।
भोगैश्वर्य प्रिय सहचरैः कापि लक्ष्मी कटाक्षैः
भूयः श्यामा भुवनजननी देवता सन्निधत्ताम्॥ ५०

इति विहितमुदारं वेङ्कटेशेन भक्त्या
श्रुतिसुभगमिदं यः स्तोत्रमङ्गीकरोति ।
करिशिखरि विटङ्कस्थायिनः कल्पवृक्षात्
भवति फलमशेषं तस्य हस्तापचेयम् ।। ५१

—*—

वेदान्तदेशिकविरचितम्

## अच्युतशतकम्

(तिरुवहीन्द्रपुराख्ये औषधगिरौ)

(इदं शतकं प्राकृतभाषायामास्ते ।
लेखकैरेव संस्कृते परिवर्तितं मूलमेव अत्र दीयते ।)

नमत त्रिदशानां नाथं सत्यं दासानामच्युतं स्थिरज्योतिः ।
गरुड नदी तट तमालं अहीन्द्रनगरौषधाचलैकगजेन्द्रम् ।। १

किङ्करसत्य स्तुतिस्तव स्वयम्भू गेहिनी विलास व्याहृतिमयी ।
फणिता बालेन मया पञ्जर शुक जल्पितमिव करोतु प्रसादम् ।। २

मलिनमपि भाषितं मम किङ्करसत्य तव कीर्तिज्योत्स्ना प्रसरे ।
लग्नां लभतां विशुद्धिं सलिलमिव त्रिपथगास्रोतो गतम् ।। ३

त्रस्तरि नयेन स्थापिता शोभतां त्रिदशानां नाथ तव समाजे ।
वन्दित्व महितानां मध्ये श्रुतीनां बालिशा मम स्तुतिः ।। ४

अस्मद्गुरूणामच्युत जिह्वासिंहासने लब्धप्रतिष्ठः ।
प्रतिपादित परमार्थो वारयस्यपण्डितत्वमस्माकम् ।। ५

हृदयेषु देशिकानां जाह्नवी लहरीषु पूर्णचन्द्र इव स्फुटः ।
कलुष जलेष्विव हंसः कषाय कर्बुरेषु तिष्ठस्यच्युत न क्षणम् ।। ६

आगममात्रप्रमाणः आगोपीजनं प्रकाश निजमाहात्म्यः ।
श्रद्धित हृदय सुलभो दूरं मुञ्चसि नतसत्य ! दोलायमानान् ।। ७

सदा क्षपितसकलहेयं शरणागतसत्य सत्यज्ञानानन्दम् ।
उल्लङ्घित त्रिविधान्तम् उपनिषदां शतानि गायन्ति त्वाम् ।। ८

करोषि न क्रियसे केनापि स्थापयसि न संस्थाप्यसेऽनन्यस्थितः ।
हरसि निखिलं न ह्रियसे अहीन्द्रनगरेन्द्रानघज्योतिस्स्फुरन् ।। ९

अणुप्रमितस्याप्यच्युत शक्तिस्तव सकल धारणादि प्रभूता ।
तेन प्रतिवस्तुपूर्णः श्रूयसेऽप्रतिहत निजस्थितिः सर्वगतः ।। १०

सकलानां धरण नियमनस्वामित्वनियम संस्थितः सर्वतनुः ।
श्रूयसेऽच्युत सर्वः सदा दर्शित कार्य कारणत्व कर्बुरः ।। ११

पुरुष प्रधान शरीरो भुवनानां भवस्यच्युतोपादानम् ।
निजसङ्कल्प सनाथो वहसि निमित्तत्त्वमप्यद्भुतशक्तिः ।। १२

विषम गुणाङ्कुर प्रकरे जलमिव सामान्य कारणं तव केलिः ।
निजकर्मशक्तिनियता अच्युत ब्रह्मादि स्थावरान्त विशेषाः ।। १३

पुरुषास्तव विभूतिः अच्युत लक्ष्म्याः स्त्रीसंज्ञाः ।
नास्ति परं युवयोः सापि श्रीर्भवति तव किं पुनरितरत् ।। १४

न खलु तव सदृशाभ्यधिकाः नाथ त्वमेव सर्वलोक शरण्यः ।
एतावत् ज्ञानसारं इति ज्ञातुं त्रिदशनाथेतर विचिन्ता ।। १५

भाति फणीन्द्रपुराधिप प्रतिपालयत्सु प्रकट प्रभूत फला ।
अपि द्रुहिण प्रमुखैः आज्ञासिस्तवालङ्घनीयप्रभावा ।। १६

नियमविधीनां प्रवृत्तिः सर्वेषामपि दाससत्योद्दिश्य त्वाम् ।
श्राद्ध निमन्त्रित ब्राह्मण समाधि सिद्धां लभन्ते त्रिदशा भुक्तम् ।। १७

आराध्य त्रिदश विलयेऽच्युत नित्यं न तिष्ठसि यदि नाम त्वम्।
कर्मणां कल्पितानां करिष्यति कल्पान्तरेषु को निर्वेशम्॥ १८

कल्पयसि काङ्क्षितानि कल्पद्रुम इव श्रीकाञ्चन लता सहितः।
नतसत्य सदाफलानि निजच्छाया निर्भिन्न नित्य ताप त्रिभुवनः॥ १९

सकलागमानां निष्ठा सकलसुराणामप्यन्तर आत्मा।
सकल फलानां प्रसूतिः सकल जनानां समः खलु नतसत्य त्वम्॥ २०

इति सर्वेषां समानः सत्यस्थितो दाससत्य सदा परिपूर्णः।
कथं वहसि पक्षपातं पाण्डव प्रमुखेषु प्रेषणमपि सहमानः॥ २१

विषमे कर्ममार्गे विपरिस्खलतां विह्वलित करणानाम्।
नाथ निखिलानामन्यो नास्ति त्वन्नतसत्य हस्तालम्बः॥ २२

ज्ञानस्य कोऽविषयो अच्युत करुणायास्तव को दूरस्थितः।
शक्तेः कोऽतिभरः तस्मात् खलूपायस्त्वमेव स्वयं सिद्धः॥ २३

सङ्कल्प कर्णधारः किङ्करसत्य भवसागरेऽतिगभीरे।
अनघस्त्वं खलु पोतः आत्मनः कृपा समीरणेन प्रयुक्तः॥ २४

अच्युत न ददति मोक्षं ईश्वर भावेन भाविता इतरसुराः।
रात्रिं परिवर्तयितुं लक्षमालेख्य दिनकराणामपि न क्षमम्॥ २५

अमृतरस सागरस्येव अहीन्द्रपुरनाथ निर्मल महार्घाणि।
तीर्यन्ते न विगणयितुं अनन्य सुलभानि तव गुण रत्नानि॥ २६

भूषित श्रुति सीमन्तो भुजगेन्द्रपुरेश सर्वगुण सीमान्तः।
क्षपित तृषा मल मोहो मुनीनां हृदयेषु स्फुरसि श्यामल मयूखः॥ २७

शुभ लक्षण श्रीवत्सः शोभसे निर्मुक्त विरह क्षण श्रीवत्सः।
रणदेवन सविहगः उद्भट गरुडनदीतीरवनसविधगतः॥ २८

अकुमार यौवन स्थितं अहीन्द्रपुरनाथाभिमतमनुरूपम्।
नित्यं स्वभाव सिद्धं श्रूयते सूरिमहितं सुखं तव रूपम्॥ २९

त्रिगुणं तस्य विकाराः अच्युत पुरुष इत्यागम गण्यमानाः।
अर्थास्तव खलु समस्ताः परस्मिन् रूपे भूषणास्त्र स्वरूपाः॥ ३०

निर्यान्ति त्वत्तोऽच्युत निक्षपित विपक्ष निष्ठुर पराक्रमणाः।
संस्थापित परम धर्माः साधु परित्राण सत्फला अवताराः॥ ३१

हरि मणि सदृक्ष निज रुचि हरितायमान भुजगेन्द्रपुर पर्यन्तः।
काले दासजनानां कृष्ण घनो भवसि दत्त कारुण्य रसः॥ ३२

गरुड नदी कच्छारण्ये लक्ष्यसे लक्ष्मी मही करेणु मनोहरः।
दृश्यमान बहुलदानो दिशा गजेन्द्र इव खण्डित दनुजेन्द्र द्रुमः॥ ३३

मुखचन्द्र मौलि दिनकर मध्यस्थितस्तव चिकुर भारान्धकारः।
अघटित घटना शक्तिं सत्यं स्थापयति दाससत्य समग्राम्॥ ३४

परिहसित पूर्णचन्द्रं पद्मसदृक्ष प्रसन्न लोचन युगलम्।
सङ्कल्पितदुरितान्यपि संस्मृतं हरति दाससत्य तव मुखम्॥ ३५

माहात्म्यं तव महितं माङ्गलिकं तुलसी कौस्तुभ प्रमुखानाम्।
अच्युत स्थिर वनमालं वत्सं दर्शयति लक्ष्मी लक्षण सुभगम्॥ ३६

निर्विशति नित्यतापो देवजनो देवनायक विधि प्रमुखः।
शीतल शान्त प्रभूतां छायां तव विपुल बाहु कल्प द्रुमाणाम्॥ ३७

सङ्कल्प चन्द्र क्षोभितत्रिगुणोदधि विपुलबुद्बुद प्रकरैः।
ब्रह्माण्डैरपि भरितं किङ्करसत्य तव कस्मान्नु कृशमुदरम्॥ ३८

नाभिरुहं तव नलिनं भुजगेश्वर नगर नाथ शोभते सुभगम्।
मध्यस्थित ब्रह्मभ्रमरं वत्सासनलक्ष्मी पाद पीठ सदृक्षम्॥ ३९

दृढपीडित मधुकैटभशोणित पटलपरिपाटलाम्बर घटिता।
राजत्यच्युत मुखरा रतिनाथ गजेन्द्र शृङ्खला तव रशना।। ४०

दासानां सत्य दृश्यते दानववीराणां दीर्घनिद्राशयनम्।
तवोदर स्थित त्रिभुवन प्रासादस्तम्भ सच्छायमूरुयुगम्।। ४१

जानुमणि दर्पणेन च जङ्घामरकत कलाचिकया च धन्या।
अच्युत न मुञ्चति कान्तिः लक्ष्मीरिव सरोज लाञ्छनौ तव चरणौ।। ४२

श्रुति सीमन्त प्रसूनं शोभते नतसत्य तव सर्वशरण्यम्।
क्रमण क्षण जनित सुरनदी प्रशमित त्रैलोक्य पातकं पद पद्मम्।। ४३

इति त्रिभुवनैकमूलं आस्वादयन्त्यनघा अमृत स्वादु रसम्।
ओषधिमहीधर पार्श्वं उदितं त्वामोषधिमिव दास रुजाम्।। ४४

सिद्धाञ्जनमिव श्यामां तव तनुं निजविलोचनेषु क्षिपन्तः।
अच्युत लक्ष्मीनिवासं नित्यनिगूढं निधिमिव पश्यन्ति त्वाम्।। ४५

विघटित निबिडान्धकारो घटमानज्योतिस्त्रिलोकैकग्रहपतिः।
दृष्टिगतो येषां त्वं नमत्सत्य न खलु तेषां मोहत्रियामा।। ४६

विषयरसे विरक्ताः विकारजननैरपि च न खलु विक्रियमाणाः।
जीवन्मुक्त सदृशा अच्युत दृश्यन्ते पावनास्तव भक्ताः।। ४७

गन्धर्व नगर स्वप्न सदृक्षाणां श्रियां वनसरिताम्।
न स्मरति त्वद्गृहीतः शरणागत सदामदो जीव गजः।। ४८

न महयन्ति ज्ञानवन्तः तरङ्गडिण्डीर बुद्बुद सदृक्षाणि।
विधि प्रमुखाणां पदानि घनकन्दलि कन्द कदलीस्तम्भ समानि।। ४९

दृष्ट स्वपर स्वभावाः पुरुषा गृहीत्वा स्वामिनस्तव शीलम्।
नाथ नतसत्य सघृणाः न मुञ्चन्ति कथमपि सर्वजन सौहार्दम्।। ५०

मान मदेर्ष्यामत्सर दम्भासूया भयामर्ष लोभ मुखाः ।
दृश्यन्ते न मोहसुताः दोषा दासानां सत्य तव भक्तानाम् ।। ५१

येषां मतिरितरमुखी कालः सकलोऽपि तेषां कलि विस्तारः ।
ये तव पदे प्रवणाः नास्ति कलिर्नागपतिनगरपते तेषाम् ।। ५२

अत्यासन्न विनाशाः अच्युत पश्यन्ति तावके भक्तजने ।
मोक्ष रुचीनां मूढा दिवस कर मण्डल इव च्छिद्रम् ।। ५३

नित्रुटित दुर्मान घनाः निर्मल गुण घटित तारका प्राग्भाराः ।
भासमानभक्ति ज्योत्स्नाः नतसत्य स्फुरन्ति नभो निभास्तव भक्ताः ।।

न खलु यमविषये गतिर्नतसत्य पदाम्बुजं तव प्रपन्नानाम् ।
स्खलितानामपि यथायोग्यं शिक्षा शुद्धान्त किङ्कराणामिव लघ्वी ।। ५५

कर्मगतिदोष दुःखिताः कृतान्त भ्रुकुटी भुजङ्गी दर्शन त्रस्ताः ।
अर्चन्ति तव चरणौ अच्युत प्रभ्रष्टमन्मथ रसास्वादाः ।। ५६

आलगति तव चरणौ अच्युत विधिनाऽप्यर्चनाऽऽचरिता ।
यैकान्ति प्रयुक्ता शेषामिव स्वयं शिरसा प्रतिगृह्णासि ताम् ।। ५७

तव मुख ज्योत्स्ना द्रावित मानसशशिकान्त प्रवाहसंनिभबाष्पान् ।
अच्युत न मुञ्चसि भक्तान् कदम्ब गोल निभ कण्टकायमान निजाङ्गान् ।।

सर्वेऽपि निर्वैराः शरणागतसत्य गृहीतशाश्वतधर्माः ।
गतसङ्गास्तव भक्ताः यान्ति त्वामेव दुर्लभमितरैः ।। ५९

अहिपतिनगरेन्द्र त्वां आसन्नमपि गगनमिव सदा दुर्ग्रहम् ।
विषयेषु विलगन्तः त्वरमाणा अपि न लभन्ते डोलायमान मनसः ।। ६०

भक्तास्तावक सेवा रस भरिताः सकल रक्षणोत्सुक रुचिना ।
करणानि धरन्ति चिरं काङ्क्षित मोक्षा अप्यच्युत त्वया स्थापिताः ।।

स्थिर गुण गिरि जनितैः सन्तारयसि नतसत्य निजभक्तैः।
जन्म परिपाटी जलधिं जङ्गम स्थिर सेतु दर्शनीयैर्जनान्॥ ६२

प्रशमित भवान्तरभयाः प्राप्तं प्राप्तं हितमिति परिपश्यन्तः।
भावयन्ति तव भक्ताः प्रियातिथिमिव नतसत्य पश्चिम दिवसम्॥ ६३

प्रकट तिमिरे भुवने पात्र प्रतिष्ठापित परम ज्ञान प्रदीपाः।
नीयन्तेऽच्युत त्वया निजं पदं सदा स्वयंप्रभं कृत कार्याः॥ ६४

दृढतीव्र भक्ति नयनाः परिपश्यन्तोऽहीन्द्र पुरनाथ त्वाम्।
प्राप्तास्तव सायुज्यं पङ्क्तिं पूरयन्ति पन्नगेन्द्रमुखानाम्॥ ६५

सन्नत सुलभमच्युत समाधि सोपान क्रम विलम्ब विमुखिताः।
शरणं गत्वा त्वां मुक्ता मुचुकुन्द क्षत्रबन्धुप्रमुखाः॥ ६६

देवानां पशु समानो जन्तुर्गत्वा देवनाथ तव पदम्।
तैरेव सर्वैः संसरमाणैः भवति सदा दत्त बलिः॥ ६७

मोहान्धकार महार्णव मूर्च्छित माया महारजनि प्रत्यूषः।
अच्युत तव कटाक्षो विमुक्ति प्रस्थान प्रथम परिकरबन्धः॥ ६८

मोक्षसुख वृक्ष मूलं मोह जरातुर महारसायन प्रवरम्।
सकलकुशलैक क्षेत्रं किङ्कर सत्य तव कीर्तनममृत निभम्॥ ६९

नास्त्यभिक्रम नाशो विच्छेदेऽपि प्रत्यवाय प्रसङ्गः।
स्वल्पाऽपि तव सपर्या रक्षत्यच्युत महत्तरात् भयात्॥ ७०

अप्रसादे अप्रसन्नास्तव प्रसादे दाससत्य प्रसन्नाः।
आराध्या भवन्ति परे किं तैः प्रसङ्गलम्भितप्रभावैः॥ ७१

इतर त्रिदशाः प्रसन्नाः किङ्कर सत्य मम किं नु करिष्यन्ति हितम्।
नीहार घन शतैः न खलु पूर्यते कथमपि चातकतृष्णा॥ ७२

अनुगत सुख मृगतृष्णा अच्युत विश्राम्यति तव मामक तृष्णा।
प्रवाहेषु प्रसृतायाः आश्रित प्रवहद्धन कृपासरितः ।। ७३

विकल सकलाङ्गविषमान् धर्मान् नतसत्य ध्वजनिभान् धारयन्।
कान्तार पान्थक इव स्खलच्चरणोऽस्मि कातर विशीर्यमाणः ।। ७४

स्थिर धर्म वर्म स्थगितं अधर्मप्रवणानामग्र स्कन्ध प्रवृत्तम्।
अघटमान विप्रतीसारं अच्युत मां हससि नूनं लक्ष्मीसमक्षम्।। ७५

तरितुमच्युत दुरितं अस्मिन् देह एक दिवसेऽपि कृतम्।
कालोऽलं न सकलः करुणायास्तव पूर्ण पात्रमस्म्ययम्।। ७६

अच्युत तव गुणानां मम दोषाणामपि नास्ति कुत्रापि गणना।
तथापि जयः प्रथमानां अधिकं लीनानां भवति न खलु दौर्बल्यम्।। ७७

रात्रिं दिवसमच्युत त्रुटित पतन्त्यायुर्द्रुम खण्डानि।
दृष्ट्वापि दृप्त मनसं बालमिदानीमपि भरस्व मामप्रमत्तः ।। ७८

निश्वास शङ्कनीये देहे पटलान्त सलिल बिन्दु सदृक्षे।
जानासि नतसत्य त्वं जरत्करणेऽपि दीर्घ यौवन तृष्णम्।। ७९

अज्ञात निजकर्तव्यं यदृच्छया ज्ञातेषु मामपि प्रतिकूल गतिम्।
इति निजस्वभाव व्रीलितं हातुं दासानां सत्य न खलु तव युक्तम्।। ८०

कोऽहं किं करणीयं परिहरणीयमपि किमिति जानासि सर्वम्।
शक्नोषि च तद्धितं मम त्रिदशेश्वर कुरुष्व निज हृदयनिक्षिप्तम्।। ८१

इदानीमुपर्य्प्ययं गुण गृहीतो दारु पुत्रक इव परवश।
तस्यापि मम त्रिदशेश्वर त्रिष्वपि करणेषु भव सुख सङ्कल्पः ।। ८२

निज कर्म निगलयुगलं अच्युत कृत्वा मम प्रियाप्रिय वर्गे।
कदा घोर कलेबर कारागृह कुहर निर्गतं करिष्यसि माम्।। ८३

हार्दे त्वयि कदा विश्रान्तं ब्रह्मधमनि मार्ग गमिष्यन्तम्।
दिनकर दत्ताग्रकरं अच्युत द्रक्ष्यसि दयित डिम्भमिव माम्।। ८४

कदा अमानवान्ताः अग्निमुखा आतिवाहिकास्तव पुरुषाः।
अतिलङ्घयिष्यन्ति मां अच्युत तमो गहन त्रिगुण मरुकान्तारम्।। ८५

लङ्घित विरजासरितं लम्भित सदा शुद्ध सत्त्वमय सौम्य तनुम्।
कृत ब्रह्मालङ्कारं करिष्यसि नतसत्य किङ्करं कदा माम्।। ८६

संसार सागराद् उत्क्षिप्तं त्रिदशनाथ स्फुरितालोकम्।
कदा करिष्यसि हृदये कौस्तुभ मणि दर्पणमिव लक्ष्मी पुलकितम्।। ८७

कदा तव पादपद्मे भविष्यामि नतसत्य केलिक्रान्त त्रिभुवने
मदन रिपु मकुट मण्डन सुर सरित्स्रोतः सूचित मधु प्रवाहे।। ८८

उपनिषच्छिरः कुसुमं उत्तंसयित्वा तव पदाम्बुज युगळम्।
दयितो भविष्यामि कदा दासो दासानां सत्य सूरिसदृक्षः।। ८९

अपुनर्निवृत्ति योग्यं अवतार विहार सहचरत्व धन्यम्।
आत्म समभोगमात्रं अनुभविष्यसि देवनाथ कदा नु माम्।। ९०

इति स्फुट मनोरथं मां एतादृश वचनमात्रसारं वशगम्।
कुरुष्व निज गुण गणैः सत्यं दासानां सत्य सदा स्वच्छन्दः।। ९१

बाल प्लवग इव तरळो मारुति जातिरिति सागरं तरितुमनाः।
प्रार्थये त्वामच्युत काङ्क्षित पदपद्म क्षमस्व मम कापेयम्।। ९२

अच्युतविषयाक्रान्तं भवार्णवावर्तभ्रमि निक्षुब्धमानम्।
जननी स्तनन्धयमिव मामुद्धृत्य सेवस्व स्वयं पथ्यम्।। ९३

कर्ममय घर्म तप्तं सुख मृग तृष्णाभिः कदाऽप्यतृष्णाकम्।
कारय निर्वृतं मां करकाशिशिरैरच्युत कटाक्षैः।। ९४

तव चिन्तनविमुखानां दृष्टिविषाणामिव दर्शनान्मोचयन्।
अमृत मुखानामिव मां अच्युत भक्तानां नयस्व नयनासारम्।। ९५

विषमिलित मधु निभेषु च तृण प्रतिमेषु च प्रतिग्रहेषु प्रलुठितम्।
अमृत निधाविवाच्युत स्थापय त्वयि निर्ममं मम हृदयम्।। ९६

नित्यमस्मिन् कृपणे निक्षिप नमत्सत्य निधिसदृक्षौ।
प्रवहन्नखप्रभाझर प्रशमित प्रणमत्संज्वरौ तव चरणौ ।। ९७

शरणागत इति जनिते जनवादेऽपि यद्यच्युत न रक्षसि माम्।
भवेत् खलु सागरघोषः सागरपुलिने तादृशं तव वचनम्।। ९८

निक्षिप्तोऽस्मि चागतिः निपुणैस्त्वयि नाथ कारुणिकैः।
तांस्तव दृष्ट्वा प्रियान् भृतं नतसत्य भरस्वात्मनो भरम्।। ९९

नतसत्य पक्कणानीत गलित किरातभ्रम निज कुमारमिव नृपः।
भविष्यद्यौवनवधूं वर इव मां लभस्व मन्त्रिजनविज्ञापितम्।। १००

इति कवितार्किककेसरि वेदान्ताचार्य वेङ्कटेश विरचितम्।
सुभगमच्युतशतकं सहृदयहृदयेषु शोभतां समग्रगुणम्।। १०१

—*—

वेदान्तदेशिकविरचितम्

## षोडशायुधस्तोत्रम्

(श्री सुदर्शनदेवस्य करस्थायुधस्तुतिः)

स्वसङ्कल्प कला कल्पैरायुधैरायुधेश्वरः।
जुष्टः षोडशभिर्दिव्यैर्जुषतां वः परः पुमान्।। १

यदायत्तं जगच्चक्रं कालचक्रं च शाश्वतम्।
पातु वस्त्वपरं चक्रं चक्ररूपस्य चक्रिणः ।। २

यत्प्रसूतिशतैरासन् द्रुमाः परशुलाञ्छिताः ।
स दिव्यो हेतिराजस्य परशुः परिपातु वः ॥ ३

हेलया हेतिराजेन यस्मिन् दैत्याः समुद्धृते ।
शकुन्ता इव धावन्ति स कुन्तः पालयेत वः ॥ ४

दैत्य दानव मुख्यानां दण्ड्यानां येन दण्डनम् ।
हेतिदण्डेश दण्डोऽसौ भवतां दण्डयेद्द्विषः ॥ ५

अनन्यान्वय भक्तानां रुन्धन्नाशा मतङ्गजान् ।
अनङ्कुश विहारो वः पातु हेतीश्वराङ्कुशः ॥ ६

संभूय शलभायन्ते यत्र पापानि देहिनाम् ।
स पातु शतवक्त्राग्निहेतिर्हेतीश्वरस्य वः ॥ ७

अविद्यां स्वप्रकाशेन विद्यारूपश्छिनत्ति यः ।
स सुदर्शन निस्त्रिंशः सौतु वस्तत्त्वदर्शनम् ॥ ८

क्रिया शक्ति गुणो विष्णोर्यो भवत्यतिशक्तिमान् ।
अकुण्ठ शक्तिः सा शक्तिरशक्तिं वारयेत वः ॥ ९

तारत्वं यस्य संस्थाने शब्दे च परिदृश्यते ।
प्रभोः प्रहरणेन्द्रस्य पाञ्चजन्यः स पातु वः ॥ १०

यं सात्त्विकमहङ्कारं आमनन्त्यक्ष सायकम् ।
अव्याद् वश्चक्ररूपस्य तद्धनुः शार्ङ्गधन्वनः ॥ ११

आयुधेन्द्रेण येनैव विश्वसर्गो विविच्यते ।
स वः सौदर्शनिः कुर्यात् पाशः पाश विमोचनम् ॥ १२

विहारो येन देवस्य विश्व क्षेत्र कृषीवलः ।
व्यज्यते तेन सारेण नासीर विजयोस्तु वः ॥ १३

आयुधानामहं वज्रं इत्यगीयत यः स वः ।
अव्याद्धेतीश वज्रोऽसावदधीच्यस्थि संभवः ।। १४

विश्व संहृति शक्तिर्या विश्रुता बुद्धिरूपिणी ।
सा वः सौदर्शनी भूयात् गदप्रशमिनी गदा ।। १५

यात्यतिक्षोद शालित्वं मुसलो येन तेन वः ।
हेतीश मुसलेनाशु भिद्यतां मोहमौसलम् ।। १६

शूलिदृष्ट मनोवार्च्यो येन शूलयति द्विषः ।
भवतां तेन भवतात् त्रिशूलेन विशूलता ।। १७

अस्त्र ग्रामस्य कृत्स्नस्य प्रसूतिं यं प्रचक्षते ।
सोऽव्यात् सुदर्शनो विश्वं आयुधैः षोडशायुधः ।। १८

श्रीमद्वेङ्कटनाथेन श्रेयसे भूयसे सताम् ।
कृतेयमायुधेन्द्रस्य षोडशायुध संस्तुतिः ।। १९

—*—

सूर्यकृतं

## चक्रपाणिस्तोत्रम्

(कुम्भकोणे सुदर्शन-नरसिंह-घटित चक्रपाणि मूर्तेः स्तोत्रम् ।)

देवदेव जगन्नाथ नमस्ते भक्तवत्सल ।
प्रपन्नं पाहि मां विष्णो कृपया पुरुषोत्तम ।। १

अपराधं क्षमस्वाद्य मयाऽज्ञानकृतं प्रभो ।
त्वां विना शरणं नास्ति त्वमेव शरणं मम ।। २

चक्राम्बुजे समासीनं चक्राद्यायुधभूषणम् ।
चक्रमन्त्राधिदेवेशं चक्रराजमहं भजे ।। ३

सर्वावयवसंपूर्णं अष्टबाहुं त्रिलोचनम्।
दंष्ट्राकरालवदनं भयस्यापि भयङ्करम्॥ ४

उग्रपिङ्गलकेशाढ्यं ज्वालामालापरिष्कृतम्।
अप्रदृश्यमनिर्देश्यं ब्रह्माण्डव्याप्तविग्रहम् ॥ ५

अष्टायुधपरीवारं अष्टशक्तिसमन्वितम्।
अष्टारं चक्रमत्युग्रं मुसलं चाङ्कुशं तथा॥ ६

पद्मं दक्षिणपार्श्वे तु चतुर्भिर्बाहुभिर्वृतम्।
वामतः शङ्खसशरचापपाशगदाधरम्॥ ७

रक्तवस्त्रधरं देवं रक्तमाल्योपाशोभितम्।
रक्त चन्दनलिप्ताङ्गं रत्नमालाविभूषितम्॥ ८

दिव्यरत्नविचित्रेण मकुटेन विराजितम्।
दुष्टनिग्रहकर्तारं भक्तानुग्रहरूपिणम्।
सुदर्शनाभिधानं त्वां आत्मनोऽभिमुखं भजे॥ ९

अव्याद्भास्कर सप्रभाभिरखिलाभाभिर्दिशो भासयन्
भीमाक्षस्फुरदट्टहासविलसद्दंष्ट्रः प्रदीप्ताननः।
दोर्भिश्चक्रदरौ गदाब्जमुसलान् शार्ङ्गं च पाशाङ्कुशौ
बिभ्रत्पिङ्गशिरोरुहोऽतिधवलश्चक्राभिधानो हरिः॥ १०

मध्याह्न सूर्यप्रतिमप्रकाशं पिशङ्गकेशं स्फुरदट्टहासम्।
त्रिरूप दीप्ताम्बरमुग्रमीडे चक्र स्थितं चक्रिणमष्टबाहुम्॥ ११

कल्पान्तार्कप्रकाशं त्रिभुवनमखिलं तेजसा पूरयन्तं
रक्ताक्षं पिङ्गकेशं रिपुकुलदहनं भीमदंष्ट्राट्टहासम्।
शङ्खं चक्रं गदाब्जे पृथुतरमुसलं चापपाशाङ्कुशादीम्
बिभ्राणं दोर्भिरीड्यं मनसि मुररिपुं भावये चक्रपाणिम्॥ १२

20

त्रिणेत्रं चतुश्चक्रसंशोभिहस्तं स्थितं तञ्च पङ्केरुहे योगपीठे।
महोग्राकृतिं कालविद्युत्सकाशं नृसिंहं भजे चक्रपश्चात्सुसंस्थम्॥ १३

—*—

वेदान्तदेशिककृतं

## अष्टभुजाष्टकम्

(काञ्च्यां)

गजेन्द्र रक्षात्वरितं भवन्तं ग्राहैरिवाहं विषयैर्विकृष्टः।
अपार विज्ञान दयानुभावं आप्तं सतामष्टभुजं प्रपद्ये॥ १

त्वदेक शेषोऽहमनात्म तन्त्रः त्वत्पाद लिप्सां दिशता त्वयैव।
असत्समोऽप्यष्टभुजास्पदेश सत्तामिदानीमुपलम्भितोऽस्मि॥ २

स्वरूप रूपास्त्रविभूषणाद्यैः परत्व चिन्तां त्वयि दुर्निवाराम्।
भोगे मृदूपक्रमतामभीप्सन् शीलादिभिर्वारयसीव पुंसाम्॥ ३

शक्तिं शरण्यान्तर शब्द भाजां सारं च सन्तोल्य फलान्तराणाम्।
त्वद्दास्य हेतोस्त्वयि निर्विशङ्कं न्यस्तात्मनां नाथ बिभर्षि भारम्॥ ४

अभीति हेतोरनुवर्तनीयं नाथ त्वदन्यं न विभावयामि।
भयं कुतः स्यात् त्वयि सानुकम्पे रक्षा कुतः स्यात् त्वयि जातरोषे॥ ५

त्वदेक तन्त्रं कमलासहाय स्वेनैव मां रक्षितुमर्हसि त्वम्।
त्वयि प्रवृत्ते मम किं प्रयासैः त्वय्यप्रवृत्ते मम किं प्रयासैः॥ ६

समाधिभङ्गेष्वपि संपतत्सु शरण्य भूते त्वयि बद्ध कक्ष्ये।
अपत्रपे सोढुमकिञ्चनोऽहं दूराधिरोहं पतनं च नाथ॥ ७

प्राप्ताभिलाषं त्वदनुग्रहान्मां पद्मा निषेव्ये तव पाद पद्मे।
आ देहपातादपराधदूरं आत्मान्तकैङ्कर्य रसं विधेयाः॥ ८

प्रपन्न जन पाथेयं प्रपित्सूनां रसायनम्।
श्रेयसे जगतामेतत् श्रीमदष्टभुजाष्टकम्॥ ९

शरणागत सन्त्राणत्वरा द्विगुण बाहुना।
हरिणा वेङ्कटेशीया स्तुतिः स्वीक्रियतामियम्॥ १०

—*—

श्री वेदान्तदेशिकृतं

## कामासिकाष्टकम्

(திருவேளுக்கை काञ्च्यां)

श्रुतीनामुत्तरं भागं वेगवत्याश्च दक्षिणम्।
कामादधिवसन् जीयात् कश्चिदद्भुत केसरी॥ १

तपनेन्द्वग्निनयनः तापानपचिनोतु नः।
तापनीय रहस्यानां सारः कामासिकाहरिः॥ २

आकण्ठमादिपुरुषं कण्ठीरवमुपरि कुण्ठितारातिम्।
वेगोपकण्ठसङ्गात् विमुक्त वैकुण्ठ बहुमतिमुपासे॥ ३

बन्धुमखिलस्य जन्तोः बन्धुर पर्यङ्क बन्ध रमणीयम्।
विषम विलोचनमीडे वेगवती पुलिन केलि नरसिंहम्॥ ४

स्वस्थानेषु मरुद्गणान् नियमयन् स्वाधीन सर्वेन्द्रियः
पर्यङ्कस्थिर धारणा प्रकटित प्रत्यङ्मुखावस्थितिः।
प्रायेण प्रणिपेदुषः प्रभुरसौ योगं निजं शिक्षयन्
कामानातनुतादशेष जगतां कामासिका केसरी॥ ५

विकस्वर नख स्वरु क्षत हिरण्य वक्षःस्थली-
निरर्गल विनिर्गलद्रुधिर सिन्धु सन्ध्यायिताः।

अवन्तु मदनासिका मनुज पञ्च वक्त्रस्य मां
अहंप्रथमिका मिथः प्रकटिताहवा बाहवः ॥ ६

सटा पटल भीषणे सरभसाट्टहासोद्भटे
स्फुरत्क्रुधि परिस्फुट भ्रुकुटिकेऽपि वक्त्रे कृते।
कृपा कपटकेसरिन् दनुज डिम्भ दत्त स्तना
सरोजसदृशा दृशा व्यतिविषज्य ते व्यज्यते ॥ ७

त्वयि रक्षति रक्षकैः किमन्यैः त्वयि चारक्षति रक्षकैः किमन्यैः।
इति निश्चितधीः श्रयामि नित्यं नृहरे वेगवतीतटाश्रयं त्वाम् ॥ ८

इत्थं स्तुतः सकृदिहाष्टभिरेष पद्यैः श्री वेङ्कटेश रचितैस्त्रिदशेन्द्र वन्द्यः।
दुर्दान्त घोर दुरित द्विरदेन्द्र भेदी कामासिकानरहरिर्वितनोतु कामान् ॥९

—*—

श्री वेदान्तदेशिककृतः

## देवनायकपञ्चाशत्स्तवः

(तिरुवहीन्द्रपुरे)

प्रणतसुरकिरीट प्रान्त मन्दारमाला-
विगलित मकरन्द स्निग्ध पादारविन्दः ।
पशुपति विधि पूज्यः पद्मपत्रायताक्षः
फणिपति पुरनाथः पातु मां देवनाथः ॥ १

देवाधिनाथ कमला पृतनेशपूर्वां
दीप्तान्तरां वकुलभूषण नाथ मुख्यैः।
रामानुज प्रभृतिभिः परिभूषिताग्रां
गोप्त्रीं जगन्ति गुरुपङ्क्तिमहं प्रपद्ये ॥ २

दिव्ये दयाजलनिधौ दिविषन्नियन्तुः
तीर्थं निदर्शितवतस्त्रिजगन्निषेव्यम्।
प्राचः कवीन् निगमसंमित सूनृतोक्तीन्
प्राचेतस प्रभृतिकान् प्रणमाम्यभीक्ष्णम्।। ३

मातस्त्वमम्बुरुहवासिनि किञ्चिदेतत्
विज्ञाप्यते मयि कुरुष्व तथा प्रसादम्।
आकर्णयिष्यति यथा विबुधेश्वरस्ते
प्रेयानसौ पृथुक जल्पितवन्मदुक्तिम्।। ४

निर्दिश्यमान विभवं निगमोत्तमाङ्गैः
स्तोतुं क्षमं मम च देवपते भवन्तम्।
गावः पिबन्तु गणशः कलशाम्बुराशिं
किं तेन तर्णक गणास्तृणमाददानाः ।। ५

अज्ञात सीमकमनन्त गरुत्मदाद्यैः
तं त्वां समाधि नियतैरपि सामि दृष्टम्।
तुष्टूषतो मम मनोरथ सिद्धिदायी
दासेषु सत्य इति धारय नामधेयम्।। ६

विश्राणयन्मम विशेषविदामनिन्द्याम्
अन्तर्वर्ती गिरमहीन्द्रपुराधिराज।
स्तव्यः स्तवप्रिय इतीव तपोधनोक्तं
स्तोतेति च त्वदभिधानमवन्ध्यय त्वम्।। ७

संरक्षणीयममराधिपते त्वयैव
दूरं प्रयातमपि दुस्त्यजगाढबन्धम्।
आकृष्टवानसि भवाननुकम्पमानः
सूत्रानुबद्ध शकुनि क्रमतः स्वयं माम्।। ८

व्यामोहिता विविध भोग मरीचिकाभिः
विश्रान्तिमद्य लभते विबुधैकनाथ।
गम्भीर पूर्ण मधुरं मम धीर्भवन्तं
ग्रीष्मे तटाकमिव शीतमनुप्रविष्टा ॥ ९

दिव्ये पदे जलनिधौ निगमोत्तमाङ्गे
स्वान्ते सतां सवितृ मण्डल मध्यभागे।
ब्रह्माचले च बहुमानपदे मुनीनां
व्यक्तिं तव त्रिदशनाथ वदन्ति नित्याम्॥ १०

तीर्थैर्वृतं वृजिन दुर्गति नाशनार्हैः
शेष क्षमा विहगराज विरिञ्च जुष्टैः।
नाथ त्वया नतजनस्य भवौषधेन
प्रख्यातमौषधगिरिं प्रणमन्ति देवाः॥ ११

स्वाधीन विश्वविभवं भगवन् विशेषात्
त्वां देवनायकमुशन्ति परावरज्ञाः।
प्रायः प्रदर्शयितुमेतदिति प्रतीमः
त्वद्भक्ति भूषितधियामिह देवभावम्॥ १२

तत्वानि यानि चिदचित्प्रविभागवन्ति
त्रय्यन्त वृद्ध गणितानि सितासितानि।
दीव्यन्ति  तान्यहिपुरन्दरधामनाथ!
दिव्यास्त्र भूषणतया तव विग्रहेऽस्मिन्॥ १३

भूषायुधैरधिगतं निजकान्तिहेतोः
भुक्तं प्रियाभिरनिमेषविलोचनाभिः।
प्रत्यङ्ग पूर्ण सुषमा सुभगं वपुस्ते
दृष्ट्वा दृशौ विबुधनाथ न तृप्यतो मे॥ १४

वेदेषु निर्जरपते निखिलेष्वधीतं
व्यासादिभिर्बहुमतं तव सूक्तमग्र्यम्।
अङ्गान्यमूनि भवतः सुभगान्यधीते
विश्वं विभो जनितवन्ति विरिञ्चपूर्वम्॥ १५

देवेश्वरत्वमिह दर्शयितुं क्षमस्ते
नाथ त्वयापि शिरसा विधृतः किरीटः।
एकीकृतद्युमणि बिम्बसहस्रदीप्तिः
निर्मूलयन् मनसि मे निबिडं तमिस्रम्॥ १६

मुग्धस्मितामृतशुभेन मुखेन्दुना ते
संगम्य संसरण संज्वरशान्तये नः।
सम्पद्यते विबुधनाथ समाधियोग्या
शर्वर्यसौ कुटिल कुन्तल कान्ति रूपा॥ १७

बिम्बाधरं विकचपङ्कजलोचनं ते
लम्बालकं ललितकुण्डल दर्शनीयम्।
कान्तं मुखं कनक कैतककर्णपूरं
स्वान्तं विभूषयति देवपते मयीयम्॥ १८

लब्धा तिथौ क्वचिदियं रजनीकरेण
लक्ष्मीः स्थिरा सुरपते भवतो ललाटे।
यत्स्वेदबिन्दुकणिकोद्गत बुद्बुदान्तः
त्र्यक्षः पुरा स पुरुषोऽजनि शूलपाणिः॥ १९

लावण्यवर्षिणि ललाटतटे घनाभे
बिभ्रत् तटिद्गुण विशेषमिवोर्ध्वपुण्ड्रम्।
विश्वस्य निर्जरपते तमसावृतस्य
मन्ये विभावयसि माङ्गलिक प्रदीपम्॥ २०

आहुः श्रुतिं विबुधनायक तावकीनाम्
आशागण प्रसव हेतुं अधीतवेदाः ।
आकर्णिते तदियमार्तरवे प्रजानाम्
आशाः प्रसाधयितुं आदिशति स्वयं त्वाम् ।। २१

कन्दर्पलाञ्छन तनुस्त्रिदशैकनाथ
कान्ति प्रवाह रुचिरे तव कर्णपाशे ।
पुष्यत्यसौ प्रतिमुख स्थिति दर्शनीया
पूषामयी मकरिका विविधान् विहारान् ।। २२

नेतुं सरोजवसतिर्निजमाधिराज्यं
नित्यं निशामयति देवपते भ्रुवौ ते ।
एवं न चेदखिलजन्तु विमोहनार्हा
किं मातृका भवति कामशरासनस्य ।। २३

आलक्ष्य सत्त्वं अतिवेल दयोत्तरङ्गं
अभ्यर्थिनामभिमत प्रतिपादनार्हम् ।
स्निग्धायतं प्रथिमशालि सुपर्वनाथ
दुग्धाम्बुधेरनुकरोति विलोचनं ते ।। २४

विश्वाभिरक्षण विहार कृतक्षणैस्ते
वैमानिकाधिप विडम्बित मुग्धपद्मैः ।
आमोद वाहिभिरनामय वाक्यगर्भैः
आर्द्रीभवाम्यमृत वर्षनिभैरपाङ्गैः ।। २५

नित्योदितैर्निगम निःश्वसितैस्तवैषा
नासा नभश्चरपते नयानाब्धि सेतुः ।
आम्रेडित प्रियतमा मुखपद्म गन्धैः
आश्वासिनी भवति सम्प्रति मुह्यतो मे ।। २६

आरुण्य पल्लवित यौवन पारिजातं
आभीर योषिदनुभूतं अमर्त्यनाथ।
वंशेन शङ्खपतिना च निषेवितं ते
बिम्बाधरं स्पृशति रागवती मतिर्मे॥ २७

पद्मालया वलय दत्त सुजात रेखे
त्वत्कान्ति मेचकित शङ्खनिभे मतिर्मे।
विस्मेर भावरुचिरा वनमालिकेव
कण्ठे गुणीभवति देवपते त्वदीये॥ २८

आजानुलम्बिभिरलङ्कृत हेतिजालैः
ज्याघात राजिरुचिरैर्जितपारिजातैः।
चित्राङ्गदैस्त्रिदशपुङ्गव जातसङ्गा
त्वद्बाहुभिर्मम दृढं परिरम्भ्यते धीः॥ २९

नीलाचलोदित निशाकर भास्कराभे
शान्ताहिते सुरपते तव शङ्खचक्रे।
पाणेरमुष्य भजतामभयप्रदस्य
प्रत्यायनं जगति भावयतः स्वभूम्ना॥ ३०

अक्षोभणीय करुणाम्बुधि विद्रुमाभं
भक्तानुरञ्जनं अमर्त्यपते त्वदीयम्।
नित्यापराध चकिते हृदये मदीये
दत्ताभयं स्फुरति दक्षिण पाणिपद्मम्॥ ३१

दुर्दान्त दैत्य विशिख क्षत पत्रभङ्गं
वीरस्य ते विबुधनायक बाहुमध्यम्।
श्रीवत्स कौस्तुभ रमा वनमालिकाङ्कं
चिन्ताऽनुभूय लभते चरितार्थतां नः॥ ३२

वर्णक्रमेण विबुधेश विचित्रिताङ्गी
स्मेरप्रसून सुभगा वनमालिकेयम्।
हृद्या सुगन्धिरजहत्कमला मणीन्द्रा
नित्या तव स्फुरति मूर्तिरिव द्वितीया॥ ३३

आर्द्रं तमोमथनं आश्रिततारकं ते
शुद्धं मनः सुमनसाममृतं दुहानम्।
तत् तादृशं विबुधनाथ समृद्धकामं
सर्गेष्विदं भवति चन्द्रमसां प्रसूतिः॥ ३४

विश्वं निगीर्य विबुधेश्वर जातकार्श्यं
मध्यं वलित्रय विभाव्य जगद्विभागम्।
आमोदिनाभिनलिनस्थ विरिञ्च भृङ्गं
आकल्पयत्युदरबन्ध इवाशयो मे॥ ३५

नाकौकसां प्रथमतामधिकुर्वते ते
नाभी सरोज रजसां परिणाम भेदाः।
आराधयद्भिरिह तैर्भवतः समीची
वीरोचिता विबुधनायक इत्यभिख्या॥ ३६

पीताम्बरेण परिवारवती सुजाता
दास्ये निवेशयति देवपते दृशौ मे।
विन्यस्त सव्यकरसङ्गमजायमान-
रोमाञ्चरम्य किरणा रशना त्वदीया॥ ३७

स्त्रीरत्न कारणं उपात्त तृतीय वर्णं
दैत्येन्द्र वीरशयनं दयितोपधानम्।
देवेश यौवनगजेन्द्र कराभिरामं
ऊरीकरोति भवदूरुयुगं मनो मे॥ ३८

लावण्यपूर ललितोर्ध्व परिभ्रमाभं
लक्ष्मीविहारमणिदर्पण बद्धसख्यम्।
गोपाङ्गणेषु कृतचङ्क्रमणं तवैतत्
जानुद्वयं सुरपते न जहाति चित्तम्॥ ३९

दूत्ये दुकूलहरणे व्रजसुन्दरीणां
दैत्यानुधावन विधावपि लब्धसाह्यम्।
कन्दर्पकाहल निषङ्गकलाचिकाभं
जङ्घायुगं जयति देवपते त्वदीयम्॥ ४०

पाषाणनिर्मित तपोधन धर्मदारं
भस्मन्युपाहित नरेन्द्र कुमारभावम्।
संवाहितं त्रिदशनाथ रमामहीभ्यां
सामान्य दैवतमुशन्ति पदं त्वदीयम्॥ ४१

आवर्जिताभिरनुषज्य निजांशुजालैः
देवेश दिव्यपदपद्म दलायिताभिः।
अन्याभिलाषपरिलोलमिदं मदीयं
अङ्गीकृतं हृदयमङ्गुलिभिः स्वयं ते॥ ४२

पङ्कान्यसौ मम निहन्ति महस्तरङ्गैः
गङ्गाधिकां विदधती गरुडस्रवन्तीम्।
नाकौकसां मणि किरीट गणैरुपास्या
मान्यं पदं भवतु मौलि विभूषणं नः॥ ४४

चित्रं त्वदीय पदपद्म पराग योगाद्
योगं विनापि युगपद्विलयं प्रयान्ति।
विष्वञ्चि निर्जरपते शिरसि प्रजानां
वेधः स्वहस्त लिखितानि दुरक्षराणि॥ ४५

ये जन्मकोटिभिरुपार्जित शुद्धधर्माः
तेषां भवच्चरण भक्तिरतीव भोग्या।
त्वज्जीवितैस्त्रिदशनायक दुर्लभैस्तैः
आत्मानमप्यकथयः स्वयमात्मवन्तम्॥ ४६

निष्किंचनत्व धनिना विबुधेश येन
न्यस्तः स्वरक्षण भरस्तव पादपद्मे।
नानाविध प्रथित योगविशेष धन्याः
नार्हन्ति तस्य शतकोटितमांशकक्ष्याम्॥ ४७

आत्मापहार रसिकेन मयैव दत्तं
अन्यैरधार्यमधुना विबुधैकनाथ।
स्वीकृत्य धारयितुमर्हसि मां त्वदीयं
चोरोपनीत निज नूपुरवत् स्वपादे॥ ४८

अज्ञान वारिधिमपायधुरन्धरं मां
आज्ञाविभञ्जनं अकिञ्चन सार्वभौमम्।
विन्दन् भवान् विबुधनाथ समस्तवेदी
किं नाम पात्रमपरं मनुते कृपायाः॥ ४९

प्रह्लादगोकुल गजेन्द्र परीक्षिदाद्याः
त्रातास्त्वया ननु विपत्तिषु तादृशीषु।
सर्वं तदेकमपरं मम रक्षणं ते
सन्तोल्यतां त्रिदशनायक किं गरीयः॥ ५०

वात्याशतैर्विषय रागतया विवृत्तैः
व्याघूर्णमान मनसं विबुधाधिराज।
नित्योपतप्त इति मां निजकर्म घर्मैः
निर्वेशय स्वपदपद्ममधुप्रवाहम्॥ ५१

जय विबुधपते त्वं दर्शिताभीष्टदानः
सह सरसिजवासामेदिनीभ्यां वशाभ्याम्।
नलवनमिव मृद्नन् पापराशिं नतानां
गरुड सरिदनूपे गन्धहस्तीव दीव्यन्॥ ५२

निरवधि गुणजातं नित्य निर्दोषमाद्यं
नरकमथन दक्षं नाकिनामेकनाथम्।
विनत विषय सत्यं वेङ्कटेशः कविस्त्वां
स्तुति पदमधिगच्छन् शोभते सत्यवादी॥ ५३

—*—

## श्रीगोविन्दराजप्रपत्तिः

यश्श्रैकशैलनिकटे कमलापुरीश
गोविन्दराजपदयोरकरोत् प्रपत्तिम्।
तं वादिभीकरगुरोश्शरणं प्रपद्ये
पात्रं गुरुं वरवरं परमं गुरूणाम्॥ १

श्रीमन् निदान जगतां निखिलाण्डजात-
निर्वाहशक्तिमुखदिव्यगुणैकतान।
अत्यन्तभोग्यनतदोष निरस्तदोष
गोविन्दराज चरणौ शरणं प्रपद्ये॥ २

रेखारथाङ्गसरसीरुहवज्रशङ्ख-
च्छत्राङ्कुशप्रभृतिमङ्गलचिह्नगर्भौ।
संसारतापहरणे निपुणौ नतानां
गोविन्दराज चरणौ शरणं प्रपद्ये॥ ३

पश्यत्सु सान्द्रभयकौतुकमर्भकेषु
प्रौढेषु सत्सु कृतकृत्यपरायणेषु।
विध्वंसितोर्ध्वशकटावपि बालभावे
गोविन्दराज चरणौ शरणं प्रपद्ये ।। ४

आलम्ब्य बाहुयुगलेन कुमारभावे
गाढं कराङ्गुलियुगं किल नन्दपत्न्याः।
अभ्यस्यमानदशचङ्क्रमणाभिरामौ
गोविन्दराज चरणौ शरणं प्रपद्ये ।। ५

घोषाङ्गनाकरसरोरुहतालनाद-
सङ्गीतसम्पदनुरूपमनोज्ञनृत्तौ।
मणिक्यनूपुरमरीचिकृताङ्गलेपौ
गोविन्दराज चरणौ शरणं प्रपद्ये ।। ६

कुट्टाकतामुपगतौ सरसः प्रसह्य
मध्येसरित्सलिलमुद्धतकालियस्य।
तत्सुन्दरीनयननन्दनसंनिवेशौ
गोविन्दराजचरणौ शरणं प्रपद्ये ।। ७

वासांसि देहि तव कृष्ण वशंवदाना-
मस्माकमाकुलधियामिति गोपकन्याः।
उद्दिश्य यौ दिदधुरञ्जलिमा प्रसादाद्
गोविन्दराज चरणौ शरणं प्रपद्ये ।। ८

गोरक्षणे किल बभूव यदीयरेणु-
रक्रूरमस्तकमणेः सरणिं समेतः।
तावद्भुतावनुपमावतिपावनौ ते
गोविन्दराज चरणौ शरणं प्रपद्ये ।। ९

मल्लावहे मधुरया मधुराङ्गनानां
फुल्लारविन्ददलतल्लजलोचनानाम्।
वाण्या प्रशंसितपरार्ध्यगतिप्रकारौ
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ १०

कंसं निपात्य कनकासनतः पृथिव्या-
मुद्धृत्य सागसमनागसमुग्रसेनम्।
राज्येऽभिषिच्य विनिवारितभूमिभारौ
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ ११

दुर्योधने दुरभिमानिनि दुर्भगाणा-
मग्रेसरे भजति ते शिरसः प्रदेशम्।
धन्येन यन्निकटतः स्थितमर्जुनेन
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ १२

सारथ्यवेषसमलङ्कृतपाण्डुसूनो-
र्युद्धाङ्गणोज्ज्वलरथाञ्चलसन्निवेशौ।
सान्द्रेन्द्रनीलपरिभावुकभव्यरूपौ
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ १३

भक्त्या प्रसन्नहृदयेन धनञ्जयेन
यत्रार्चितानि कुसुमानि शिवोत्तमाङ्गे।
साक्षात्कृतानि सहसाद्भुतवैभवौ तौ
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ १४

अस्मद्गुरुप्रभृतिभिः कमलावसानै-
रादर्शितौ करुणया मम देशिकेन्द्रैः।
सत्त्वोत्तरैः सकलजीवदयापरैस्तै-
र्गोविन्दराज चरणौ शरणं प्रपद्ये ॥ १५

अस्मत्पितामहमशेषगुणाभिराम-
माचार्यरत्नमयि वादिभयङ्करार्यम्।
गोवर्धनाद्रिधृतिधारितगोप वीक्ष्य
गोविन्दराज मम दुर्लपितं क्षमस्व ॥ १६

—*—

श्री शृङ्गेरी जगद्गुरु श्री सदाशिवाभि नवनृसिंहभारतीश्रीपादैः

कृतानि स्तोत्राणि

## श्री नृसिंहभुजङ्गप्रयातस्तवः

(श्रीनृसिंहपर्वते)

ऋतं कर्तुमेवाशु नम्रस्य वाक्यं सभास्तम्भमध्याद्य आविर्बभूव।
तमानम्रलोकेष्टदानप्रचण्डं नमस्कुर्महे शैलवासं नृसिंहम्॥ १

इनान्तर्दृगन्तश्च गाङ्गेयदेहं सदोपासते यं नराः शुद्धचित्ताः।
तमस्ताघमेनोनिवृत्त्यै नितान्तं नमस्कुर्महे शैलवासं नृसिंहम्॥ २

शिवं शैववर्या हरिं वैष्णवाग्र्याः पराशक्तिमाहुस्तथा शक्तिभक्ताः।
यमेवाभिधाभिः परं तं विभिन्नं नमस्कुर्महे शैलवासं नृसिंहम्॥ ३

कृपासागरं क्लिष्टरक्षाधुरीणं कृपाणं महापापवृक्षौघभेदे।
नतालीष्टवाराशिराकाशशाङ्कं नमस्कुर्महे शैलवासं नृसिंहम्॥ ४

जगच्चेति नेतीति वाक्यैर्निषिद्ध्यावशिष्टं परब्रह्मरूपं महान्तः।
स्वरूपेण विज्ञाय मुक्ता हि यं तं नमस्कुर्महे शैलवासं नृसिंहम्॥ ५

नतान्भोगसक्तानपीहाशु भक्तिं विरक्तिं च दत्वा दृढां मुक्तिकामान्।
विधातुं करे कङ्कणं धारयन्तं नमस्कुर्महे शैलवासं नृसिंहम्॥ ६

नरो यन्मनोजापितो भक्तिभावाच्छरीरेण तेनैव पश्यत्यमोघाम्।
तनुं नारसिंहस्य वक्तीति वेदो नमस्कुर्महे शैलवासं नृसिंहम्॥ ७

यदङ्घ्र्यब्जसेवापराणां नराणां विरक्तिर्दृढा जायतेऽर्थेषु शीघ्रम्।
तमङ्गप्रभाधूतपूर्णेन्दुकोटिं नमस्कुर्महे शैलवासं नृसिंहम्॥ ८

रथाङ्गं पिनाकं वरं चाभयं यो विधत्ते कराब्जैः कृपावारिराशिः।
तमिन्द्वच्छदेहं प्रसन्नास्यपद्मं नमस्कुर्महे शैलवासं नृसिंहम्॥ ९

पिनाकं रथाङ्गं वरं चाभयं च प्रफुल्लाम्बुजाकारहस्तैर्दधानम्।
फणीन्द्रातपत्रं शुचीनेन्दुनेत्रं नमस्कुर्महे शैलवासं नृसिंहम्॥ १०

विवेकं विरक्तिं शमादेश्च षट्कं मुमुक्षां च संप्राप्य वेदान्तजालैः।
यतन्ते विबोधाय यस्यानिशं तं नमस्कुर्महे शैलवासं नृसिंहम्॥ ११

सदा नन्दिनीतीरवासैकलोलं मुदा भक्तलोकं दृशा पालयन्तम्।
विदामग्रगण्या नताः स्युर्यदङ्घ्रौ नमस्कुर्महे शैलवासं नृसिंहम्॥ १२

यदीयस्वरूपं शिखा वेदराशेरजस्रं मुदा सम्यगुद्घोषयन्ति।
नलिन्यास्तटे स्वैरसंचारशीलं चिदानन्दरूपं तमीडे नृसिंहम्॥ १३

यमाहुर्हि देहं हृषीकाणि केचित्परेऽसूंस्तथा बुद्धिशून्ये तथान्ये।
यदज्ञानमुग्धा जना नास्तिकाग्र्याः सदानन्दरूपं तमीडे नृसिंहम्॥ १४

सदानन्दचिद्रूपमाम्नायशीर्षैर्विचार्यार्यवक्त्राद्यतीन्द्रा यदीयम्।
सुखेनासते चित्तकञ्जे दधानाः सदानन्दचिद्रूपमीडे नृसिंहम्॥ १५

पुरा स्तम्भमध्याद्य आविर्बभूव स्वभक्तस्य कर्तुं वचस्तथ्यमाशु।
तमानन्दकारुण्यपूर्णान्तरङ्गं बुधा भावयुक्ता भजध्वं नृसिंहम्॥ १६

पुरा शङ्करार्या धराधीशभृत्यैर्विनिक्षिप्तवह्निप्रतप्तस्वदेहाः ।
स्तुवन्ति स्म यं दाहशान्त्यै जवात्तं बुधा भावयुक्ता भजध्वं नृसिंहम् ।।१७

सदेमानि भक्त्याख्यसूत्रेण दृब्धान्यमोघानि रत्नानि कण्ठे जना ये।
धरिष्यन्ति तान्मुक्तिकान्ता वृणीते सखीभिर्वृता शान्तिदान्त्यदिमाभिः।।

—*—

## २. श्री नृसिंहसप्तकम्

अद्वैतवास्तवमतेः प्रणमज्जनानां संपादनाय धृतमानवसिंहरूपम् ।
प्रह्लादपोषणरतं प्रणतैकवश्यं देवं मुदा कमपि नौमि कृपासमुद्रम् ।। १

नतजनवचनऋतत्वप्रकाशकालस्य दैर्घ्यमसहिष्णुः ।
आविर्बभूव तरसा यः स्तम्भान्नौमि तं महाविष्णुम् ।। २

वक्षोविदारणं यश्चक्रे हार्दं तमो हन्तुम् ।
शत्रोरपि करुणाब्धिं नरहरिवपुषं नमामि तं विष्णुम् ।। ३

रिपुहृदयस्थितराजसगुणमेवासृङ्मिषेण करजाग्रैः ।
धत्ते यस्तं वन्दे प्रह्लादपूर्वभाग्यनिचयमहम् ।। ४

प्रह्लादं प्रणमज्जन पङ्क्तेः कुर्वन्ति दिविषदो ह्यन्ये ।
प्रह्लादप्रह्लादं चित्रं कुरुते नमामि यस्तमहम् ।। ५

शरदिन्दुकुन्दधवलं करजप्रविदारितासुराधीशम् ।
चरणाम्बुजरतवाक्यं तरसैव ऋतं प्रकुर्वदहमीडे ।। ६

मुखेन रौद्रो वपुषा च सौम्यः सन्कंचनार्थं प्रकटीकरोषि ।
2 भयस्य कर्ता भयहृत्त्वमेवेत्याख्याप्रसिद्धिर्यदसंशयाऽभूत् ।। ७

—*—

## ३. श्री नृसिंहहयग्रीवस्तवः

आकण्ठमर्त्यरूपौ तत्पश्चात्सिंहतुरगरूपधरौ।
देवौ कौचित्प्रज्ञामन्यालभ्यां प्रयच्छतां मह्यम्॥ १

अद्वैतवास्तवमतिं कलयितुमेवाश्रिनम्रलोकततेः।
स्वीकृतनृसिंहनरहयरूपौ देवौ हृदम्बुजे जयताम्॥ २

—*—

श्रीरङ्गक्षेत्रे

## ४. श्रीरङ्गनाथस्तवः

क्षीराम्भोधिलसत्फणीन्द्रफलके कामं सदा शायिनी
किं चाम्भोजभवस्य भीतिहतये घ्नन्ती मधुं कैटभम्।
लक्ष्म्युत्सङ्गलसत्पदाम्बुजयुगली कारुण्यवारांनिधिः
मुद्रा काचन मुक्तिदानकुशला निद्राति जागर्ति वा॥

—*—

श्री भूवराहक्षेत्रे

## ५. श्रीभूवराहस्तुतिः

जायते वरमहः पदपद्मप्रेक्षणेन तव नम्रजनानाम्।
भूवराह करुणामृतराशे त्वां वराह इति तत्कथयन्ति॥ १

राजराजपरिपूजितपाद प्राणनाथ सरिदीश्वरपुत्र्याः।
श्रीवराहपुरसंस्थितलोकान्भूवराह परिपाहि कृपाब्धे॥ २

—*—

कालटिक्षेत्रे

## ६. श्री कृष्णषट्कम्

भगवत्पदकरपङ्कजपूजितपदपद्म शङ्खचक्रधर ।
यदुनन्दन नतनन्दन पाहि सदा मां कृपापयोराशे ।। १

नवनीतादप्यधिकं मृदु मम हृदयं प्रणम्ररक्षायाम् ।
इति बोधयितुं धत्से नवनीतं किं करे कृष्ण ।। २

गोगोपमुक्तिदं त्वां गोभारहरं कृपापयोराशिम् ।
गोपीजनार्चितपदं गोप्राप्त्यै नौमि देवकीसूनुम् ।। ३

गोवर्धनमन्दरधरधरणाद्गर्वायसे वृथा शौरे ।
यद्यस्ति शक्तिरधुना धर मां धरणीरमार्चिताङ्घ्रियुग ।। ४

अल्पबलकैटभादीन्हत्वा गर्वं वृथा कुरुषे ।
मोहाभिधानमसुरं जहि शीघ्रं शक्तिरस्ति यदि कृष्ण ।। ५

शङ्करगुरुवरकरवरकमलार्चितपादपद्मयुग कृष्ण ।
किङ्करवरजनबृन्दं तोषय तोयालिशयनकमलेश ।। ६

—*—

अनन्तपद्मनाभक्षेत्रे

## ७. श्री पद्मनाभस्तोत्रम्

पद्मनाभ करुणामृतराशे सद्म हेतुलवशून्यकृपायाः ।
छद्महारितमहाबलिसंपद्धिद्म एव तव वीर्यमनन्तम् ।। १

नाभ्याः सरस्त्वेन हि वर्णनं तु सत्यं तदा स्यात्किल पद्मनाभ ।
यदा त्वदीयं विषयीकरोति नाभिं न चेद्याति कथं प्रमात्वम् ।। २

नाभीपद्मे पुत्रं वक्षसि कान्तां च सन्दधत्तान्तः ।
स्वपिषि सदा किं विष्णो नम्रायास्मै द्रुतं ब्रूहि ।। ३

पापाब्धौ बडवानलस्य हि शिखा जाड्यान्धकारे रविः
भाग्याब्धौ शरदिन्दुपङ्क्तिरमला त्वन्नामसङ्कीर्तनम् ।
भक्तानां परिपोषणे च जननी स्वात्मावबोधे पिता
कस्तस्माद्विमुखो भवेद्भुवि नरो नो चेन्महापापभाक् ।।

क्षीराम्भोनिधिराजमानफणिराण्मध्ये शयाना सदा
लक्ष्मीपाणिपयोजमर्दितपदा कारुण्यवारांनिधिः ।
कुर्वाणा मधुना च कैटभयुजा युद्धं च दोर्भ्यां मुहु-
र्मुद्रा काचन मुक्तिदानकुशला निद्राति जागर्ति वा ।।

पद्मनाभ तव पादसरोजासक्तचित्तमवनीपतिमेनम् ।
पाहि साश्रितसबन्धुसविद्वल्लोकमादरभरेण सराष्ट्रम् ।। ६

सामोदं प्रदिशन्तु वञ्चिकुलभूमूलर्क्षराजाय वाग्-
देवीचन्द्रकलाधरेभवदनाः कारुण्यवाराशयः ।
दीर्घायुर्दृढगात्रतामलयशांस्याचन्द्रतिग्मांशुभं
धर्माध्वन्यधिकां प्रवृत्तिमचलामच्छिन्नसत्सन्ततिम् ।। ७

पायासुर्जगदम्बिकेन्दुविलसच्छीर्षेभवक्त्राः सदा
राज्ञ्यौ केरलदेशभाग्यलतिके कारुण्ययुग्भिर्मुदा ।
दृग्भिः पादविनम्रसौख्यविततेः संपादिकाभिर्जवाद्-
दत्त्वा सन्ततिमाशु सद्गुणयुतामारोग्यदीर्घायुषी ।। ८

मोचितः किं गजाधीश पद्मनाभेन सत्वरम् ।
दृढभावनया तस्य पद्मनाभोऽभवद्गजेट् ।। ९

श्रीभूमिपाणिसरसीरुहसेविताङ्घ्रे
श्रीवत्सकौस्तुभधर प्रणतार्तिहारिन्।
श्रीकण्ठमित्र दिननाथसुधांशुनेत्र
श्रीपद्मनाभ मम देहि पदावलंबम्॥ १०

नागेन्द्र भोगशयन प्रणतालिवाञ्छा-
संपूरणामरतरो विधियोनिनाभे।
नाकाधिपादिपरिपूजितपादपद्म
श्रीपद्मनाभ मम देहि करावलम्बम्॥ ११

कमलाकरपद्मपूजितं करुणादुग्धपयोधिमध्यगम्।
भुजगाधिप भोगशायिनं कलये कंचन देवसत्तमम्॥ १२

—*—

श‍ृङ्गेरीजगद्गुरु श्री भारतीतीर्थश्रीचरणकृतस्तोत्रयुग्मम्
चित्रानदीतीरगत सुन्दरपाण्ड्यपुरग्रामविराजमान

## १. श्रीराजगोपालपञ्चरत्नस्तुतिः

स्वर्णपाण्ड्यपुरभ्राजद् राजगोपालमादरात्।
भक्तकल्पद्रुमं नित्यं नमामोऽभीष्टसिद्धये॥ १

सुन्दरपाण्ड्यपुरे विलसन्तं सुन्दरमूर्तिमुदारचरित्रम्।
इन्दिरया परिसेवितपादं तं दरहासमुखाम्बुजमीडे॥ २

रागादिरोगविनिवारणदीक्षितस्य
राजाधिराजकमनीयपदाम्बुजस्य।
राकासुधांशु रमणीय मुखाम्बुजस्य
श्री राजगोपलसुविभोश्चरणौ प्रपद्ये॥ ३

श्री राजगोपल यशोविशाल श्रीदेवकीपाल सुरारिकाल।
वशीकृतव्याल विशालफाल स्वभक्तजालं परिपाहि नित्यम्।। ४

प्रभू राजगोपाल आर्तार्तिहन्ता दयासागरो देवराजादिवन्द्यः।
सतामाश्रयः सामगेयः सुरूपः सदाऽयं प्रदद्याज्जगन्मङ्गलानि।। ५

—*—

## २. गरुडगमनस्तुतिः

गरुडगमन तव चरणकमलमिह मनसि लसतु मम नित्यम्।
मम तापमपाकुरु देव मम पापमपाकुरु देव।

जलजनयन विधिनमुचिहरणमुख विबुधविनुत पदपद्म।
भुजगशयन भव मदनजनक मम जननमरणभयहारिन्।।

शङ्खचक्रधर दुष्टदैत्यहर सर्वलोकशरण।
अगणितगुणगण अशरणशरणद विदलित सुररिपुजाल।।

भक्तवर्यमिह भूरिकरुणया पाहि भारतीतीर्थम्।।

—*—

तिरुपतिगिरौ

## श्री वेङ्कटेशसुप्रभातस्तोत्रम्

कौसल्या सुप्रजा राम पूर्वा सन्ध्या प्रवर्तते।
उत्तिष्ठ नरशार्दूल कर्तव्यं दैवमाह्निकम्।। १

उत्तिष्ठोत्तिष्ठ गोविन्द उत्तिष्ठ गरुडध्वज।
उत्तिष्ठ कमलाकान्त त्रैलोक्यं मङ्गलं कुरु।। २

मातः समस्तजगतां मधुकैटभारेः
वक्षो विहारिणि मनोहरदिव्यमूर्ते।
श्रीस्वामिनि श्रितजन प्रियदानशीले
श्रीवेङ्कटेशदयिते तव सुप्रभातम्॥ ३

तव सुप्रभातमरविन्दलोचने भवतु प्रसन्नमुखचन्द्रमण्डले।
विधिशङ्करेन्द्रवनिताभिरर्चिते वृषशैलनाथदयिते दयानिधे॥ ४

अत्र्यादि सप्त ऋषयः समुपास्य सन्ध्यां
आकाशसिन्धुकमलानि मनोहराणि।
आदाय पादयुगमर्चयितुं प्रपन्नाः
शेषाद्रिशेखरविभो तव सुप्रभातम्॥ ५

पञ्चाननाब्जभव षण्मुख वासवाद्याः
त्रैविक्रमादिचरितं विबुधाः स्तुवन्ति।
भाषापतिः पठति वासर शुद्धिमारात्
शेषाद्रिशेखरविभो तव सुप्रभातम्॥ ६

ईषत्प्रफुल्ल सरसीरुहनारिकेल-
पूगद्रुमादि सुमनोहरपालिकानाम्।
आवाति मन्दमनिलः सह दिव्यगन्धैः
शेषाद्रिशेखरविभो तव सुप्रभातम्॥ ७

उन्मील्य नेत्रयुगमुत्तमपञ्जरस्थाः
पात्रावशिष्टकदलीफलपायसानि।
भुक्त्वा सलीलमथ केलिशुकाः पठन्ति
शेषाद्रिशेखरविभो तव सुप्रभातम्॥ ८

तन्त्रीप्रहर्षमधुरस्वनया विपञ्च्या
गायत्यनन्तचरितं तव नारदोऽपि।
भाषा समग्रमसकृत्करचाररम्यं
शेषाद्रिशेखरविभो तव सुप्रभातम्॥ ९

भृङ्गावली च मकरन्दरसानुविद्ध-
झङ्कारगीत निनदैः सह सेवनाय।
निर्यात्युपान्तसरसीकमलोदरेभ्यः
शेषाद्रिशेखर विभो तव सुप्रभातम्॥ १०

योषागणेन वरदध्नि विमथ्यमाने
घोषालयेषु दधिमन्थनतीव्रघोषाः।
रोषात्कलिं विदधते ककुभश्च कुम्भाः
शेषाद्रिशेखर विभो तव सुप्रभातम्॥ ११

पद्मेशमित्रशतपत्रगतालिवर्गाः
हर्तुं श्रियं कुवलयस्य निजाङ्गलक्ष्म्या।
भेरीनिनादमिव बिभ्रति तीव्रनादं
शेषाद्रिशेखरविभो तव सुप्रभातम्॥ १२

श्रीमन्नभीष्ट वरदाखिललोकबन्धो श्री श्रीनिवास जगदेकदयैकसिन्धो।
श्रीदेवतागृहभुजान्तरदिव्यमूर्ते श्रीवेङ्कटाचलपते तव सुप्रभातम्॥ १३

श्रीस्वामिपुष्करिणिकाप्लवनिर्मलाङ्गाः
श्रेयोऽर्थिनो हर विरिञ्चि सनन्दनाद्याः।
द्वारे वसन्ति वरवेत्रहतोत्तमाङ्गाः
श्रीवेङ्कटाचलपते तव सुप्रभातम्॥ १४

श्रीशेषशैल गरुडाचल वेङ्कटाद्रि
नारायणाद्रि वृषभाद्रि वृषाद्रिमुख्याम्।
आख्यां त्वदीयवसतेरनिशं वदन्ति
श्रीवेङ्कटाचलपते तव सुप्रभातम्॥ १५

सेवापराः शिवसुरेशकृशानुधर्म-
रक्षोऽम्बुनाथ पवमान धनाधिनाथाः।
बद्धाञ्जलिप्रविलसन्निजशीर्षदेशाः
श्रीवेङ्कटाचलपते तव सुप्रभातम्॥ १६

धाटीषु ते विहगराज मृगाधिराज
नागाधिराज गजराज हयाधिराजाः।
स्वस्वाधिकारमहिमाधिकमर्थयन्ते
श्रीवेङ्कटाचलपते तव सुप्रभातम्॥ १७

सूर्येन्दुभौमबुधवाक्पतिकाव्य सौरि-
स्वर्भानुकेतु दिविषत्परिषत्प्रधानाः।
त्वद्दास दासचरमावधि दासदासाः
श्रीवेङ्कटाचलपते तव सुप्रभातम्॥ १८

त्वत्पादधूलिभरितस्फुरितोत्तमाङ्गाः
स्वर्गापवर्गनिरपेक्षनिजान्तरङ्गाः।
कल्पागमाकलनयाऽऽकुलतां लभन्ते
श्रीवेङ्कटाचलपते तव सुप्रभातम्॥ १९

त्वद्गोपुराग्रशिखराणि निरीक्षमाणाः स्वर्गापवर्गपदवीं परमां श्रयन्तः।
मर्त्या मनुष्यभुवने मतिमाश्रयन्ते श्रीवेङ्कटाचलपते तव सुप्रभातम्॥२०

श्री भूमिनायक दयादिगुणामृताब्धे देवाधिदेव जगदेकशरण्यमूर्ते।
श्रीमन्ननन्तगरुडादिभिरर्चिताङ्घ्रे श्रीवेङ्कटाचलपते तव सुप्रभातम्॥ २१

श्रीपद्मनाभ पुरुषोत्तम वासुदेव वैकुण्ठ माधव जनार्दन चक्रपाणे।
श्रीवत्सचिह्न शरणागतपारिजात श्रीवेङ्कटाचलपते तव सुप्रभातम्॥२२

कन्दर्पदर्पहरसुन्दरदिव्यमूर्ते कान्ताकुचाम्बुरुहकुड्मलोलदृष्टे।
कल्याणनिर्मलगुणाकरदिव्यकीर्ते श्रीवेङ्कटाचलपते तव सुप्रभातम्॥२३

मीनाकृते कमठकोलनृसिंहवर्णिन् स्वामिन् परश्वथतपोधन रामचन्द्र।
शेषांशराम यदुनन्दन कल्किरूप श्रीवेङ्कटाचलपते तव सुप्रभातम्॥ २४

एलालवङ्गघनसारसुगन्धतीर्थं
दिव्यं वियत्सरिति हेमघटेषु पूर्णम्।
धृत्वाऽद्य वैदिकशिखामणयः प्रहृष्टाः
तिष्ठन्ति वेङ्कटपते तव सुप्रभातम्॥ २५

भास्वानुदेति विकचानि सरोरुहाणि
संपूरयन्ति निनदैः ककुभो विहङ्गाः।
श्रीवैष्णवास्सततमर्थितमङ्गलास्ते
धामाश्रयन्ति तव वेङ्कट सुप्रभातम्॥ २६

ब्रह्मादयस्सुरवरास्समहर्षयस्ते
सन्तस्सनन्दनमुखास्तव योगिवर्याः।
धामान्तिके तव हि मङ्गलवस्तुहस्ताः
श्रीवेङ्कटाचलपते तव सुप्रभातम्॥ २७

लक्ष्मीनिवास निरवद्यगुणैकसिन्धो
संसारसागरसमुत्तरणैकसेतो।

वेदान्तवेद्य निजवैभव भक्तभोग्य
श्री वेङ्कटाचलपते तव सुप्रभातम् ॥ २८

इत्थं वृषाचलपतेरिह सुप्रभातम्
ये मानवाः प्रतिदिनं पठितुं प्रवृत्ताः ।
तेषां प्रभातसमये स्मृतिरङ्गभाजां
प्रज्ञां परार्थसुलभां परमां प्रसूते ॥ २९

—*—

## ॥ वेङ्कटेशस्तोत्रम् ॥

कमलाकुचचूचुककुङ्कुमतो नियतारुणितातुलनीलतनो ।
कमलायतलोचन लोकपते विजयीभव वेङ्कटशैलपते ॥ १

सचतुर्मुखषण्मुखपञ्चमुखप्रमुखाखिलदैवतमौलिमणे ।
शरणागतवत्सल सारनिधे परिपालय मां वृषशैलपते ॥ २

अतिवेलतया तव दुर्विषहैरनुवेलकृतैरपराधशतैः ।
भरितं त्वरितं वृषशैलपते परया कृपया परिपाहि हरे ॥ ३

अधिवेङ्कटशैलमुदारमते जनताभिमताधिकदानरतात् ।
परदेवतया गदितान्निगमैः कमलादयितान्न परं कलये ॥ ४

कलवेणुरवावशगोपवधूशतकोटिवृता स्मरकोटिसमात् ।
प्रतिवल्लविकाभिमतात्सुखदात् वसुदेवसुतान्न परं कलये ॥ ५

अभिरामगुणाकर दाशरथे जगदेकधनुर्धर धीरमते ।
रघुनायक राम रमेश विभो वरदो भव देव दयाजलधे ॥ ६

अवनीतनयाकमनीयकरं रजनीकरचारुमुखाम्बुरुहम् ।
रजनीचरराजतमोमिहरं महनीयमहं रघुराममये ॥ ७

सुमुखं सुहृदं सुलभं सुखदं स्वनुजं च सुकायममोघशरम्।
अपहाय रघूद्वहमन्यमहं न कथञ्चन कञ्चन जातु भजे ॥ ८

विना वेङ्कटेशं न नाथो न नाथः सदा वेङ्कटेशं स्मरामि स्मरामि।
हरे वेङ्कटेश प्रसीद प्रसीद प्रियं वेङ्कटेश प्रयच्छ प्रयच्छ ॥ ९

अहं दूरतस्ते पदाम्भोजयुग्म प्रणामेच्छयाऽऽगत्य सेवां करोमि।
सकृत्सेवया नित्यसेवाफलं त्वं प्रयच्छ प्रयच्छ प्रभो वेङ्कटेश ॥ १०

अज्ञानिना मया दोषान् अशेषान्विहितान् हरे।
क्षमस्व त्वं क्षमस्व त्वं शेषशैलशिखामणे ॥ ११

—*—

## वेङ्कटेश्वरकरावलम्बस्तोत्रम्

### नृसिंहयतिप्रणीतम्

श्रीशेषशैलसुनिकेतन दिव्यमूर्ते नारायणाच्युत हरे नलिनायताक्ष।
लीलाकटाक्षपरिरक्षितसर्वलोक श्रीवेङ्कटेश मम देहि करावम्बम् ॥ १

ब्रह्मादिनन्दितपदाम्बुज शङ्खपाणे श्रीमत्सुदर्शनसुशोभितदिव्यहस्त।
कारुण्यसागर शरण्य सुपुण्यमूर्ते श्रीवेङ्कटेश मम देहि करावलम्बम् ॥ २

वेदान्तवेद्य भवसागरकर्णधार श्रीपद्मनाभ कमलार्चितपादपद्म।
लोकैकपावन परात्पर पापहारिन् श्रीवेङ्कटेश मम देहि करावलम्बम् ॥ ३

लक्ष्मीपते निगमलक्ष्य निजस्वरूप कामादिदोषपरिहारित बोधदायिन्।
दैत्यारिमर्दन जनार्दन वासुदेव श्रीवेङ्कटेश मम देहि करावलम्बम् ॥ ४

तापत्रयं हर विभो रभसान्मुरारे संरक्ष मां करुणया सरसीरुहाक्ष।
मच्छिष्यमप्यनुदिनं परिरक्ष विष्णो श्रीवेङ्कटेश मम देहि करावलम्बम् ॥ ५

श्रीजातरूपनवरत्नलसत्किरीटकस्तूरिकातिलकशोभिललाटदेश।
राकेन्दुबिम्बवदनाम्बुज वारिजाक्ष श्रीवेङ्कटेश मम देहि करावलम्बम्।।६

वन्दारुलोकवरदान वचोविलास रत्नाढ्यहारपरिशोभितकम्बुकण्ठ।
केयूररत्न सुविभासि दिगन्तराल श्रीवेङ्कटेश मम देहि करावलम्बम्।। ७

दिव्याङ्गदाश्रितभुजद्वय मङ्गलात्मन् केयूरभूषण सुशोभितदीर्घबाहो।
नागेन्द्रकङ्कणकरद्वयकामदायिन् श्रीवेङ्कटेश मम देहि करावलम्बम्।। ८

स्वामिन् जगद्धरण वारिधिमध्यमग्नं
मामुद्धराद्य कृपया करुणापयोधे।
लक्ष्मीं च देहि विपुलामृणवारणाय
श्रीवेङ्कटेश मम देहि करावलम्बम्।।९

दिव्याङ्गरागपरिचर्चितकोमलाङ्ग पीताम्बरावृततनो तरुणार्कभास।
सत्काञ्चनाभपरिधान सुपट्टबन्ध श्रीवेङ्कटेश मम देहि करावलम्बम्।। १०

रत्नाढ्यदामसुनिबद्धकटिप्रदेश माणिक्यदर्पणसुसन्निभजानुदेश।
जङ्घाद्वयेन परिमोहितसर्वलोक श्रीवेङ्कटेश मम देहि करावलम्बम्।। ११

लोकैकपावन लसत्परिशोभिताङ्घ्रे
त्वत्पाददर्शन दिनेशमहाप्रसादात्।
हार्दं तमश्च सकलं लयमाप भूमन्
श्रीवेङ्कटेश मम देहि करावलम्बम्।। १२

कामादिवैरिनिवहोऽप्रियतां प्रयातः
दारिद्र्यमप्यपगतं सकलं दयालो।
दीनं च मां समवलोक्य दयार्द्रदृष्ट्या
श्रीवेङ्कटेश मम देहि करावलम्बम्।। १३

श्री वेङ्कटेशपदपङ्कजषट्पदेन
श्रीमन्नृसिंहयतिना रचितं जगत्याम्।
एतत्पठन्ति मनुजाः पुरुषोत्तमस्य
ते प्राप्नुवन्ति परमां पदवीं मुरारेः।। १४

—*—

## ।। श्रीवेङ्कटेशप्रपत्तिः ।।

ईशानां जगतोऽस्य वेङ्कटपतेर्विष्णोः परां प्रेयसीं
तद्वक्षःस्थलनित्यवासरसिकां तत्क्षान्तिसंवर्धिनीम्।
पद्मालङ्कृतपाणिपल्लवयुगां पद्मासनस्थां श्रियं
वात्सल्यादिगुणोज्ज्वलां भगवतीं वन्दे जगन्मातरम्।। १

श्रीमन् कृपाजलनिधे कृतसर्वलोक
सर्वज्ञ शक्त नतवत्सल सर्वशेषिन्।
स्वामिन् सुशील सुलभाश्रितपारिजात
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये।। २

आनू पुरार्पितसुजातसुगन्धिपुष्प-
सौरभ्यसौरभकरौ समसन्निवेशौ।
सौम्यौ सदाऽनुभवनेऽपि नवानुभाव्यौ
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये।। ३

सद्योविकासिसमुदित्वरसान्द्रराग-
सौरभ्यनिर्भरसरोरुहसाम्यवार्ताम्।
सम्यक्षु साहसपदेषु विलेखयन्तौ
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये।। ४

रेखामयध्वजसुधाकलशातपत्र-
वज्राङ्कुशाम्बुरुहकल्पकशङ्खचक्रैः।
भव्यैरलङ्कृततलौ परतत्त्वचिह्नैः
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥ ५

ताम्रोदरद्युतिपराजितपद्मरागौ
बाह्यैर्महोभिरभिभूतमहेन्द्रनीलौ।
उद्यन्नखांशुभिरुदस्तशशाङ्कभासौ
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥ ६

सप्रेमभीति कमलाकरपल्लवाभ्यां
संवाहनेऽपि सपदि क्लममादधानौ।
कान्ताववाङ्मनसगोचरसौकुमार्यौ
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥ ७

लक्ष्मीमहीतदनुरूपिनिजानुभाव-
नीलादिदिव्यमहिषीकरपल्लवानाम्।
आरुण्यसंक्रमणतः किल सान्द्ररागौ
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥ ८

नित्यानमद्विधिशिवादिकिरीटकोटि-
प्रत्युप्तदीप्तनवरत्नमहःप्ररोहैः।
नीराजनाविधिमुदारमुपादधानौ
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥ ९

विष्णोः पदे परम इत्युदितप्रशंसौ
यौ मध्व उत्स इति भोग्यतयाऽप्युपात्तौ।
भूयस्तथेति तव पाणितलप्रदिष्टौ
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥ १०

पार्थाय तत्सदृशसारथिना त्वयैव
यौ दर्शितौ स्वचरणौ शरणं व्रजेति।
भूयोऽपि मह्यमिह तौ करदर्शितौ ते
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये॥ ११

मन्मूर्ध्नि कालियफणे विकटाटवीषु
श्रीवेङ्कटाद्रिशिखरे शिरसि श्रुतीनाम्।
चित्तेऽप्यनन्यमनसां सममाहितौ ते
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये॥ १२

अम्लानहृष्यदवनीतलकीर्णपुष्पौ
श्रीवेङ्कटाद्रिशिखराभरणायमानौ।
आनन्दिताखिलमनोनयनौ तवैतौ
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये॥ १३

प्रायः प्रपन्नजनताप्रथमावगाह्यौ
मातुस्स्तनाविव शिशोरमृतायमानौ।
प्राप्तौ परस्परतुलामतुलान्तरौ ते
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये॥ १४

सत्त्वोत्तरैस्सततसेव्यपदाम्बुजेन
संसारतारकदयार्द्रदृगञ्चलेन।
सौम्योपयन्तृमुनिना मम दर्शितौ ते
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये॥ १५

श्रीश श्रिया घटिकया त्वदुपायभावे
प्राप्ये त्वयि स्वयमुपेयतया स्फुरन्त्या।

नित्याश्रिताय निरवद्यगुणाय तुभ्यं
स्यां किङ्करो वृषगिरीश न जातु मह्यम् ।। १६

—*—

## ।। श्रीवेङ्कटेश्वरमङ्गलस्तोत्रम् ।।

श्रीवेङ्कटेश्वराय नमः ।
श्रियःकान्ताय कल्याण निधये निधयेऽर्थिनाम् ।
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ।। १

लक्ष्मीसविभ्रमालोकसुभ्रूविभ्रमचक्षुषे ।
चक्षुषे सर्वलोकानां वेङ्कटेशाय मङ्गलम् ।। २

श्रीवेङ्कटाद्रिशृङ्गाग्र मङ्गलाभरणाङ्घ्रये ।
मङ्गलानां निवासाय श्रीनिवासाय मङ्गलम् ।। ३

सर्वावयवसौन्दर्यसंपदा सर्वचेतसाम् ।
सदा संमोहनायास्तु वेङ्कटेशाय मङ्गलम् ।। ४

नित्याय निरवद्याय सत्यानन्दचिदात्मने ।
सर्वान्तरात्मने श्रीमद्वेङ्कटेशाय मङ्गलम् ।। ५

स्वतः सर्वविदे सर्वशक्तये सर्वशेषिणे ।
सुलभाय सुशीलाय वेङ्कटेशाय मङ्गलम् ।। ६

परस्मै ब्रह्मणे पूर्णकामाय परमात्मने ।
प्रयुञ्जे परतत्त्वाय वेङ्कटेशाय मङ्गलम् ।। ७

आकालतत्त्वविश्रान्तामात्मानमनुपश्यताम्।
अतृप्तामृतरूपाय वेङ्कटेशाय मङ्गलम्॥ ८

प्रायः स्वचरणौ पुंसां शरण्यत्वेन पाणिना।
कृपया दिशते श्रीमद्वेङ्कटेशाय मङ्गलम्॥ ९

दयामृततरङ्गिण्यास्तरङ्गैरिव शीतलैः।
अपाङ्गैः सिंचते विश्वं वेङ्कटेशाय मङ्गलम्॥ १०

स्रग्भूषाम्बरहेतीनां सुषमावहमूर्तये।
सर्वार्तिशमनायास्तु वेङ्कटेशाय मङ्गलम्॥ ११

श्रीवैकुण्ठविरक्ताय स्वामिपुष्करिणीतटे।
रमया रममाणाय वेङ्कटेशाय मङ्गलम्॥ १२

श्रीमत्सुन्दरजामातृमुनिमानसवासिने।
सर्वलोकनिवासाय श्रीनिवासाय मङ्गलम्॥ १३

नमः श्रीवेङ्कटेशाय शुद्धज्ञानस्वरूपिणे।
वासुदेवाय शान्ताय श्रीनिवासाय मङ्गलम्॥ १४

मङ्गलाशासनपरैर्मदाचार्यपुरोगमैः।
सर्वैश्च पूर्वैराचार्यैः सत्कृतायास्तु मङ्गलम्॥ १५

—*—

श्रीवेदान्तदेशिककृतम्

# दयाशतकम्

## (तिरुपति क्षेत्रे)

प्रपद्ये तं गिरिं प्रायः श्रीनिवासानुकम्पया।
इक्षुसारस्रवन्त्येव यन्मूर्त्या शर्करायितम्॥ १

विगाहे तीर्थ बहुलां शीतलां गुरुसन्ततिम्।
श्रीनिवास दयाम्भोधि परीवाह परम्पराम्॥ २

कृतिनः कमलावास कारुण्यैकान्तिनो भजे।
धत्ते यत्सूक्ति रूपेण त्रिवेदी सर्वयोग्यताम्॥ ३

पराशर मुखान् वन्दे भगीरथ नये स्थितान्।
कमला कान्त कारुण्य गङ्गाप्लावित मद्विधान्॥ ४

अशेष विघ्न शमनं अनीकेश्वरमाश्रये।
श्रीमतः करुणाम्भोधौ शिक्षा स्रोत इवोत्थितम्॥ ५

समस्त जननीं वन्दे चैतन्य स्तन्य दायिनीम्।
श्रेयसीं श्रीनिवासस्य करुणामिव रूपिणीम्॥ ६

वन्दे वृषगिरीशस्य महिषीं विश्व धारिणीम्।
तत्कृपाप्रतिघातानां क्षमया वारणं यया॥ ७

निशामयतु मां नीला यद्भोगपटलैर्ध्रुवम्।
भावितं श्रीनिवासस्य भक्तदोषेष्वदर्शनम्॥ ८

कमप्यनवधिं वन्दे करुणा वरुणालयम्।
वृषशैल तटस्थानां स्वयं व्यक्तिमुपागतम्॥ ९

अकिञ्चन निधिं सूतिं अपवर्ग त्रिवर्गयोः ।
अञ्जनाद्रीश्वर दयां अभिष्टौमि निरञ्जनाम् ।। १०

अनुचर शक्त्यादि गुणां अग्रेसर बोध विरचितालोकाम् ।
स्वाधीन वृषगिरीशां स्वयं प्रभूतां प्रमाणयामि दयाम् ।। ११

अपि निखिल लोक सुचरितमुष्टिंधय दुरितमूर्च्छनाजुष्टम् ।
संजीवयतु दये मां अञ्जन गिरिनाथ रञ्जनी भवती ।। १२

भगवति दये भवत्या वृषगिरिनाथे समाप्लुते तुङ्गे ।
अप्रतिघ मज्जनानां हस्तालम्बो मदागसां मृग्यः ।। १३

कृपण जन कल्प लतिकां कृतापराधस्य निष्क्रियामाद्याम् ।
वृषगिरिनाथ दये त्वां विदन्ति संसार तारिणीं विबुधाः ।। १४

वृषगिरि गृहमेधि गुणाः बोध बलैश्वर्य वीर्य शक्ति मुखाः ।
दोषा भवेयुरेते यदि नाम दये त्वया विनाभूताः ।। १५

आसृष्टि सन्ततानां अपराधानां निरोधिनीं जगतः ।
पद्मा सहाय करुणे प्रतिसञ्चर केलिमाचरसि ।। १६

अचिदविशिष्टान् प्रलये जन्तूनवलोक्य जात निर्वेदा ।
करण कलेबर योगं वितरसि वृषशैलनाथकरुणे त्वम् ।। १७

अनुगुण दशार्पितेन श्रीधर करुणे समाहित स्नेहा ।
शमयसि तमः प्रजानां शास्त्रमयेन स्थिर प्रदीपेन ।। १८

रूढा वृषाचलपतेः पादे मुख कान्ति पत्रलच्छाया ।
करुणे सुखयसि विनतान् कटाक्ष विटपैः करापचेय फलैः ।। १९

नयने वृषाचलेन्दोः तारा मैत्रीं दधानया करुणे ।
दृष्टस्त्वयैव जनिमान् अपवर्गमकृष्टपच्यमनुभवति ।। २०

समयोपनतैस्तव प्रवाहैः अनुकम्पे कृत संप्लवा धरित्री ।
शरणागत सस्य मालिनीयं वृषशैलेश कृषीवलं धिनोति ।। २१

कलशोदधि संपदो भवत्याः करुणे सन्मति मन्थ संस्कृतायाः ।
अमृतांशमवैमि दिव्य देहं मृत सञ्जीवनमञ्जनाचलेन्दोः ।। २२

जलधेरिव शीतता दये त्वं वृषशैलाधिपतेः स्वभाव भूता ।
प्रलयारभटी नटीं तदीक्षां प्रसभं ग्राहयसि प्रसत्ति लास्यम् ।। २३

प्रणत प्रतिकूल मूल घाती प्रतिघः कोऽपि वृषाचलेश्वरस्य ।
कलमे यवसापचाय नीत्या करुणे किङ्करतां तवोपयाति ।। २४

अबहिष्कृत निग्रहान् विदन्तः कमलाकान्त गुणान् स्वतन्त्रतादीन् ।
अविकल्पमनुग्रहं दुहानां भवतीमेव दये भजन्ति सन्तः ।। २५

कमलानिलयस्त्वया दयालुः करुणे निष्करुणा निरूपणे त्वम् ।
अत एव हि तावकाश्रितानां दुरितानां भवति त्वदेव भीतिः ।। २६

अतिलङ्घितशासनेष्वभीक्ष्णं वृषशैलाधिपतिर्विजृम्भितोष्मा ।
पुनरेव दये क्षमा निदानैः भवतीमाद्रियते भवत्यधीनै; ।। २७

करुणे दुरितेषु मामकेषु प्रतिकारान्तर दुर्जयेषु खिन्नः ।
कवचायितया त्वयैव शार्ङ्गी विजयस्थानमुपाश्रितो वृषाद्रिम् ।। २८

मयि तिष्ठति दुष्कृतां प्रधाने मितदोषानितरान् विचिन्वती त्वम् ।
अपराधगणैरपूर्णकुक्षिः कमलाकान्तदये कथं भवित्री ।। २९

अहमस्म्यपराध चक्रवर्ती करुणे त्वं च गुणेषु सार्वभौमी ।
विदुषी स्थितिमीदृशीं स्वयं मां वृषशैलेश्वरपादसात्कुरु त्वम् ।। ३०

अशिथिल करणेऽस्मिन्नक्षत श्वास वृत्तौ
वपुषि गमन योग्ये वासमासादयेयम् ।

वृषगिरि कटकेषु व्यञ्जयत्सु प्रतीतैः
मधुमथन दये त्वां वारि धारा विशेषैः ॥ ३१

अविदित निज योग क्षेममात्मानभिज्ञं
गुण लव रहितं मां गोप्तुकामा दये त्वम्।
परवति चतुरैस्ते विभ्रमैः श्रीनिवासे
बहुमतिमनपायां विन्दसि श्रीधरण्योः ॥ ३२

फल वितरण दक्षं पक्षपातानभिज्ञं
प्रगुणमनुविधेयं प्राप्य पद्मासहायम्।
महति गुण समाजे मानपूर्वं दये त्वं
प्रतिवदसि यथार्हं पाप्मनां मामकानाम्॥ ३३

अनुभवितुमघौघं नालमागामिकालः
प्रशमयितुमशेषं निष्क्रियाभिर्न शक्यम्।
स्वयमिति हि दये त्वं स्वीकृत श्रीनिवासा
शिथिलित भव भीतिः श्रेयसे जायसे नः ॥ ३४

अवतरण विशेषैरात्म लीलापदेशैः
अवमतिमनुकम्पे मन्द चित्तेषु विन्दन्।
वृषभ शिखरिनाथस्त्वन्निदेशेन नूनं
भजति शरण भाजां भाविनो जन्मभेदान् ॥ ३५

परहितमनुकम्पे भावयन्त्यां भवत्यां
स्थिरमनुपधि हार्दं श्रीनिवासो दधानः।
ललित रुचिषु लक्ष्मी भूमिनीलासु नूनं
प्रथयति बहुमानं त्वत्प्रतिच्छन्द बुद्ध्या ॥ ३६

वृषगिरि सविधेषु व्याजतो वास भाजां
दुरित कलुषितानां दूयमाना दये त्वम्।
करण विलय काले कान्दिशीक स्मृतीनां
स्मरयसि बहु लीलं माधवं सावधाना ।। ३७

दिशि दिशि गति विद्भिर्देशिकैर्नीयमाना
स्थिरतरमनुकम्पे स्त्यान लग्ना गुणैस्त्वम्।
परिगत वृषशैलं पारमारोपयन्ती
भवजलधि गतानां पोत पात्री भवित्री ।। ३८

परिमित फल सङ्गात् प्राणिनः किंपचानाः
निगम विपणि मध्ये नित्य मुक्तानुषक्तम्।
प्रसदनमनुकम्पे प्राप्तवत्या भवत्या
वृषगिरि हरिनीलं व्यञ्जितं निर्विशन्ति ।। ३९

त्वयि बहुमति हीनः श्रीनिवासानुकम्पे
जगति गतिमिहान्यां देवि संमन्यते यः ।
स खलु विबुध सिन्धौ सन्निकर्षे वहन्त्यां
शमयति मृगतृष्णावीचिकाभिः पिपासाम्।। ४०

आज्ञां ख्यातिं धनमनुचरानाधिराज्यादिकं वा
काले दृष्ट्वा कमल वसतेरप्यकिञ्चित्कराणि।
पद्माकान्तं प्रणिहितवतीं पालनेऽनन्य साध्ये
साराभिज्ञा जगति कृतिनः संश्रयन्ते दये त्वाम्।। ४१

प्राजापत्य प्रभृति विभवं प्रेक्ष्य पर्याय दुःखं
जन्माकाङ्क्षन् वृषगिरिवने जग्मुषां तस्थुषां वा।
आशासानाः कतिचन विभोस्त्वत्परिष्वङ्ग धन्यैः
अङ्गीकारं क्षणमपि दये हार्द तुङ्गैरपाङ्गैः ।। ४२

नाभी पद्म स्फुरण सुभगा नव्य नीलोत्पलाभा
क्रीडाशैलं कमपि करुणे वृण्वती वेङ्कटाख्यम्।
शीता नित्यं प्रसदनवती श्रद्दधानावगाह्या
दिव्या काचिज्जयति महती दीर्घिका तावकीना ॥ ४३

यस्मिन् दृष्टे तदितरसुखैर्गम्यते गोष्पदत्वं
सत्यं ज्ञानं त्रिभिरवधिभिर्मुक्तमानन्द सिन्धुम्।
त्वत्स्वीकारात् तमिह कृतिनः सूरिबृन्दानुभाव्यं
नित्यापूर्वं निधिमिव दये निर्विशन्त्यञ्जनाद्रौ ॥ ४४

सारं लब्ध्वा कमपि महतः श्रीनिवासाम्बुराशेः
काले काले घन रसवती कालिकेवानुकम्पे।
व्यक्तोन्मेषा मृगपतिगिरौ विश्वमाप्याययन्ती
शीलोपज्ञं क्षरति भवती शीतलं सद्गुणौघम् ॥ ४५

भीमे नित्यं भवजलनिधौ मज्जतां मानवानाम्
आलम्बार्थं वृषगिरिपतिस्त्वन्निदेशात् प्रयुङ्क्ते।
प्रज्ञासारं प्रकृति महता मूल भागेन जुष्टं
शाखाभेदैः सुभगमनघं शाश्वतं शास्त्रपाणिम् ॥ ४६

विद्वत्सेवा कतक निकषैर्वीत पङ्काशयानां
पद्मा कान्तः प्रणयति दये दर्पणं ते स्वशास्त्रम्।
लीलादक्षां त्वदनवसरे लालयन् विप्रलिप्सां
माया शास्त्राण्यपि दमयितुं त्वत्प्रपन्न प्रतीपान् ॥ ४७

दैवात् प्राप्ते वृषगिरि तटं देहिनि त्वन्निदानात्
स्वामिन् पाहीत्यवशवचने विन्दति स्वापमन्त्यम्।
देवः श्रीमान् दिशति करुणे दृष्टिमिच्छंस्त्वदीयाम्
उद्घातेन श्रुतिपरिषदामुत्तरेणाभिमुख्यम् ॥ ४८

श्रेयः सूतिं सकृदपि दये संमतां यः सखीं ते
शीतोदारामलभत जनः श्रीनिवासस्य दृष्टिम्।
देवादीनामयमनृणतां देहवत्त्वेऽपि विन्दन्
बन्धान्मुक्तो बलिभिरनघैः पूर्यते तत्प्रयुक्तैः ॥ ४९

दिव्यापाङ्गं दिशसि करुणे येषु यद्देशिकात्मा
क्षिप्रं प्राप्ता वृषगिरिपतिं क्षत्रबन्ध्वादयस्ते।
विश्वाचार्या विधि शिव मुखाः स्वाधिकारोपरुद्धाः
मन्ये माता जड इव सुते वत्सला मादृशे त्वम्॥ ५०

अतिकृपणोऽपि जन्तुरधिगम्य दये भवतीम्
अशिथिल धर्म सेतु पदवीं रुचिरामचिरात्।
अमित महोर्मि जालमतिलङ्घ्य भवाम्बु निधिं
भवति वृषाचलेश पद पत्तन नित्य धनी॥ ५१

अभिमुख भाव संपदभिसंभविनां भविनां
क्वचिदुपलक्षिता क्वचिदभङ्गुर गूढ गतिः।
विमल रसावहा वृषगिरीश दये भवती
सपदि सरस्वतीव शमयत्यघमप्रतिघम्॥ ५२

अपि करुणे जनस्य तरुणेन्दु विभूषणताम्
अपि कमलासनत्वमपि धाम वृषाद्रि पतेः।
तरतमता वशेन तनुते ननु ते विततिः
परहित वर्ष्मणा परिपचेलिम केलिमती॥ ५३

धृत भुवना दये त्रिविध गत्यनुकूलतरा
वृषगिरि नाथ पाद परिरम्भवती भवती।
अविदित वैभवापि सुर सिन्धुरिवातनुते
सकृदवगाहमानमपतापमपापमपि ॥ ५४

निगमसमाश्रिता निखिल लोक समृद्धि करी
भजदघ कूल मुद्रुजगतिः परितप्त हिता।
प्रकटित हंस मत्स्य कमठाद्यवतार शता
विबुध सरिच्छ्रियं वृषगिरीश दये वहसि॥ ५५

जगति मितंपचा त्वदितरा तु दये ! तरला
फल नियमोज्झिता भवति संतपनाय पुनः।
त्वमिह निरङ्कुश प्रशकनादि विभूतिमती
वितरसि देहिनां निरवधिं वृषशैल निधिम्॥ ५६

सकरुण लौकिक प्रभु परिग्रह विग्रहयोः
नियतिमुपाधि चक्र परिवृत्ति परम्परया।
वृषभ महीधरेश करुणे ! वितरङ्गयतां
श्रुति मित संपदि त्वयि कथं भविता विशयः॥ ५७

वृषगिरि कृष्ण मेघ जनितां जनितापहरां
त्वदभिमतिं सुवृष्टिमुपजीव्य निवृत्त तृषः।
बहुषु जलाशयेषु बहुमानमपोह्य दये !
न जहति सत्पथं जगति चातकवत् कृतिनः। ५८

त्वदुदय तूलिकाभिरमुना वृषशैल जुषा
स्थिर चर शिल्पिनैव परिकल्पित चित्र धियः।
यतिपति यामुन प्रभृतयः प्रथयन्ति दये
जगति हितं न नस्त्वयि भरन्यसनादधिकम्॥ ५९

मृदु हृदये दये मृदित काम हिते महिते
धृत विबुधे बुधेषु विततात्मधुरे मधुरे।
वृषगिरि सार्वभौम दयिते मयि ते महतीं
भवुक निधे निधेहि भवमूल हरां लहरीम्॥ ६०

अकूपारैरेकोदक समय वैतण्डिक जवैः
अनिर्वाप्यां क्षिप्रं क्षपयितुमविद्याख्य बडबाम्।
कृपे त्वं तत्तादृक्प्रथिम वृष पृथ्वीधर पति-
स्वरूप द्वैगुण्य द्विगुण निज बिन्दुः प्रभवसि ॥ ६१

विवित्सा वेताली विगम परिशुद्धेऽपि हृदये
पटु प्रत्याहार प्रभृति पुटपाक प्रचकिताः।
नमन्तस्त्वां नारायण शिखरि कूटस्थ करुणे
निरुद्ध त्वदुद्रोहा नृपति सुत नीतिं न जहति ॥ ६२

अनन्याधीनः सन् भवति परतन्त्रः प्रणमतां
कृपे सर्वद्रष्टा गणयति न तेषामपकृतिम्।
पतिस्त्वत्पारार्थ्यं प्रथयति वृषक्ष्माधर पतिः
व्यवस्थां वैयात्यादिति विघटयन्ती विहरसि ॥ ६३

अपां पत्युः शत्रूनसहन मुनेर्धर्मनिगलं
कृपे काकस्यैकं हितमिति हिनस्ति स्म नयनम्।
विलीन स्वातन्त्र्यो वृषगिरि पतिस्त्वद्विहृतिभिः
दिशत्येवं देवो जनित सुगतिं दण्डन गतिम् ॥ ६४

निषादानां नेता कपि कुल पतिः कापि शबरी
कुचेलः कुब्जा सा व्रज युवतयो माल्यकृदिति।
अमीषां निम्नत्वं वृषगिरि पतेरुन्नतिमपि
प्रभूतैः स्रोतोभिः प्रसभमनुकम्पे समयसि ॥ ६५

त्वया दृष्टस्तुष्टिं भजति परमेष्ठी निजपदे
वहन् मूर्तीरष्टौ विहरति मृडानी परिबृढः।
बिभर्ति स्वाराज्यं वृषशिखरि शृङ्गारिकरुणे
शुनासीरो देवासुर समरनासीरसुभटः ॥ ६६

दये दुग्धदन्वद्व्यतियुत सुधासिन्धुनयतः
त्वदाश्लेषान्नित्यं जनितमृतसञ्जीवनिदशाः ।
स्वदन्ते दान्तेभ्यः श्रुति वदन कर्पूर गुलिकाः
विषुण्वन्तश्चित्तं वृषशिखरि विश्वम्भर गुणाः ।। ६७

जगज्जन्म स्थेम प्रलय रचना केलि रसिको
विमुक्त्येक द्वारं विघटित कवाटं प्रणयिनाम् ।
इति त्वय्यायत्तं द्वितयमुपधीकृत्य करुणे
विशुद्धानां वाचां वृषशिखरि नाथः स्तुति पदम् ।। ६८

कलि क्षोभोन्मीलत्क्षिति कलुष कूलङ्कष जवैः
अनुच्छेदैरेतैरवट तट वैषम्य रहितैः ।
प्रवाहैस्ते पद्मासहचरपरिष्कारिणि कृपे
विकल्पन्तेऽनल्पा वृषशिखरिणो निर्झरगुणाः ।। ६९

खिलं चेतो वृत्तेः किमिदमिति विस्मेर भुवनं
कृपे सिंहक्ष्माभृत्कृतमुख चमत्कार करणम् ।
भरन्यास च्छन्न प्रबल वृजिन प्राभृत भृतां
प्रतिप्रस्थानं ते श्रुति नगर शृङ्गाटक जुषः ।। ७०

त्रिविधचिदचित्सत्ता स्थेम प्रवृत्ति नियामिका
वृषगिरि विभोरिच्छा सा त्वं परैरपराहता ।
कृपण भरभृत्किंकुर्वाण प्रभूत गुणान्तरा
वहसि करुणे वैचक्षण्यं मदीक्षण साहसे ।। ७१

वृषगिरि पतेर्हृद्या विश्वावतार सहायिनी
क्षपित निखिलावद्या देवि क्षमादि निषेविता ।
भुवन जननी पुंसां भोगापवर्ग विधायिनी
वितमसि पदे व्यक्तिं नित्यां बिभर्षि दये स्वयम् ।। ७२

स्वयमुदयिनः सिद्धाद्याविष्कृताश्च शुभालयाः
विविध विभव व्यूहावासाः परं च पदं विभोः ।
वृषगिरि मुखेष्वेतेष्विच्छावधि प्रतिलब्धये
दृढ विनिहिता निश्रेणिस्त्वं दये निज पर्वभिः ॥ ७३

हितमिति जगद्दृष्ट्या क्लृप्तैरक्लृप्त फलान्तरैः
अमतिविहितैरन्यैर्धर्मायितैश्च यदृच्छया ।
परिणत बहुच्छद्मा पद्मासहायदये स्वयं
प्रदिशसि निजाभिप्रेतं नः प्रशाम्यदपत्रपा ॥ ७४

अतिविधि शिवैरैश्वर्यात्मानुभूति रसैर्जनान्
अहृदयमिहोपच्छन्द्यैषामसङ्ग दशार्थिनी ।
तृषित जनता तीर्थ स्नान क्रम क्षपितैनसां
वितरसि दये वीतातङ्का वृषाद्रि पतेः पदम् ॥ ७५

वृषगिरि सुधा सिन्धौ जन्तुर्दये निहितस्त्वया
भवभय परीताप च्छित्त्यै भजन्नघमर्षणम् ।
मुषितकलुषो मुक्तेरग्रेसरैरभिपूर्यते
स्वयमुपनतैः स्वात्मानन्द प्रभृत्यनुबन्धिभिः ॥ ७६

अनितर जुषामन्तर्मूलेऽप्यपाय परिप्लवे
कृतविदनघा विच्छिद्यैषां कृपे यम वश्यताम् ।
प्रपदन फल प्रत्यादेश प्रसङ्गविवर्जितं
प्रतिविधिमुपाधत्से सार्धं वृषाद्रिहितैषिणा ॥ ७७

क्षणविलयिनां शास्त्रार्थानां फलाय निवेशिते
सुर पितृ गणे निर्वेशात् प्रागपि प्रलयं गते ।
अधिगत वृषक्ष्माभृन्नाथामकालवशंवदां
प्रतिभुवमिह व्याचख्युस्त्वां कृपे निरुपप्लवाम् ॥ ७८

त्वदुपसदनादद्य श्वो वा महाप्रलयेऽपि वा
वितरति निजं पादाम्भोजं वृषाचल शेखरः।
तदिह करुणे तत्तत्क्रीडा तरङ्ग परम्परा-
तर तमतया जुष्टायास्ते दुरत्ययतां विदुः॥ ७९

प्रणिहित धियां त्वत्संपृक्ते वृषाद्रि शिखामणौ
प्रसृमर सुधा धाराकारा प्रसीदति भावना।
दृढमिति दये दत्तास्वादं विमुक्तिवलाहकं
निभृत गरुतो निध्यायन्ति स्थिराशय चातकाः॥ ८०

कृपे विगतवेलया कृत समग्र पोषैस्त्वया
कलि ज्वलन दुर्गते जगति कालमेघायितम्।
वृष क्षिति धरादिषु स्थिति पदेषु सानुप्लवैः
वृषाद्रिपति विग्रहैर्व्यपगताखिलावग्रहैः॥ ८१

प्रसूय विविधं जगत् तदभिवृद्धये त्वं दये
समीक्षण विचिन्तन प्रभृतिभिः स्वयं तादृशैः।
विचित्रगुण चित्रितां विविध दोष वैदेशिकीं
वृषाचल पतेस्तनुं विशसि मत्स्यकूर्मादिकाम्॥ ८२

युगान्त समयोचितं भजति योग निद्रारसं
वृषक्षितिभृदीश्वरे विहरण क्रमाज्जाग्रति।
उदीर्ण चतुरर्णवीकदन वेदिनीं मेदिनीं
समुद्धृतवती दये त्वदभिजुष्टया दंष्ट्रया॥ ८३

सटा पटल भीषणे सरभसाट्टहासोद्भटे
स्फुरत्क्रुधि परिस्फुरद्भ्रुकुटिकेऽपि वक्त्रे कृते।
दये वृषगिरीशितुर्दनुज डिम्भ दत्त स्तना
सरोज सदृशा दृशा समुदिताकृतिर्दृश्यसे॥ ८४

प्रसक्तमधुना विधि प्रणिहितैः सपर्योदकैः
समस्त दुरितच्छिदा निगम गन्धिना त्वं दये।
अशेषमविशेषतस्त्रिजगदञ्जनाद्रीशितुः
चराचरमचीकरश्चरण पङ्कजेनाङ्कितम्॥ ८५

परश्वथ तपोधन प्रथन सत्क्रतूपाकृत-
क्षितीश्वर पशु क्षरत्क्षतज कुङ्कुमस्थासकैः।
वृषाचल दयालुना ननु विहर्तुमालिप्यथाः
निधाय हृदये दये निहत रक्षितानां हितम्॥ ८६

कृपे कृत जगद्धिते कृपण जन्तु चिन्तामणे
रमासहचरं क्षितौ रघुधुरीणयन्त्या त्वया।
व्यभज्यत सरित्पतिः सकृदवेक्षणात् तत्क्षणात्
प्रकृष्ट बहु पातक प्रशम हेतुना सेतुना॥ ८७

कृपे परवतस्त्वया वृष गिरीशितुः क्रीडितं
जगद्धितमशेषतस्तदिदमित्थमर्थाप्यते।
मदच्छलपरिच्युत प्रणत दुष्कृत प्रेक्षितैः
हत प्रबल दानवैर्हलधरस्य हेलाशतैः॥ ८८

प्रभूत विबुधद्विषद्भरण खिन्न विश्वम्भरा-
भरापनयन च्छलात् त्वमवतार्य लक्ष्मीधरम्।
निराकृतवती दये निगम सौध दीप श्रिया
विपश्चिदविगीतया जगति गीतयाऽन्धं तमः॥ ८९

वृषाद्रि हय सादिनः प्रबलदोर्मरुत्प्रेङ्खितः
त्विषा स्फुट तटिद्गुणस्त्वदवसेक संस्कारवान्।
करिष्यति दये कलि प्रबल घर्म निर्मूलनः
पुनः कृत युगाङ्कुरं भुवि कृपाण धाराधरः॥ ९०

विश्वोपकारमिति नाम सदा दुहानां
अद्यापि देवि भवतीमवधीरयन्तम्।
नाथे निवेशय वृषाद्रि पतौ दये त्वं
न्यस्त स्वरक्षणभरं त्वयि मां त्वयैव॥ ९१

नैसर्गिकेण तरसा करुणे नियुक्ता
निम्नेतरेऽपि मयि ते विततिर्यदि स्यात्।
विस्मापयेद् वृषगिरीश्वरमप्यवार्या
वेलातिलङ्घन दशेव महाम्बुराशेः॥ ९२

विज्ञात शासन गतिर्विपरीत वृत्त्या
वृत्रादिभिः परिचितां पदवीं भजामि।
एवंविधे वृषगिरीश दये मयि त्वं
दीने विभोः शमय दण्डधरत्वलीलाम्॥ ९३

मा साहसोक्ति घन कञ्चुक वञ्चितान्यः
पश्यत्सु तेषु विदधाम्यतिसाहसानि।
पद्मासहायकरुणे न रुणत्सि किं त्वं
घोरं कुलिङ्ग शकुनेरिव चेष्टितं मे॥ ९४

विक्षेपमर्हसि दये विपलायितेऽपि
व्याजं विभाव्य वृषशैल पतेर्विहारम्।
स्वाधीन सत्व सरणिः स्वयमत्र जन्तौ
द्राघीयसी दृढतरा गुण वागुरा त्वम्॥ ९५

सन्तन्यमानमपराधगणं विचिन्त्य
त्रस्यामि हन्त भवतीं च विभावयामि।
अह्नाय मे वृषगिरीश दये जहीमां
आशीविष ग्रहण केलि निभामवस्थाम्॥ ९६

औत्सुक्य पूर्वमुपहृत्य महापराधान्
मातः प्रसादयितुमिच्छति मे मनस्त्वाम्।
आलिह्य तान् निरवशेषमलब्धतृप्तिः
ताम्यस्यहो वृषगिरीश धृता दये त्वम्॥ ९७

जह्यात् वृषाचल पतिः प्रतिघेऽपि न त्वां
धर्मोपतप्त इव शीतलतामुदन्वान्।
सा मामरुन्तुदभरन्यसनानुवृत्तिः
तद्वीक्षणैः स्पृश दये तव केलिपद्मैः॥ ९८

दृष्टेऽपि दुर्बलधियं दमनेऽपि दृप्तं
स्नात्वाऽपि धूलिरसिकं भजनेऽपि भीमम्।
बद्ध्वा गृहाण वृषशैलपतेर्दये मां
त्वद्वारणं स्वयमनुग्रहशृङ्खलाभिः॥ ९९

नातः परं किमपि मे त्वयि नाथनीयं
मातर्दये मयि कुरुष्व तथा प्रसादम्।
बद्धादरो वृषगिरि प्रणयी यथाऽसौ
मुक्तानुभूतिमिह दास्यति मे मुकुन्दः॥ १००

निःसीम वैभव जुषां मिषतां गुणानां
स्तोतुर्दये वृषगिरीश गुणेश्वरीं त्वाम्।
तैरेव नूनमवशैरभिनन्दितं मे
सत्यापितं तव बलादकुतोभयत्वम्॥ १०१

अद्यापि तद्वृषगिरीश दये भवत्यां
आरम्भ मात्रमनिदं प्रथम स्तुतीनाम्।
संदर्शित स्व पर निर्वहणा सहेथाः
मन्दस्य साहसमिदं त्वयि वन्दिनो मे॥ १०२

प्रायो दये त्वदनुभाव महाम्बुराशौ
प्राचेतस प्रभृतयोऽपि परं तटस्थाः ।
तत्रावतीर्णमतल स्पृशमाप्लुतं मां
पद्मापतेः प्रहसनोचितमाद्रियेथाः ॥ १०३

वेदान्तदेशिक पदे विनिवेश्य बालं
देवो दयाशतकमेतदवादयन्माम् ।
वैहारिकेण विधिना समये गृहीतं
वीणा विशेषमिव वेङ्कटशैलनाथः ॥ १०४

अनवधिमधिकृत्य श्रीनिवासानुकम्पाम्
अवितथ विषयत्वात् विश्वमव्रीडयन्ती ।
विविध कुशलनीवी वेङ्कटेश प्रसूता
स्तुतिरियमनवद्या शोभते सत्त्वभाजाम् ॥ १०५

शतकमिदमुदारं सम्यगभ्यस्यमानान्
वृषगिरिमधिरुह्य व्यक्तमालोकयन्ती ।
अनितर शरणानामाधिराज्येऽभिषिञ्चेत्
शमित विमत पक्षा शार्ङ्गधन्वानुकम्पा ॥ १०६

विश्वानुग्रह मातरं व्यतिषजत्स्वर्गापवर्गां सुधा-
सध्रीचीमिति वेङ्कटेश्वर कविर्भक्त्या दयामस्तुत ।
पद्मानामिह यद्विधेय भगवत्सङ्कल्प कल्प द्रुमात्
झंझा मारुत धूत चूत नयतः सांपातिकोऽयं क्रमः ॥ १०७

कामं सन्तु मिथः करम्बित गुणावद्यानि पद्यानि नः
कस्यास्मिञ्छतके सदम्बु कतके दोष श्रुतिं क्षाम्यति ।
निष्प्रत्यूह वृषाद्रि निर्झर झरत्कार च्छलेनोच्चलन्
दीनालम्बन दिव्य दम्पति दया कल्लोल कोलाहलः ॥ १०८

—*—

# श्री स्थाणुस्तवः (त्रिमूर्तिस्तुतिः)

(शुचीन्द्रे)

अम्भोरुहस्थाय चतुर्मुखाय हंसाधिरूढाय हकारधाम्ने।
हंसादिदेवाय हरीश्वराय अकाररूपाय नमो विधात्रे ॥ १

जाग्रत्स्वरूपाय जगज्जनित्रे जटाधरोद्भूति ललाट धाम्ने।
जानाति कस्त्वन्महिमानमुक्तं जाकाररूपाय नमो विधात्रे ॥ २

यवान्न नैवेद्यमहाप्रियाय यज्ञप्रभोक्त्रे यजमानधाम्ने।
यानादिरूपामलवागधीश यकाररूपाय नामे विधात्रे ॥ ३

ज्ञानात्परज्ञेयपरात्पराय नाथाय नाभीजलजोद्भवाय।
ज्ञानामृतायाम्बुजधामधात्रे नकाररूपाय नमो विधात्रे ॥ ४

मायाजगत्सृष्टिकुतूहलाय मान्याय मार्तण्ड कलाधराय।
मनो मयाय प्रथमाय कर्त्रे मकाररूपाय नमो विधात्रे ॥ ५

(अजाय नम इति ब्रह्ममन्त्रगर्भाः पञ्च श्लोकाः)

दिव्याय पद्मासनमाधवेशरूपाय देवैरनिशं स्तुताय।
दयार्द्रचित्ताय दिगन्तगाय नमो विरिञ्चाय जगज्जनित्रे ॥ ६

सूत्रात्मने सोम कलाभिपूर्णदेवाय सर्वाध्वर सत्फलाय।
प्रकुर्वते पालनमेव नित्यं ओङ्काररूपाय नमः परस्मै ॥ ७

नन्दात्मजायावनतत्पराय नाकादिलोके नमतां जनानाम्।
नागारिवाहाय फलप्रदाय नकाररूपाय नमः परस्मै ॥ ८

मुरान्तकायामरुमोहनाय मोक्षप्रदायात्मविदां जनानाम्।
मोहप्रदायाखिलगोपिकानां मोकारूपाय नमः परस्मै ॥ ९

नारायणायाखिलनायकाय नगन्धरायाम्बुजलोचनाय।
नागाङ्कतल्पाय नवाम्बुदाय नाकाररूपाय नमः परस्मै ।। १०

रामाय राजीवविलोचनाय राधाभुजङ्गाय रतीशपित्रे।
रात्रिश्चराधीश्वरमर्दनाय राकाररूपाय नमः परस्मै ।। ११

यमादियोगाङ्गजनप्रियाय यज्ञस्वरूपाय यतीश्वराय।
यदूत्तमानामधिनायकाय यकाररूपाय नमः परस्मै ।। १२

नन्दाय नन्दव्रजनायकाय नाभीपुटोद्भूत विधीडिताय।
नादान्तरूपाय नृसिंहधाम्ने णाकाररूपाय नमः परस्मै ।। १३

यज्ञाय यज्ञावनतत्पराय यज्ञैः समाराधितपादुकाय।
यथार्थधाम्ने यजुषांप्रियाय यकार रूपाय नमः परस्मै ।। १४

(ओं नमो नारायणायेति विष्णुमन्त्रगर्भाः 7-14 श्लोकाः)

त्रिमूर्तये राजमहीरुहाय त्रिधामरूपाय सुधामयाय।
तृणाद्यजान्तं परिपूर्णधाम्ने तीर्थस्वरूपाय नमः परस्मै ।। १५

नादान्तरूपाय नभः स्थिताय ज्ञानामृतायागमवल्लभाय।
नागेन्द्रभूषाय नगेन्द्रनित्यनकाररूपाय नमः परस्मै ।। १६

माया तमोध्वंसनभास्कराय मारान्तकायामरवन्दिताय।
मत्तेभचर्माम्बर वेष्टिताय नमो मकाराय नमः शिवाय ।। १७

शिलादसूनोर्हृदि भाविताय श्रीशार्ङ्गबाणाय पुरान्तकाय।
शीतांशकोटीरविराजिताय नमः शिकाराय नमः शिवाय ।। १८

वामाय सद्वामकलेबराय वरप्रदायात्मविदां विशेषात्।
वटुस्वरूपाय वटालयाय नमो वकाराय नमः शिवाय ।। १९

यज्ञाय यज्ञेशसखाय यज्ञैरिज्याय पूर्णाय यमान्तकाय।
यज्ञ प्रहर्त्रेऽखिलयज्ञभोक्त्रे नमो यकाराय नमः शिवाय॥ २०

(नमः शिवायेति पञ्चाक्षरशिवमन्त्रगर्भाः 16-20 श्लोकाः।)

नमोऽस्तु वागीशहरीश्वराय नगेन्द्रचापाय नदीधराय।
नाम्ना शुचीन्द्रेश इति स्तुताय ज्ञानाटवीशाय नमः शिवाय॥ २१

एवमात्मविदां श्रेष्ठः स्तुत्वाऽऽनन्दपरोऽभवत्।
सर्वज्ञः शङ्कराचार्यः स्थाणु क्षेत्रे महास्थले॥ २२

—*—

श्रीशङ्करभगवत्पादप्रणीतं

## जगन्नाथाष्टकम्

(जगन्नाथक्षेत्रे)

कदाचित्कालिन्दीतटविपिनसङ्गीतकवरो
 मुदा गोपीनारीवदनकमलास्वादमधुपः।
रमाशम्भुब्रह्मामरपतिगणेशार्चितपदो
 जगन्नाथः स्वामी नयनपथगामी भवतु मे॥ १

भुजे सव्ये वेणुं शिरसि शिखिपिच्छं कटितटे
 दुकूलं नेत्रान्ते सहचरकटाक्षं विदधते।
सदा श्रीमद्वृन्दावनवसतिलीलापरिचयो
 जगन्नाथः स्वामी नयनपथगामी भवतु मे॥ २

महाम्भोधेस्तीरे कनकरुचिरे नीलशिखरे
 वसन् प्रासादान्तःसहजबलभद्रेण बलिना।
सुभद्रामध्यस्थः सकलसुरसेवावसरदो
 जगन्नाथः स्वामी नयनपथगामी भवतु मे॥ ३

कृपापारावारः सजलजलदश्रेणिरुचिरो
रमावाणीसोमस्फुरदमलपद्मोद्भवमुखैः ।
सुरेन्द्रैराराध्यः श्रुतिगणशिखागीतचरितो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ४

रथारूढो गच्छन् पथि मिलितभूदेवपटलैः
स्तुतिप्रादुर्भावं प्रतिपदमुपाकर्ण्य सदयः ।
दयासिन्धुर्बन्धुः सकलजगतां सिन्धुसुतया
जगन्नाथःस्वामी नयनपथगामी भवतु मे ॥ ५

परब्रह्मापीडः कुवलयदलोत्फुल्लनयनो
निवासी नीलाद्रौ निहितचरणोऽनन्तशिरसि।
रसानन्दो राधासरसवपुरालिङ्गनसुखो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ६

न वै प्रार्थ्यं राज्यं न च कनकतां भोग विभवं
न याचेऽहं रम्यां निखिलजनकाम्यां वरवधूम्।
सदा काले काले प्रमथपतिना गीतचरितो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ७

हर त्वं संसारं द्रुततरमसारं सुरपते
हर त्वं पापानां विततिमपरां यादवपते ।
अहो दीनानाथं निहितमचलं पातुमचलं
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ८

—*—

# जगन्नाथपञ्चकम्

रक्ताम्भोरुहदर्पहं जनमहासौन्दर्यनेत्रद्वयं
मुक्ताहारविलम्बिहेममुकुटं रत्नोज्ज्वलत्कुण्डलम्।
वर्षामेघसमाननीलवपुषं ग्रैवेयहारान्वितं
पार्श्वे चक्रधरं प्रसन्नवदनं नीलाद्रिनाथं भजे ॥ १

फुल्लेन्दीवरलोचनं नवघनश्यामाभिरामाकृतिं
विश्वेशं कमलाविलासविलसत्पादारविन्दद्वयम्।
दैत्यारिं सकलेन्दुमण्डितमुखं चक्राब्जतम्बद्वयं
वन्दे श्रीपुरुषोत्तमं प्रतिदिनं लक्ष्मीनिवासालयम् ॥ २

उद्यन्नीरदनीलसुन्दरतनुं पूर्णेन्दुबिम्बाननं
राजीवोत्पलपत्रनेत्रयुगलं कारुण्यवारांनिधिम्।
भक्तानां सकलार्तिनाशनकरं चिन्तार्थिचिन्तामणिं
वन्दे श्रीपुरुषोत्तमं प्रतिदिनं नीलाद्रिचूडामणिम् ॥ ३

नीलाद्रौ शङ्खमध्ये शतदलकमले रत्नसिंहासनस्थं
सर्वालङ्कारयुक्तं नवघनरुचिरं संयुतं चाग्रजेन।
भद्राया वामभागे रथचरणयुतं ब्रह्मरुद्रेन्द्रवन्द्यं
वेदानां सारमीशं सुजनपरिवृतं ब्रह्मदारुं स्मरामि ॥ ४

दोर्भ्यां शोभितलाङ्गलं समुसलं कादम्बरीचञ्चलं
रत्नाढ्यं वरकुण्डलं भुजबलैराक्रान्तभूमण्डलम्।
वज्राभामलचारुगण्डयुगलं नागेन्द्रचूडोज्ज्वलं
संग्रामे चपलं शशाङ्कधवलं श्रीकामपालं भजे ॥ ५

—*—

वेदशैलगत

# नृसिंहभृजङ्गप्रयातस्तोत्रम्

अजोमेशदेवं रजोत्कर्षवद्भूद्रजोत्कर्षवद्भूद्रजोद्धूतभेदम्।
द्विजाधीशभेदं रजोपालहेतिं भजे वेदशैलस्फुरन्नारसिंहम्।। १

हिरण्याक्षरक्षोवरेण्याग्रजन्मस्थिरक्रूरवक्षोहरप्रौढदक्षम्।
भृतश्रीनखाग्रं परश्रीसुखोग्रं भजे वेदशैलस्फुरन्नारसिंहम्।। २

निजारम्भशुम्भद्भुजास्तम्भडम्भद्दृढाङ्गस्रवद्रक्तसंयुक्तभूतम्।
निजाधावनोद्वेललीलानुभूतं भजे वेदशैलस्फुरन्नारसिंहम्।। ३

वटुर्जन्यजास्यं स्फुटालोलघाटीसटाझूटमृत्युर्बहिर्गानशौर्यम्।
घटोद्भूतपद्भूद्भटस्तूयमानं भजे वेदशैलस्फुरन्नारसिंहम्।। ४

पिनाक्युत्तमाङ्गं स्वनद्भङ्गरङ्गं ध्रुवाकाशरङ्गं जनश्रीपदाङ्गम्।
पिनाकिन्यराजप्रशस्तस्तरस्तं भजे वेदशैलस्फुरन्नारसिंहम्।। ५

—*—

# मालास्तोत्रम्

(नीलाद्रौ)

मालां मुकुन्दशिरसोऽनुपमप्रमोदलाभाधरीकृतसुरद्रुमकान्तिगन्धाम्।
अन्धीकृतालिनिचयां पवनप्रसारिगन्धप्रणाशितजगत्कलुषां नमामि।।१

यत्पादपङ्कजगलद्रजसोनुषङ्गा
    ब्रह्मादयः परमसम्पदमापुरस्य।
विष्णोः कलेवरसमुज्ज्वलिताङ्गराग-
    संसक्तपुष्पनिलयां प्रणतोस्मि मालाम्।। २

पद्मां हृत्पद्मवसतिं सपत्नीं या हसत्यसौ।
विकस्वरैः सुकुसुमैर्विष्णवक्षस्थितिगर्विताम्॥ ३

कुत्र स्थितेयमाहार्षीन्महिमानं स्रगुज्ज्वला।
या श्रीनिधेःशरीरेऽभूत्सर्वाङ्गव्यापिनी चिरम्॥ ४

जय नीलाद्रिशिखरभूषणाघप्रदूषण।
प्रणतार्तिहर श्रीमंस्त्राहि मां शरणागतम्॥ ५

(श्री स्कन्दपुराणे वैष्णवखण्डे पुरुषोत्तममाहात्म्ये)

—*—

## पाण्डुरङ्गस्मरणम्

समचरणसरोजं सान्द्रनीलाम्बुदाभं
जघननिहितपाणिं मण्डनं मण्डनानाम्।
तरुणतुलसिमालाकंधरं कञ्जनेत्रं
सदयधवलहासं विठ्ठलं चिन्तयामि॥

—*—

श्रीशङ्करभगवत्पादकृतं

## पाण्डुरङ्गाष्टकम्

महायोगपीठे तटे भीमरथ्या वरं पुण्डरीकाय दातुं मुनीन्द्रैः।
समागत्य तिष्ठन्तमानन्दकन्दं परब्रह्मलिङ्गं भजे पाण्डुरङ्गम्॥ १

तडिद्वाससं नीलमेघावभासं रमामन्दिरं सुन्दरं चित्प्रकाशम्।
वरं त्विष्टकायां समन्यस्तपादं परब्रह्मलिङ्गं भजे पाण्डुरङ्गम्॥ २

प्रमाणं भवाब्धेरिदं मामकानां नितम्बः कराभ्यां धृतो येन तस्मात्।
विधातुर्वसत्यै धृतो नाभिकोशः परब्रह्मलिङ्गं भजे पाण्डुरङ्गम्॥ ३

स्फुरत्कौस्तुभालङ्कृतं कण्ठदेशे श्रिया जुष्टकेयूरकं श्रीनिवासम्।
शिवं शान्तमीड्यं वरं लोकपालं परब्रह्मरूपं भजे पाण्डुरङ्गम्॥ ४

शरच्चन्द्रबिम्बाननं चारुहासं लसत्कुण्डलाक्रान्तगण्डस्थलान्तम्।
जपारागबिम्बाधरं कञ्जनेत्रं परब्रह्मलिङ्गं भजे पाण्डुरङ्गम्॥ ५

किरीटोज्ज्वलत्सर्वदिक्प्रान्तभागं सुरैरर्चितं दिव्यरत्नैरनर्घ्यैः।
त्रिभङ्गाकृतिं बर्हमाल्यावतंसं परब्रह्मलिङ्गं भजे पाण्डुरङ्गम्॥ ६

विभुं वेणुनादं चरन्तं दुरन्तं स्वयं लीलया गोपवेषं दधानम्।
गवां बृन्दकानन्ददं चारुहासं परब्रह्मलिङ्गं भजे पाण्डुरङ्गम्॥ ७

अजं रुक्मिणीप्राणसंजीवनं तं परं धाम कैवल्यमेकं तुरीयम्।
प्रसन्नं प्रसन्नार्तिहं देवदेवं परब्रह्मलिङ्गं भजे पाण्डुरङ्गम्॥ ८

स्तवं पाण्डुरङ्गस्य वै पुण्यदं ये पठन्त्येकचित्तेन भक्त्या च नित्यम्।
भवाम्भोनिधिं तेऽपि तीर्त्वाऽन्तकाले हरेरालयं शाश्वतं प्राप्नुवन्ति॥ ९

—*—

## श्रीविठ्ठलप्रबोधः

### (विठ्ठलेश्वरकृतः)

जयजय तुहिनकरनिकरकुड्मलितकमलावलीनिलीनतया
निवृत्तमधुकरनिकरमधुरतरोद्घोषोद्धतिविहतनिद्र भद्र सुभद्राग्रज॥ १

जय जय निजमुखकमलामलपरिमलाघ्राणजनितसुखातिशयेनैव
सञ्जातसुखनिद्राविद्रावणभियेव नयनयुगलखञ्जरीटोन्मीलनभियेव
झङ्काररहितैरलिभिरिवालकशतैः परिवृतवदनारविन्द गोविन्द॥ २

जय जय निशाकरकरविकचकुवलयकोशनिर्यातदिवाकरकरनिकरकुञ्चित कमलावलिकोशस्थितिजनितमधुरमधुपानोन्मोदमुदितभृङ्गांगनारवमधुर तरोद्घोषविद्रावितनिद्र निखिलगोपीजनजनितनिजाधारहिन्दोलान्दोल-नचलदमलवलयझणत्कारेण मधुरतरनिनदवीणागीतादिभिरुन्निद्र-नयनखञ्जरीटयुगल ॥ ३

जय जय ततः किञ्चिदुन्मीलनोन्नतभ्रूलतासमशरासनच्युत-कुसुमविशिखद्वयेनेव गोपीजनवदनशरदिन्दुविभ्रमसञ्चरत्खंजनयुगलेनेव हिन्दोलान्दोलनचल दमलसुभगबल्लवीगण्डमण्डलस्फुरत्ताटङ्क-मार्तण्डभ्रमविकसितकमलद्वयेनेवारुणतरामलराधाधरदीधिति-किर्मीरितदरहसनप्रकटरदनावलीतुहिनकरप्रतिभटप्रभाजनितशारदशर्वरी-पत्युदयभ्रमविकसितकुमुदद्वयेन प्रकटितनयनयुगेनेक्षितनिखिलनितम्बि-नीवृन्द ॥ ४

जय जय निजदृगन्तपातसोपानसमारूढमकरकेतुभिर्निजवदनशरदिन्दु-संफुल्लातिलोललोचनकुवलयाभिरनल्पाकल्पभूषिताभिर्निजनितम्बबिम्बा-लङ्कृतसुधाकरकरधवल विशदसुभगतल्पाभिर्हरिकरकमलनखशरसंपात-पराजितानङ्गपृतनाभिरिव विगलितकञ्चिकांचलनितम्बांबरभूषाभिः अतिसुभगविशदजघनकनकासनोपवेशितप्रियाभिर्निजनखदृगन्तविविध प्रसूनार्चितवल्लभाभिः सुरतविद्याविनोदचतुराभिर्भावाधिगमसमये प्रियवियोगशङ्कयान्तर्नयनद्वारं प्रवेश्य पिहितकपाटाभिरिव निमीलतनयनाभिः क्रीडित ॥ ५

जय जय पुनरतिनिर्वृतिविहितनिद्र जागृहि जागृहि ॥ ६

न यावदेष कुङ्कुमारुणांशुरिंदिरापते
पुरन्दरीयदिङ्मुखं समेति तावदुत्थितः ।
प्रमार्जयाननाम्बुजं निजाधरं च सुन्दरं
कदम्बशोभितान्तरस्वतल्पमन्मथोदयम् ॥ ७

न चेदमी शमीतरुप्रसूनतल्पकश्चुकं
नखक्षतं च मेचकाधरं सकुङ्कुमं मुखम्।
विलोक्य नागरा जनास्त ईदृशीं तव स्थितिं
प्रभो सभासु भाषितुं समुज्झितोक्तयो न हि॥ ८

स्फुरत्वन्मुखाम्भोजशोभानिवृत्तस्वसौन्दर्यगर्वाचलः शर्वरीशः।
ह्रिया मज्जति क्षीरवारांनिधौ तन्नखालिच्छटाभिश्च तुच्छीकृतोऽयम्॥ ९

दिवाकरोऽयमुत्कटस्त्वदङ्घ्रिपङ्कजार्हणं
विधातुमागतोऽम्बुजैस्तदर्हणं सभाजय।
कलिन्दजा त्वदाननावलोकनाय दृक्सरो
जनूंषि संप्रसारयत्यनङ्गकोटिसुन्दर॥ १०

स्फुरत्सरोजनिर्गतद्विरेफयूथगायका
यशोदयावतन्वते दिशं शुभाय दर्शनार्थिनः।
जगद्विलोचने हरे कुरुष्व सार्थजन्मके
कृपां कुरुष्व विठ्ठले स्वपादपद्मसेवके॥ ११

—*—

## विठ्ठलस्तवराजः।

ओं अस्य श्रीविठ्ठलस्तवराजस्तोत्रमहामन्त्रस्य भगवान् वेदव्यास ऋषिः अतिजगती छन्दः श्रीविठ्ठलः परमात्मा देवता। त्रिमूर्त्यात्मक इति बीजम्। सृष्टिसंरक्षणार्थ इति शक्तिः वरदाभयहस्त इति कीलकम्। मम सर्वाभीष्टफलसिद्ध्यर्थे जपे विनियोगः।

अथ न्यासः—

ओं नमो भगवते विठ्ठलाय अङ्गुष्ठाभ्यां नमः। ओं तत्वप्रकाशात्मने तर्जनीभ्यां नमः। ओं शङ्खचक्रगदाधरात्मने मध्यमाभ्यां नमः। ओं

सृष्टिसंरक्षणार्थाय अनामिकाभ्यां नमः । ओं त्रिमूर्त्यात्मकाय कनिष्ठिकाभ्यां नमः । ओं वरदाभयहस्ताय करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । भूर्भुवस्सुवरोमिति दिग्बन्धः ।

ध्यानम्-

श्रीगुरुं विट्ठलानन्दं परात्परजगत्प्रभुम् ।
त्रैलोक्यव्यापकं देवं शुद्धमत्यन्तनिर्मलम् ।। १

नासाग्रेऽवस्थितं देवमाब्रह्मस्तम्बसंयुतम् ।
ऊर्णातन्तुनिभाकारं सूत्रज्ञं विट्ठलं स्वयम् ।। २

गङ्गायमुनयोर्मध्ये त्रिकूटं रङ्गमन्दिरम् ।
ज्ञानं भीमरथीतीरं स्वदेवं पण्डरीपुरम् ।। ३

रुक्मिणीशक्तिहस्तेन क्रीडन्तं चललोचनम् ।
आज्ञाब्रह्मबिलान्तःस्थज्योतिर्मयस्वरूपकम् ।। ४

सहस्रदलपद्मस्थं सर्वाभरणभूषितम् ।
सर्वदेवसमुत्पन्नं ओमितिज्योतिरूपकम् ।। ५

समपर्वत ऊर्ध्वस्थं श्रोणित्रयसहस्रकम् ।
स्तम्भो मध्यं यथा स्थानं कलौ वेङ्कटनायकम् ।। ६

पीतवस्त्रपरीधानं तुलसीवनमालिनम् ।
शङ्खचक्रधरं देवं वरदाभयहस्तकम् ।। ७

ऊर्ध्वपुण्ड्रमयं देवं चित्राभरणभूषितम् ।
रत्नसिंहासनं देवं सुवर्णमुकुटोज्ज्वलम् ।। ८

रत्नकिङ्किणिकेयूरं रत्नमण्डपशोभितम् ।
पौण्ड्रं च पालिनं रङ्गं यदूनां कुलदीपकम् ।। ९

देवारिदैत्यदर्पघ्नं सर्वलोकैकनायकम्।
ओं नमश्शान्तिरूपाय सर्वलोकैकसिद्धये॥ १०

सर्वदेवस्वरूपाय सर्वयन्त्रस्वरूपिणे।
सर्वतन्त्रस्वरूपाय विठ्ठलाय नमो नमः॥ ११

परमन्त्रप्रणाशाय परयन्त्रनिवारिणे।
परतन्त्रविनाशाय विठ्ठलाय नमो नमः॥ १२

परात्परस्वरूपाय परमात्मस्वरूपिणे।
परब्रह्मस्वरूपाय विठ्ठलाय नमो नमः॥ १३

विश्वरूपस्वरूपाय विश्वव्यापिस्वरूपिणे।
विश्वम्भरस्वमित्राय विठ्ठलाय नमो नमः॥ १४

परहंसस्वरूपाय सोहं हंसस्वरूपिणे।
हंसमन्त्रस्वरूपाय विठ्ठलाय नमो नमः॥ १५

अनिर्वाच्यस्वरूपाय अखण्डब्रह्मरूपिणे।
आत्मतत्वप्रकाशाय विठ्ठलाय नमो नमः॥ १६

क्षराक्षरस्वरूपाय अक्षराय स्वरूपिणे।
ओङ्कारवाच्यरूपाय विठ्ठलाय नमो नमः॥ १७

बिन्दुनादकलातीतभिन्नदेहसमप्रभ।
अभिन्नायैव विश्वाय विठ्ठलाय नमो नमः॥ १८

भीमातीरनिवासाय पण्डरीपुरवासिने।
पाण्डुरङ्गप्रकाशाय विठ्ठलाय नमो नमः॥ १९

सर्वयोगार्थतत्वज्ञ सर्वभूतहिते रत।
सर्वलोकहितार्थाय विठ्ठलाय नमो नमः॥ २०

य इदं पठते नित्यं त्रिसन्ध्यं स्तौति माधवम्।
सर्वयोगप्रदं नित्यं दीर्घमायुष्यवर्धनम्॥ २१

सर्वे ज्वरा विनश्यन्ति मुच्यते सर्वबन्धनात्।
आवर्तनसहस्रात्तु लभते वाञ्छितं फलम्॥ २२

य इदं परमं गुह्यं सर्वत्र न प्रकाशयेत्।
स ब्रह्मज्ञानमाप्नोति भुक्तिं मुक्तिं च विन्दति॥ २३

सर्वभूतप्रशमनं सर्वदुःखनिवारणम्।
सर्वापमृत्युशमनं सर्वराजवशीकरम्॥ २४
त्रिसन्ध्यं पठते भक्त्या निर्भयो भवति ध्रुवम्॥ २५

संग्रामे संकटे चैव विवादे शत्रुमध्यगे।
शृङ्खलाबन्धने चैव मुच्यते सर्वकिल्विषात्॥ २६

राजद्वारे सभास्थाने सिंहव्याघ्रभयेषु च।
साधकस्तम्भने चैव सर्वत्र विजयी भवेत्॥ २७

(श्रीरुद्रपुराणे वामकेश्वरतन्त्रे)

——*——

जीवनजीगोस्वामिकृतं

## विठ्ठलस्तोत्रम्

श्रीविठ्ठलं नतोऽस्मि श्रीवल्लभवल्लभं सुमार्तण्डम्।
श्रीपुण्डरीकसुखदं रुक्मिण्या वल्लभं परमरुचिरम्॥ १

श्रीविठ्ठलेत्यभिख्यां पूर्णां युक्तां विधातुमिह निकटे।
कृत्वेमां वैदर्भीं कमलां कमलेक्षण स्थितोऽस्मि विभो॥ २

पतितानुद्धृत्य त्वं संख्याऽतीतान्विदाविहीनतरान्।
श्रान्तो भृशं ततः किल कटिदेशे धृतकरोऽसि करुणाब्धे॥ ३

धृतमनुजाकृतिरस्म्यहमथापि लोकेऽस्ति कोऽपि मत्सदृशः।
इति परिचिचीषया त्वं परिरम्भण उत्सुकोऽसि लोकानाम्॥ ४

संसारोष्णकरोद्भवतापनिवृत्यै रसस्वरूप हरे।
सान्द्रघनाभं धृत्वा विग्रहमन्यादृशं स्थितोऽसि किल॥ ५

दरवरमथ ते करगं दृष्ट्वा संसारदरदरं दरताम्।
अदरामभजन्नरवर शशधरकरभरमिवान्धकारभरः॥ ६

स्वीयजनाभयदाने दक्षिणहस्तोऽस्ति युक्तसंज्ञो मे।
इति तथ्यं सूचयितुं नालीकं संबिभर्षि तस्मिंस्त्वम्॥ ७

त्वयि पुण्डरीकसुखदे गोगणसंवेष्टिते त्रयीनिलये।
पापान्धनाशकत्वं युक्तं संज्ञासुखप्रदेऽक्षिचरे॥ ८

दाक्षिण्यं स्वीकर्तुं देशेऽस्मिंस्त्वं स्थितोऽसि यदपि विभो।
वामत्वं त्वय्याप्तं स्वीयव्रजमा त्यजत्यहो विमलम्॥ ९

ध्यायं ध्यायं नित्यं शैलं गोवर्धनं प्रियं दासम्।
तद्विप्रयोगयोगात् शैलसुरूपं भजस्यथो मौनम्॥ १०

स्वर्गं वाणीं पृथ्वीं धेनुं करणानि पास्यजस्रमये।
तत्सूचनाय विभुरपि गोपाकृतिकः स्थितोऽसि देशेऽस्मिन्॥ ११

सेष्टकमयपादयुगं मम तस्मादिष्टसिद्धये भजत।
सौख्यास्त्यै सूचयितुं पादयुगे सेष्टकोऽसि तत्सुखद॥ १२

स्वचरणनलिनोद्भूतां तटिनीमुग्रोत्तमाङ्गसंपर्कात्। 24
दोषाकरनैकट्याद्भीमाभिख्यायुतामिमां मत्वा॥ १३

युक्तार्था त्वं मा भव मद्भक्तेष्वथ भवाघसेनायाम्।
इति शिक्षयितुं नित्यं तटदेशे वासतत्परोऽस्यस्याः ॥ १४

सुद्विजगणसेव्यस्त्वं सुमनोयुक्तः सुपर्णकः फलदः ।
समघननीलः कल्पद्रुमकल्पोऽनल्पपश्चशाखोऽसि ॥ १५

सन्मानसवर्ती श्रीस्थानं त्वं सन्निलिम्पगणसेव्यः ।
हंसकरैः पूज्यः किल रक्तोऽन्तमोददः प्रसन्नश्च ॥ १६

प्रियपुण्डरीकभक्तासक्तेः प्राप्तस्तदीयसाजात्यम्।
किं वा त्वत्सारूप्याल्लोके ख्यातः स पुण्डरीक इति ॥ १७

श्रितपुण्डरीकतटिनीतीरे लक्ष्म्यागतिर्हि युक्ततमा।
तव किल निलिम्पभर्तुर्द्रुमसुमशोभेऽस्ति कृष्ण रसिकवर ॥ १८

सालोक्यं सामीप्यं लोकेऽस्मिन् पापकारिणां नियतम्।
दुर्लभमपि दत्तं तन्मत्सदृशायाथ विट्ठलोऽसि ततः ॥ १९

नखरोडुपैः परीतं चरणतरण्योर्युगं पुरा रचितम्।
यद्यपि मग्नं मत्वा तथाविधं निश्चितं हि मामस्मिन्॥ २०

स्मरणाभिधसूर्यस्तव संसाराब्धिं ह्यशूशुषच्छ्रेष्ठः ।
नामामृतबहुवृष्ट्या पङ्कं निःशेषतामगात्पश्चात्॥ २१

तेन स्वच्छतरोऽहं सोत्कण्ठः स्वच्छवर्त्मना क्षिप्रम्।
उपकण्ठं ते भूमन् संप्राप्तः किल दयामृताब्धिवर ॥ २२

पतितोद्धरणजविरुदं लोकप्रख्यातमादितस्तस्मात्।
एतच्छ्रमनिरतोऽभूर्नो चेद्धेत्वन्तरं न हि प्रकृते ॥ २३

श्रीवल्लभकल्पद्रुमफलरूपत्वं निजेच्छया यत्नात्।
स्वीकृतमिह लोके ननु लोकोद्धाराय तत्प्रियाय भृशम्॥ २४

षड्धर्मैर्निजरूपं पुत्रत्वे सप्तधाऽधुना कृत्वा ।
धरणीतलं सनाथं कृतवानसि शौरिसद्मनीव मुदा ।। २५

राजन्यासुरवृन्दं प्राक्काले संहृतं त्वया नियतम् ।
पाखण्ड्यसुरविनाशः कृतोऽधुना विप्रविग्रहेण मुहुः ।। २६

किञ्च स्वीयां भक्तिं शुद्धाद्वैतानुसारिणीं विपुलाम् ।
कर्तुं वेदोद्धारं वारं वारं कृतश्रमोऽसि भृशम् ।। २७

सांप्रतमिह याम्यायां सरणावतिपापकारिणां कृपया ।
वससि त्वं तान्नेतुं स्वं लोकं विट्ठल प्रभो युक्तम् ।। २८

सामोदस्नेहार्पणयोगात्स्नेहान्विताश्च सामोदाः ।
हृदये भवन्ति तस्मात्तेषां तस्मिन् हि कृष्णवर्त्माऽऽस्ते ।। २९

पञ्चामृतैर्मितैरपि पूजां कुर्वन्ति ये जनास्तेभ्यः ।
पञ्चामृतमत्यन्तं ददासि दास्यं दयोदधे प्राथ्यर्म् ।। ३०

पञ्चामृतलिप्तस्त्वं ह्यघटितघटनापटो विभास्येवम् ।
चन्द्रशतैः संवलितः सान्द्रपयोदः किमागतः पृथ्व्याम् ।। ३१

तोयदकान्त नितान्तं तोयासारेण यः पुमान् भक्त्या ।
स्नपयति शीघ्रं तस्मै ददासि तोयदसमं वपुर्नियतम् ।। ३२

घृसृणागुरुपंकैर्ननु कृत्वा त्वां पङ्किलं प्रयत्नेन ।
निष्पङ्काः सामोदा भवन्ति रागान्विता विनायासम् ।। ३३

परिमितमथ वासः किल जनाद्गृहीत्वाऽल्पकैर्गुणै रचितम् ।
स्थूलैर्दिव्यगुणैर्युक्त्वानन्तवासोऽपि दीयते सततम् ।। ३४

ये त्वां सालङ्कारं मणिभिः स्वर्णेन परिमितैर्मनुजाः ।
ननु तानलङ्करोषि द्युमणिसदृशान् सुवर्णकान् भक्त्या ।। ३५

कृत्वा सुमनःपूजां क्षणिकामप्याप्नुवन्ति तेऽजस्रम्।
सुमनोऽधिप मर्त्यास्ते सुमनस्त्वं द्विप्रकारकं चित्रम्।। ३६

भक्त्या तव पाददले दत्वा वृन्दादलं विबलमनुजः।
दलयति दुरितदलान्यथ पद्मदलायतविलोचनाऽयि किल।। ३७

कृष्णत्वान्ननु कृष्णं चूर्णं भक्त्या समर्पयन्ति मुहुः।
अत्रत्या मनुजास्ते चूर्णयितुं स्वीयकृष्णकर्माणि।। ३८

अमृतान्धोऽधिप जग्ध्वा परिमितमन्नं निजं हि मर्त्यं द्राक्।
अमृताब्धौ स्थापयसे चित्रं सघृणोऽसि यत्नतः किं नु।। ३९

नीराजनैश्च दीपैः स्वयं प्रकाशं प्रकाशयन्त्येते।
अज्ञांस्तानपि मलिनान् स्वयं प्रकाशान् करोषि तच्चित्रम् ।। ४०

संसृतिचित्रमयूखोत्थितधूमैर्धूम्रवीक्षणान् मनुजान्।
तेभ्यः स्वीकृतधूपो विमलदृशस्तान् करोषि करुणाब्धे।। ४१

प्राकृतभाषारचितैः स्तवैः स्तुतः स्तोतृमानुषायापि।
अप्राकृताकृतिं त्विह दत्से क्षिप्रं क्षमं क्षमाजलधे।।४२

एतावत्संप्रार्थ्यं दुरितोच्चयरूपिणा मया बहुधा।
पतितसमुद्धृतिविरुदं नो विस्मार्यं क्षणान्तरेऽप्यार्य।। ४३

श्रीगोकुलोत्सवात्मजजीवनजीशर्मणा मुदा स्तोत्रम्।
श्रीविठ्ठलस्य रचितं तुष्टस्तेनाऽस्तु स प्रभुः सततम्।। ४४

गोवर्धनगुरुचरणप्रसादतः प्राप्तविठ्ठलेशपुरः।
कृतकृत्योऽहं भृत्यो भूवं तस्यैव लोकवन्द्यस्य।। ४५

रसशशधरनन्दक्षितिमितवर्षे विक्रमस्य सितपक्षे।
पौषे सौम्यचतुर्थ्यां पूर्णमभूत्पुण्डरीकपुर एतत्।। ४६

——*——

रघुनाथकृतं

## श्रीविठ्ठलेशाष्टकम्

श्री गणेशाय नमः ।

कुरुसदसि कृताभूद्द्रौपदी वस्त्रशेषा
सकलनृपवरेन्द्रा यत्र वक्तुं न शक्ताः ।
हरिचरणरताङ्गी येन तत्रात्मधीरा
स भवतु मम भूत्यै विठ्ठलेशः सहायः ॥ १

प्रथमजननपापप्राप्तसम्प्रेतदेहौ
समय इह ममास्मिन्कृष्णभक्त्या समेतौ ।
गलितपतितवेषावुद्धतौ येन सद्यः
स भवतु मम भूत्यै विठ्ठलेशः सहायः । २

कमलदलसुनेत्रेणैव भूतेशमाया-
ततिभिरिव हि येन भ्रामितः सर्वलोकः ।
अखिलजगति सर्वस्वीयभक्ताः कृतार्थाः
स भवतु मम भूत्यै विठ्ठलेशः सहायः ॥ ३

सकलयदुकुलेन्द्रो येन कंसो हतोऽभूत्
जननसमयपूर्वं देवकीशूरयोश्च ।
परिहृतमपि दुःखं यामिका मोहिताश्च
स भवतु मम भूत्यै विठ्ठलेशः सहायः ॥ ४

तपनदुहितुरन्तः कालियो मारितः सन्
अलिगणसुहितेऽस्मिंस्तत्फणे येन नृत्यम् ।
कृतमपि च तदम्भो लम्भितं निर्विषत्वं
स भवतु मम भूत्यै विठ्ठलेशः सहायः ॥ ५

कपटकृतशरीरा पूतना प्रापिताऽभ्रं
व्रजपतिगृहसुप्तावेकपादेन येन।
शकट असुरवेषः प्रेषितः स्थाननाशं
स भवतु मम भूत्यै विट्ठलेशः सहायः ॥ ६

पदनतियुतहस्ता तोषिता येन कुन्ती
ह्यसुरकुलसमूहा हिंसिता वीर्यवन्तः।
अखिलभुवनभारः प्रेषितः संलघुत्वं
स भवतु मम भूत्यै विट्ठलेशः सहायः ॥ ७

अखिलसुरकुलेन्द्रस्यैव येनाभिमानो
गिरिवरधरणेन क्षीणतां प्रापितश्च।
जलधरभवधाराः संहृता ग्रावयुक्ताः
स भवतु मम भूत्यै विट्ठलेशः सहायः ॥ ८

विट्ठलेशाष्टकमिदं प्रातरुत्थाय यः पठेत्।
भक्त्या नत्वा च सुमनाः स याति परमां गतिम् ॥ ९

—*—

श्रीविट्ठलनाथगोस्वामिविरचितं

रघुनाथकृतम्

## श्रीगिरिधार्यष्टकम्

त्रैलोक्यलक्ष्मीमदभृत्सुरेश्वरो यदा घनैरन्तकरैर्ववर्ष ह।
तदाऽकरोद्यः स्वबलेन रक्षणं तं गोपबालं गिरिधारिणं भजे ॥ १

यः पाययन्तीमधिरुह्य पूतनां स्तन्यं पपौ प्राणपरायणः शिशुः।
जघान वातायितदैत्यपुंगवं तं गोपबालं गिरिधारिणं भजे ॥ २

नन्दव्रजं यः स्वरुचेन्दिरालयं चक्रे दिवीशां दिवि मोहवृद्धये।
गोगोपगोपीजनसर्वसौख्यकृत्तं गोपबालं गिरिधारिणं भजे॥ ३

यं कामदोग्ध्री गगनाहृतैर्जलैः स्वज्ञातिराज्ये मुदिताभ्यषिंचित्।
गोविन्दनामोत्सवकृद्व्रजौकसां तं गोपबालं गिरिधारिणं भजे॥ ४

यस्याननाब्जं व्रजसुन्दरीजना दिनक्षये लोचनषट्पदैर्मुदा।
पिबन्त्यधीरा विरहातुरा भृशं तं गोपबालं गिरिधारिणं भजे॥ ५

बृन्दावने निर्जरवृन्दवन्दिते गाश्चारयन्यः कलवेणुनिःस्वनः।
गोपाङ्गनाचित्तविमोहमन्मथस्तं गोपबालं गिरिधारिणं भजे॥ ६

यः स्वात्मलीलारसदित्सया सतामाविश्चकाराऽग्निकुमारविग्रहम्।
श्रीवल्लभाध्वानुसृतैकपालकस्तं गोपबालं गिरिधारिणं भजे॥ ७

गोपेन्द्रसूनोर्गिरिधारिणोऽष्टकं पठेदिदं यस्तदनन्यमानसः।
स मुच्यते दुःखमहार्णवाद्भृशं प्राप्नोति दास्यं गिरिधारिणो ध्रुवम्॥ ८

प्रणम्य सम्प्रार्थयते तवाग्रतस्त्वदङ्घ्रिरेणुं रघुनाथनामकः।
श्रीविठ्ठलानुग्रहलब्धसन्मतिस्तत्पूरयैतस्य मनोरथार्णवम्॥ ९

—*—

## लक्ष्मीस्तोत्राणि

वन्दे लक्ष्मीं परशिवमयीं शुद्धजाम्बूनदाभां
तेजोरूपां कनकवसनां सर्वभूषोज्ज्वलाङ्गीम्।
बीजापूरं कनककलशं हेमपद्मं दधानां
आद्यां शक्तिं सकलजननीं विष्णुवामाङ्कसंस्थाम्॥

—*—

इन्द्रकृतः

# महालक्ष्म्यष्टकम्

इन्द्र उवाच—

नमस्तेऽस्तु महामाये श्रीपीठे सुरपूजिते।
शङ्खचक्रगदाहस्ते महालक्ष्मि नमोऽस्तु ते॥ १

नमस्ते गरुडारूढे कोलासुरभयङ्करि।
सर्वपापहरे देवि महालक्ष्मि नमोऽस्तु ते॥ २

सर्वज्ञे सर्ववरदे सर्वदुष्टभयङ्करि।
सर्वदुःखहरे देवि महालक्ष्मि नमोऽस्तु ते॥ ३

सिद्धिबुद्धिप्रदे देवि भक्तिमुक्तिप्रदायिनि।
मन्त्रमूर्ते सदा देवि महालक्ष्मि नमोऽस्तु ते॥ ४

आद्यन्तरहिते देवि आद्यशक्ते महेश्वरि।
योगजे योगसंभूते महालक्ष्मि नमोऽस्तु ते॥ ५

स्थूलसूक्ष्ममहारौद्रे महाशक्ते महोदरे।
महापापहरे देवि महालक्ष्मि नमोऽस्तु ते॥ ६

पद्मासनस्थिते देवि परब्रह्मस्वरूपिणि।
परमेशि जगन्मातर्महालक्ष्मि नमोऽस्तु ते॥ ७

श्वेताम्बरधरे देवि नानालङ्कारभूषिते।
जगत्स्थिते जगन्मातर्महालक्ष्मि नमोऽस्तु ते॥ ८

महालक्ष्म्यष्टकस्तोत्रं यः पठेद्भक्तिमान्नरः।
सर्वसिद्धिमवाप्नोति राज्यं प्राप्नोति सर्वदा॥ ९

एककालं पठेन्नित्यं महापापविनाशनम्।
द्विकालं यः पठेन्नित्यं धनधान्यसमन्वितः ॥ १०

त्रिकालं यः पठेन्नित्यं महाशत्रुविनाशनम्।
महालक्ष्मीर्भवेन्नित्यं प्रसन्ना वरदा शुभा ॥ ११

—*—

इन्द्रकृतं

# श्रीस्तोत्रम्

पुष्कर उवाच—
राजलक्ष्मीस्थिरत्वाय यथेन्द्रेण पुरा श्रियः।
स्तुतिः कृता तथा राजन् जयार्थं स्तुतिमाचरेत् ॥ १

इन्द्र उवाच—
नमोऽस्तु सर्वलोकानां जननीमब्धिसंभवाम्।
श्रियमुन्निद्रपद्माक्षीं विष्णुवक्षःस्थलस्थिताम् ॥ २

त्वं सिद्धिस्त्वं स्वधा स्वाहा सुधा त्वं लोकपावनी।
सन्ध्या रात्रिः प्रभा मूर्तिर्मेधा श्रद्धा सरस्वती ॥ ३

यज्ञविद्या महाविद्या गुह्य विद्या च शोभने।
आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी ॥ ४

आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्त्वमेव च।
सौम्यासौम्यैर्जगद्रूपैस्त्वयैतद्देवि पूरितम् ॥ ५

का त्वन्या त्वामृते देवि सर्वयज्ञमयं वपुः।
अध्यास्ते देवदेवस्य योगिचिन्त्यं गदाभृतः ॥ ६

त्वया देवि परित्यक्तं सकलं भुवनत्रयम्।
विनष्टप्रायमभवत् त्वयेदानीं समेधितम्॥ ७

दाराः पुत्रास्तथागारं सुहृद्धान्यधनादिकम्।
भवत्येतन्महाभागे नित्यं त्वद्वीक्षणान्नृणाम्॥ ८

शरीरारोग्यमैश्वर्यमरिपक्षक्षयः सुखम्।
देवि त्वद्दृष्टिदृष्टानां पुरुषाणां न दुर्लभम्॥ ९

त्वमम्बा सर्वलोकानां देवदेवो हरिः पिता।
त्वयैतद्विष्णुना चाम्ब जगद्व्याप्तं चराचरम्॥ १०

मानं कोपं तथा कोषं मा गृहं मा परिच्छदम्।
मा शरीरं कलत्रं च त्यजेथाः सर्वपावनि॥ ११

मा पुत्रान्मा सुहृद्वर्गान् मा पशून्मा विभूषणम्।
त्यजेथा मम देवस्य विष्णोर्वक्षःस्थलालये॥ १२

सत्त्वेन सत्यशौचाभ्यां तथा शीलादिभिर्गुणैः।
त्यजन्ते ते नराः सद्यः संत्यक्ता ये त्वयाऽमले॥ १३

त्वयावलोकिताः सद्यः शीलाद्यैरखिलैर्गुणैः।
कुलैश्वर्यैश्च युज्यन्ते पुरुषा निर्गुणा अपि॥ १४

स श्लाघ्यः स गुणी धन्यः स कुलीनः स बुद्धिमान्।
स शूरः स च विक्रान्तो यस्त्वया देवि वीक्षितः॥ १५

सद्यो वैगुण्यमायान्ति शीलाद्याः सकला गुणाः।
पराङ्मुखी जगद्धात्री यस्य त्वं विष्णुवल्लभे॥ १६

न ते वर्णयितुं शक्ता गुणान् जिह्वापि वेधसः।
प्रसीद देवि पद्माक्षि माऽस्मांस्त्याक्षीः कदाचन॥ १७

पुष्कर उवाच–
एवं स्तुता ददौ श्रीश्च वरमिन्द्राय चेप्सितम्।
सुस्थिरत्वं च राज्यस्य संग्रामविजयादिकम्॥ १८

स्वस्तोत्रपाठश्रवणकर्तॄणां भुक्तिमुक्तिदम्।
श्रीस्तोत्रं सततं तस्मात्पठेच्च शृणुयान्नरः॥ १९ (अग्निपुराणे)

—*—

## सिद्धिलक्ष्मीस्तोत्रम्

ओं अस्य सिद्धिलक्ष्मीस्तोत्रस्य हिरण्य गर्भ ऋषिः, अनुष्टुप् छन्दः, सिद्धिलक्ष्मीर्देवता, मम समस्त दुःखक्लेशपीडादारिद्र्यविनाशार्थं सर्वलक्ष्मीप्रसन्नकरणार्थं महाकालीमहालक्ष्मीमहासरस्वतीदेवताप्रीत्यर्थं च सिद्धिलक्ष्मीस्तोत्रजपे विनियोगः। ओं सिद्धिलक्ष्मि अङ्गुष्ठाभ्यां नमः। ओं ह्रीं विष्णुहृदये तर्जनीभ्यां नमः। ओं क्लीं अमृतानन्दे मध्यमाभ्यां नमः। ओं श्रीं दैत्यमालिनी अनामिकाभ्यां नमः। ओं तं तेजःप्रकाशिनी कनिष्ठिकाभ्यां नमः। ओं ह्रीं क्लीं श्रीं ब्राह्मी वैष्णवी माहेश्वरी करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः।

अथ ध्यानम्–
ब्राह्मीं च वैष्णवीं भद्रां षड्भुजां चतुर्मुखाम्।
त्रिनेत्रां च त्रिशूलां च पद्मचक्रगदाधराम्॥ १

पीताम्बरधरां देवीं नानालङ्कारभूषिताम्।
तेजः पुञ्जधरां श्रेष्ठां ध्यायेद्बालकुमारिकाम्॥ २

ओङ्काररलक्ष्मीरूपेण विष्णुहृदयमव्ययम्।
विष्णुमानन्दमध्यस्थं ह्रींकारबीजरूपिणी॥ ३

ओं क्लीं अमृतानन्दभद्रे सद्य आनन्ददायिनी।
ओं श्रीं दैत्यभक्षरदा शक्तिमालिनी शत्रुमर्दिनी ॥ ४

तेजःप्रकाशिनी देवी वरदा शुभकारिणी।
ब्राह्मी च वैष्णवी भद्रा कालिका रक्तशाम्भवी ॥ ५

आकारब्रह्मरूपेण ओङ्कारं विष्णुमव्ययम्।
सिद्धिलक्ष्मि परालक्ष्मि लक्ष्यलक्ष्मि नमोऽस्तु ते ॥ ६

सूर्यकोटिप्रतीकाशं चन्द्रकोटिसमप्रभम्।
तन्मध्ये निकरे सूक्ष्मं ब्रह्मरूपव्यवस्थितम् ॥ ७

ओंकारपरमानन्दं क्रियते सुखसम्पदा।
सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ॥ ८

प्रथमे त्र्यम्बका गौरी द्वितीये वैष्णवी तथा।
तृतीये कमला प्रोक्ता चतुर्थे सुरसुन्दरी ॥ ९

पञ्चमे विष्णुपत्नी च षष्ठे च वैष्णवी तथा।
सप्तमे च वरारोहा अष्टमे वरदायिनी ॥ १०

नवमे खड्गत्रिशूला दशमे देवदेवता।
एकादशे सिद्धिलक्ष्मीर्द्वादशे ललितात्मिका ॥ ११

एतत्स्तोत्रं पठन्तस्त्वां स्तुवन्ति भुवि मानवाः।
सर्वोपद्रवमुक्तास्ते नात्र कार्या विचारणा ॥ १२

एकमासं द्विमासं वा त्रिमासं च चतुर्थकम्।
पञ्चमासं च षण्मासं त्रिकालं यः पठेन्नरः ॥ १३

ब्राह्मणाः क्लेशिता दुःखदरिद्रा भयपीडिताः।
जन्मान्तरसहस्रेषु मुच्यन्ते सर्वक्लेशतः ॥ १४

अलक्ष्मीर्लभते लक्ष्मीमपुत्रः पुत्रमुत्तमम्।
धन्यं यशस्यमायुष्यं वह्निचौरभयेषु च॥ १५

शाकिनीभूतवेतालसर्वव्याधिनिपातके।
राजद्वारे महाघोरे संग्रामे रिपुसंकटे॥ १६

सभास्थाने श्मशाने च कारागेहारिबन्धने।
अशेषभयसंप्राप्तौ सिद्धिलक्ष्मीं जपेन्नरः॥ १७

ईश्वरेण कृतं स्तोत्रं प्राणिनां हितकारणम्।
स्तुवन्ति ब्राह्मणा नित्यं दारिद्र्यं न च वर्धते॥ १८

या श्रीः पद्मवने कदम्बशिखरे राज्ञां गृहे कुञ्जरे
श्वेते चाश्वयुते वृषे च युगले यज्ञे च यूपस्थिते।
शङ्खे देवकुले नरेन्द्रभवने गङ्गातटे गोकुले
सा श्रीस्तिष्ठतु सर्वदा मम गृहे भूयात्सदा निश्चला॥ १९

(श्रीब्रह्माण्डपुराणे)

—*—

देवकृतं

## लक्ष्मीस्तोत्रम्

क्षमस्व भगवत्यम्ब क्षमाशीले परात्परे।
शुद्धसत्त्वस्वरूपे च कोपादिपरिवर्जिते॥ १

उपमे सर्वसाध्वीनां देवीनां देवपूजिते।
त्वया विना जगत्सर्वं मृततुल्यं च निष्फलम्॥ २

सर्वसंपत्स्वरूपा त्वं सर्वेषां सर्वरूपिणि।
रासेश्वर्यधिदेवी त्वं त्वत्कलाः सर्वयोषितः॥ ३

कैलासे पार्वती त्वं च क्षीरोदे सिन्धुकन्यका।
स्वर्गे च स्वर्गलक्ष्मीस्त्वं मर्त्यलक्ष्मीश्च भूतले ॥ ४

वैकुण्ठे च महालक्ष्मीर्देवदेवी सरस्वती।
गङ्गा च तुलसी त्वं च सावित्री ब्रह्मलोकतः ॥ ५

कृष्णप्राणाधिदेवी त्वं गोलोके राधिका स्वयम्।
रासे रासेश्वरी त्वं च वृन्दावनवने वने ॥ ६

कृष्णप्रिया त्वं भाण्डीरे चन्द्रा चन्दनकानने।
विरजा चम्पकवने शतशृङ्गे च सुन्दरी ॥ ७

पद्मावती पद्मवने मालती मालतीवने।
कुन्ददन्ती कुन्दवने सुशीला केतकीवने ॥ ८

कदम्बमाला त्वं देवी कदम्बकाननेऽपि च।
राजलक्ष्मी राजगृहे गृहलक्ष्मीर्गृहे गृहे ॥ ९

इत्युक्त्वा देवताः सर्वा मुनयो मनवस्तथा।
रुरुदुर्नम्रवदनाः शुष्ककण्ठोष्ठतालुकाः ॥ १०

इति लक्ष्मीस्तवं पुण्यं सर्वदेवैः कृतं शुभम्।
यः पठेत्प्रातरुत्थाय स वै सर्वं लभेद्ध्रुवम् ॥ ११

अभार्यो लभते भार्यां विनीतां सुसुतां सतीम्।
सुशीलां सुन्दरीं रम्यामतिसुप्रियवादिनीम् ॥ १२

पुत्रपौत्रवतीं शुद्धां कुलजां कोमलां वराम्।
अपुत्रो लभते पुत्रं वैष्णवं चिरजीविनम् ॥ १३

परमैश्वर्ययुक्तं च विद्यावन्तं यशस्विनम्।
भ्रष्टराज्यो लभेद्राज्यं भ्रष्टश्रीर्लभते श्रियम् ॥ १४

हतबन्धुर्लभेद्वन्धुं धनभ्रष्टो धनं लभेत्।
कीर्तिहीनो लभेत्कीर्तिं प्रतिष्ठां च लभेद्ध्रुवम्॥ १५

सर्वमङ्गलदं स्तोत्रं शोकसन्तापनाशनम्।
हर्षानन्दकरं शश्वद्धर्ममोक्षसुहृत्प्रदम्॥ १६

—*—

अगस्त्यप्रणीतम्

## लक्ष्मीस्तोत्रम्

पद्मे पद्मपलाशाक्षि जय त्वं श्रीपतिप्रिये।
जगन्मातर्महालक्ष्मीः संसारार्णवतारिणि॥ १

महालक्ष्मि नमस्तुभ्यं नमस्तुभ्यं सुरेश्वरि।
हरिप्रिये नमस्तुभ्यं नमस्तुभ्यं दयानिधे॥ २

पद्मालये नमस्तुभ्यं नमस्तुभ्यं शिवप्रिये।
सर्वभूतहितार्थाय वसुवृष्टिं सदा कुरु॥ ३

जगन्मातर्नमस्तुभ्यं नमस्तुभ्यं कृपावति।
दयावति नमस्तुभ्यं विश्वेश्वरि नमो नमः॥ ४

नमः क्षीराब्धितनये नमस्त्रैलोक्यधारिणि।
शशिवक्त्रे नमस्तुभ्यं रक्ष मां शरणागतम्॥ ५

रक्ष त्वं देवि देवेशि देवदेवेशवल्लभे।
दारिद्र्यात्त्राहि मां लक्ष्मि कृपां कुरु ममोपरि॥ ६

नमस्त्रैलोक्यजननि नमस्त्रैलोक्यपावनि।
ब्रह्मादयो नमन्ति त्वां जगदानन्ददायिनि॥ ७

विष्णुप्रिये नमस्तुभ्यं नमस्तुभ्यं जगद्धिते ।
आर्तिहन्त्रि नमस्तुभ्यं समृद्धिं कुरु मे रमे ॥ ८

पद्मवासे नमस्तुभ्यं चपलायै नमो नमः ।
चञ्चलायै नमस्तुभ्यं ललितायै नमो नमः ॥ ९

नमः प्रद्युम्नमातस्ते पाहि मां त्वां नमाम्यहम् ।
परिपालय मां मातः सर्वथा शरणागतम् ॥ १०

शरणं त्वां प्रपन्नोऽस्मि कमले कमला नने ।
त्राहि त्राहि महालक्ष्मि परित्राणपरायणे ॥ ११

पाण्डित्यं शोभते नैव न शोभन्ते गुणा नरे ।
शीलं चापि न शोभेत महालक्ष्मि त्वया विना ॥ १२

तावद्विराजते रूपं तावच्छीलं विराजते ।
तावद्गुना नराणां च यावल्लक्ष्मीः प्रसीदति ॥ १३

लक्ष्मि त्वयालङ्कृतमानवा ये पापैर्विमुक्ता नृपलोकमान्याः ।
गुणैर्विहीना गुणिनो भवन्ति विशीलिनः शीलवतां वरिष्ठाः ॥ १४

लक्ष्मीर्भूषयते रूपं लक्ष्मीर्भूषयते कुलम् ।
लक्ष्मीर्भूषयते विद्यां सर्वाल्लक्ष्मीर्विशिष्यते ॥ १५

लक्ष्मि त्वद्गुणकीर्तने कमलभूर्यायादलं जिह्मतां
रुद्राद्या रविचन्द्रदेवपतयो वक्तुं च नैव क्षमाः ।
अस्माभिस्तव रूपलक्षणगुणा वक्तुं कथं पार्यते
मातर्मां परिपाहि विश्वजननि कृत्वा ममेष्टं ध्रुवम् ॥ १६

दीनार्तिभीतं क्षुधया प्रपीडितं वासोविहीनं तव पार्श्वमागतम् ।
कृपां विधत्से मम लक्ष्मि सत्वरं धनप्रदे मां धननायकं कुरु ॥ १७

मां विलोक्य जननी हरिप्रिये निर्धनं तव समीप मागतम्।
देहि मे झटिति लक्ष्मि कराग्रं वस्त्रकाञ्चनवरान्नमद्भुतम्॥ १८

त्वमेव जननी लक्ष्मीः पिता लक्ष्मीस्त्वमेव च।
भ्राता त्वं च सखा लक्ष्मीर्विद्या लक्ष्मीस्त्वमेव च॥ १९

त्राहि त्राहि महालक्ष्मि त्राहि त्राहि सुरेश्वरि।
त्राहि त्राहि जगन्मातर्दारिद्र्यात्त्राहि वेगतः॥ २०

नमस्तुभ्यं जगद्धात्रि विधात्र्यै ते नमो नमः।
धर्मध्वजे नमस्तुभ्यं नमः संपत्तिदायिनि॥ २१

दारिद्र्यार्णवमग्नोऽहं निमग्नोऽहं रसातले।
मज्जमानं करं धृत्वाऽप्युद्धर त्वं रमे द्रुतम्॥ २२

किं लक्ष्मि बहुनोक्तेन जल्पितं च पुनः पुनः।
अन्यन्मे शरणं नास्ति सत्यं सत्यं हरिप्रिये॥ २३

एतच्छ्रुत्वाऽगस्त्यवाक्यं हर्षपूर्णा हरिप्रिया।
उवाच मधुरां वाणीं तुष्टाऽहं तव सुव्रत॥ २४

श्रीरुवाच–
यत्त्वयोक्तमिदं स्तोत्रं ये पठिष्यन्ति मानवाः।
ये च शृण्वन्ति वै भक्त्याऽहं तेषां वशवर्तिनी॥ २५

नित्यं पठन्ति ये भक्त्या तेषां दैन्यं विनश्यति।
ऋणं नश्यति शीघ्रं च वियोगो नैव जायते॥ २६

यः पठेत्प्रातरुत्थाय श्रद्धाभक्तिसमन्वितः। 2
गृहे तस्य सदा तिष्ठेन्नित्यं श्रीः पतिना सह॥ २७

सुखसौभाग्यसंपन्नो मनुष्यो बुद्धिमान्भवेत्।
पुत्रवान् पशुमान्श्रेष्ठो भुक्त्वा भोगांश्च मानवः॥ २८

कीर्तिमांश्च महाभाग्यो नारायणपदं लभेत्।
अपुत्राः पुत्रिणः सन्ति पुत्रिणः सन्ति पौत्रिणः ॥ २९

निर्धनाः सधनाः सन्ति जीवन्ति शरदां शतम्।
इदं स्तोत्रं महापुण्यं महालक्ष्म्याः प्रकीर्तितम्।
विष्णुप्रसादजननं चतुर्वर्गफलप्रदम् ॥ ३०

राजद्वारे जयश्चैव शत्रोश्चैव पराजयः।
भूतप्रेतपिशाचानां व्याघ्राणां न भयं तथा ॥ ३१

न शस्त्रानलतोयौघाद्भयं तस्य प्रजायते।
दुर्वृत्तानां च पापानां बहुहानिकरं परम् ॥ ३२

मन्दुराकरिशालासु गवां गोष्ठे समाहितः।
पठेत्तद्दोषशान्त्यर्थं महापातकनाशनम् ॥ ३३

सर्वसौख्यकरं नृणामायुरारोग्यदं तथा।
अगस्त्यमुनिना प्रोक्तं प्रजानां हितकाम्यया ॥ ३४

—*—

## श्रीमहालक्ष्मीस्तुतिः

शुद्धलक्ष्म्यै बुद्धिलक्ष्म्यै वरलक्ष्म्यै नमो नमः।
नमस्ते सौभाग्यलक्ष्म्यै महालक्ष्म्यै नमो नमः ॥ १

वचोलक्ष्म्यै काव्यलक्ष्म्यै गानलक्ष्म्यै नमो नमः।
नमस्ते शृङ्गारलक्ष्म्यै महालक्ष्म्यै नमो नमः ॥ २

धनलक्ष्म्यै धान्यलक्ष्म्यै धरालक्ष्म्यै नमो नमः।
नमस्तेऽष्टैश्वर्यलक्ष्म्यै महालक्ष्म्यै नमो नमः ॥ ३

गृहलक्ष्म्यै ग्रामलक्ष्म्यै राज्यलक्ष्म्यै नमो नमः ।
नमस्ते साम्राज्यलक्ष्म्यै महालक्ष्म्यै नमो नमः ।। ४

शान्तिलक्ष्म्यै दान्ति लक्ष्म्यै क्षान्तिलक्ष्म्यै नमो नमः ।
नमोऽस्त्वात्मानन्दलक्ष्म्यै महालक्ष्म्यै नमो नमः ।। ५

सत्यलक्ष्म्यै दयालक्ष्म्यै सौख्यलक्ष्म्यै नमो नमः ।
नमः पातिव्रत्यलक्ष्म्यै महालक्ष्म्यै नमो नमः ।। ६

गजलक्ष्म्यै राजलक्ष्म्यै तेजोलक्ष्म्यै नमो नमः ।
नमः सर्वोत्कर्षलक्ष्म्यै महालक्ष्म्यै नमो नमः ।। ७

सत्वलक्ष्म्यै तत्वलक्ष्म्यै बोधलक्ष्म्यै नमो नमः ।
नमस्ते विज्ञानलक्ष्म्यै महालक्ष्म्यै नमो नमः ।। ८

स्थैर्यलक्ष्म्यै वीर्यलक्ष्म्यै धैर्यलक्ष्म्यै नमो नमः ।
नमस्तेऽस्त्वौदार्यलक्ष्म्यै महालक्ष्म्यै नमो नमः ।। ९

सिद्धिलक्ष्म्यै ऋद्धिलक्ष्म्यै विद्यालक्ष्म्यै नमो नमः ।
नमस्ते कल्याणलक्ष्म्यै महालक्ष्म्यै नमो नमः ।। १०

कीर्तिलक्ष्म्यै मूर्तिलक्ष्म्यै वर्चोलक्ष्म्यै नमो नमः ।
नमस्ते त्वनन्तलक्ष्म्यै महालक्ष्म्यै नमो नमः ।। ११

जपलक्ष्म्यै तपोलक्ष्म्यै व्रतलक्ष्म्यै नमो नमः ।
नमस्ते वैराग्यलक्ष्म्यै महालक्ष्म्यै नमो नमः ।। १२

मन्त्रलक्ष्म्यै तन्त्रलक्ष्म्यै यन्त्रलक्ष्म्यै नमो नमः ।
नमो गुरुकृपालक्ष्म्यै महालक्ष्म्यै नमो नमः ।। १३

सभालक्ष्म्यै प्रभालक्ष्म्यै कलालक्ष्म्यै नमो नमः ।
नमस्ते लावण्यलक्ष्म्यै महालक्ष्म्यै नमो नमः ।। १४

वेदलक्ष्म्यै नादलक्ष्म्यै शास्त्रलक्ष्म्यै नमो नमः ।
नमस्ते वेदान्तलक्ष्म्यै महालक्ष्म्यै नमो नमः ।। १५

क्षेत्रलक्ष्म्यै तीर्थलक्ष्म्यै वेदिलक्ष्म्यै नमो नमः ।
नमस्ते सन्तानलक्ष्म्यै महालक्ष्म्यै नमो नमः ।। १६

योगलक्ष्म्यै भोगलक्ष्म्यै यज्ञलक्ष्म्यै नमो नमः ।
क्षीरार्णवपुण्यलक्ष्म्यै महालक्ष्म्यै नमो नमः ।। १७

अन्नलक्ष्म्यै मनोलक्ष्म्यै प्रज्ञालक्ष्म्यै नमो नमः ।
विष्णुवक्षोभूषलक्ष्म्यै महालक्ष्म्यै नमो नमः ।। १८

धर्मलक्ष्म्यै अर्थलक्ष्म्यै कामलक्ष्म्यै नमो नमः ।
नमस्ते निर्वाणलक्ष्म्यै महालक्ष्म्यै नमो नमः ।। १९

पुण्यलक्ष्म्यै क्षेमलक्ष्म्यै श्रद्धालक्ष्म्न्यै नमो नमः ।
नमस्ते चैतन्यलक्ष्म्न्यै महालक्ष्म्यै नमो नमः ।। २०

भूलक्ष्म्यै ते भुवर्लक्ष्म्यै सुवर्लक्ष्म्यै नमो नमः ।
नमस्ते त्रैलोक्यलक्ष्म्यै महालक्ष्म्यै नमो नमः ।। २१

महालक्ष्म्यै जनलक्ष्म्यै तपोलक्ष्म्यै नमो नमः ।
नमः सत्यलोकलक्ष्म्यै महालक्ष्म्यै नमो नमः ।। २२

भावलक्ष्म्यै वृद्धिलक्ष्म्यै भव्यलक्ष्म्यै नमो नमः ।
नमस्ते वैकुण्ठलक्ष्म्यै महालक्ष्म्यै नमो नमः ।। २३

नित्यलक्ष्म्यै सत्यलक्ष्म्यै वंशलक्ष्म्यै नमो नमः ।
नमस्ते कैलासलक्ष्म्यै महालक्ष्म्यै नमो नमः ।। २४

प्रकृतिलक्ष्म्यै श्रीलक्ष्म्यै स्वस्तिलक्ष्मै नमो नमः ।
नमस्ते गोलोकलक्ष्म्यै महालक्ष्म्यै नमो नमः ।। २५

शक्तिलक्ष्म्यै भक्तिलक्ष्म्यै मुक्तिलक्ष्म्यै नमो नमः ।
नमस्ते त्रिमूर्तिलक्ष्म्यै महालक्ष्म्यै नमो नमः ॥ २६

नमश्चक्रराजलक्ष्म्यै आदिलक्ष्म्यै नमो नमः ।
नमो ब्रह्मानन्दलक्ष्म्यै महालक्ष्म्यै नमो नमः ॥ २७

—*—

श्रीशङ्करभगवत्पादकृतं

## कनकधारास्तोत्रम्

अङ्गं हरेः पुलकभूषणमाश्रयन्ती
भृङ्गाङ्गनेव मुकुलाभरणं तमालम् ।
अङ्गीकृताखिलविभूतिरपाङ्गलीला
माङ्गल्यदास्तु मम मङ्गलदेवतायाः ॥ १

मुग्धा मुहुर्विदधती वदने मुरारेः
प्रेमत्रपाप्रणिहितानि गतागतानि ।
माला दृशोर्मधुकरीव महोत्पले या
सा मे श्रियं दिशतु सागरसम्भवायाः ॥ २

विश्वामरेन्द्रपदविभ्रमदानदक्ष-
मानन्दहेतुरधिकं मुरविद्विषोऽपि ।
ईषन्निषीदतु मयि क्षणमीक्षणार्ध-
मिन्दीवरोदरसहोदरमिन्दिरायाः ॥ ३

आमीलिताक्षमधिगम्य मुदा मुकुन्द-
मानन्दकन्दमनिमेषमनङ्गतन्त्रम् ।
आकेकरस्थितकनीनिकपक्ष्मनेत्रं
भूत्यै भवेन्मम भुजङ्गशयाङ्गनायाः ॥ ४

बाह्वन्तरे मधुजितः श्रितकौस्तुभे या
हारावलीव हरिनीलमयी विभाति।
कामप्रदा भगवतोऽपि कटाक्षमाला
कल्याणमावहतु मे कमलालयायाः ॥ ५

कालाम्बुदालिललितोरसि कैटभारे-
र्धाराधरे स्फुरति या तटिदङ्गनेव।
मातुः समस्तजगतां महनीयमूर्ति-
र्भद्राणि मे दिशतु भार्गवनन्दनायाः ॥ ६

प्राप्तं पदं प्रथमतः खलु यत्प्रभावा-
न्माङ्गल्यभाजि मधुमाथिनि मन्मथेन।
मय्यापतेत्तदिह मन्थरमीक्षणार्धं
मन्दालसं च मकरालयकन्यकायाः ॥ ७

दद्याद्दयानुपवनो द्रविणाम्बुधारा-
मस्मिन्नकिञ्चनविहङ्गशिशौ विषण्णे।
दुष्कर्मघर्ममपनीय चिराय दूरं
नारायणप्रणयिनीनयनाम्बुवाहः ॥ ८

इष्टाविशिष्टमतयोऽपि यया दयार्द्र-
दृष्ट्या त्रिविष्टपपदं सुलभं लभन्ते।
दृष्टिः प्रहृष्टकमलोदरदीप्तिरिष्टां
पुष्टिं कृषीष्ट मम पुष्करविष्टरायाः ॥ ९

गीर्देवतेति गरुडध्वजसुन्दरीति
शाकम्भरीति शशिशेखरवल्लभेति।
सृष्टिस्थितिप्रलयकेलिषु संस्थितायै
तस्यै नमस्त्रिभुवनैकगुरोस्तरुण्यै ॥ १०

श्रुत्यै नमोऽस्तु शुभकर्मफलप्रसूत्यै
रत्यै नमोऽस्तु रमणीयगुणार्णवायै।
शक्त्यै नमोऽस्तु शतपत्रनिकेतनायै
पुष्ट्यै नमोऽस्तु पुरुषोत्तमवल्लभायै॥ ११

नमोऽस्तु नालीकनिभाननायै नमोऽस्तु दुग्धोदधिजन्मभूम्यै।
नमोऽस्तु सोमामृतसोदरायै नमोऽस्तु नारायणवल्लभायै॥ १२

संपत्कराणि सकलेन्द्रियनन्दनानि
साम्राज्यदानविभवानि सरोरुहाक्षि।
त्वद्वन्दनानि दुरिताहरणोद्यतानि
मामेव मातरनिशं कलयन्तु मान्ये॥ १३

यत्कटाक्षसमुपासनाविधिः सेवकस्य सकलार्थसंपदः।
संतनोति वचनाङ्गमानसैस्त्वां मुरारिहृदयेश्वरीं भजे॥ १४

सरसिजनिलये सरोजहस्ते धवलतमांशुकगन्धमाल्यशोभे।
भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम्॥ १५

दिग्धस्तिभिः कनककुम्भमुखासृष्ट-
स्वर्वाहिनीविमलचारुजलाप्लुताङ्गीम्।
प्रातर्नमामि जगतां जननीमशेष-
लोकाधिनाथगृहिणीममृताब्धिपुत्रीम्॥ १६

कमले कमलाक्षवल्लभे त्वं करुणापूरतरङ्गितैरपाङ्गैः।
अवलोकय मामकिञ्चनानां प्रथमं पात्रमकृत्रिमं दयायाः॥ १७

स्तुवन्ति ये स्तुतिभिरमूभिरन्वहं
त्रयीमयीं त्रिभुवनमातरं रमाम्।

गुणाधिका गुरुतरभाग्यभाजिनो
भवन्ति ते भुवि बुधभाविताशयाः ॥ १८

—*—

जगन्नाथकविरचिता

# लक्ष्मीलहरी

समुन्मीलन्नीलाम्बुजनिकरनीराजितरुचां
अपाङ्गानां भङ्गैरमृतलहरीश्रेणिमसृणैः ।
ह्रिया हीनं दीनं भृशमुदरलीनं करुणया
हरिश्यामा सा मामवतु जडसामाजिकमपि ॥ १

समुन्मीलत्वन्तःकरणकरुणोद्गारचतुरः
करिप्राणत्राणप्रणयिनि दृगन्तस्तव मयि ।
यमासाद्योन्माद्यद्द्विपनियुतगण्डस्थलगलन्-
मदक्लिन्नद्वारो भवति सुखसारो नरपतिः ॥ २

उरस्यस्य भ्रश्यत्कबरभरनिर्यत्सुमनसः
पतन्ति स्वर्बालाः स्मरशरपराधीनमनसः ।
सुरास्तं गायन्ति स्फुरिततनु गङ्गाधरमुखाः
तवायं दृक्पातो यदुपरि कृपातो विलसति ॥ ३

समीपे सङ्गीतस्वरमधुरभङ्गी मृगदृशां
विदूरे दानान्धद्विरदकलभोद्दामनिनदः ।
बहिर्द्वारे तेषां भवति हयहेषाकलकलो
दृगेषा ते येषामुपरि कमले देवि सदया ॥ ४

अगण्यैरिन्द्राद्यैरपि परमपुण्यैः परिचितो
जगज्जन्मस्थानप्रलयरचनाशिल्पनिपुणः ।

उदञ्चत्पीयूषाम्बुधिलहरिलीलामनुहरन्
अपाङ्गस्तेऽमन्दं मम कलुषवृन्दं दलयतु ॥ ५

नमन्मौलिश्रेणित्रिपुरपरिपन्थिप्रतिलसत्
कपर्दव्यावृत्तिस्फुरितफणिफूत्कारचकितः ।
लसत्फुल्लाम्भोजम्रदिमहरणः कोऽपि चरणः
चिरं चेतश्चारी मम भवतु वारीशदुहितुः ॥ ६

प्रवालानां दीक्षागुरुरपि च लाक्षारुणरुचां
नियन्त्री बन्धूकद्युतिनिकरबन्धूकृतिपटुः ।
नृणामन्तर्ध्वान्तं निबिडमपहर्तुं तव किल
प्रभात श्रीरेषा चरणरुचिवेषा विजयते ॥ ७

प्रभातप्रोन्मीलत्कमलवनसंचारसमये
शिखाः किञ्जल्कानां विदधति रुजं यत्र मृदुलाः ।
तदेतन्मातस्ते चरणमरुणश्लाघ्यकरुणं
कठोरा मद्वाणी कथमियमिदानीं प्रविशतु ॥ ८

स्मितज्योत्स्नामज्जद्द्विजमणिमयूखामृतझरैः
निषिञ्चन्तीं विश्वं तव विमलमूर्तिं स्मरति यः ।
अमन्दं स्यन्दन्ते वदनकमलादस्य कृतिनो
विविक्तौ वै कल्पाः सततमविकल्पा नवगिरः ॥ ९

शरौ मायाबीजौ हिमकरकलाक्रान्तशिरसौ
विधायोर्ध्वं बिन्दुं स्फुरितमिति बीजं जलधिजे ।
जपेद्यः स्वच्छन्दं स हि पुनरमन्दं गजघटा-
मदभ्राम्यद्भृङ्गैर्मुखरयति वेश्मानि विदुषाम् ॥ १०

स्मरो नामं नामं त्रिजगदभिरामं तव पदं
प्रपेदे सिद्धिं यां कथमिव नरस्तां कथयतु ।

यया पातं पातं पदकमलयोः पर्वतचरो
हरो हा रोषार्द्रामनुनयति शैलेन्द्रतनयाम्॥ ११

हरन्तो निःशङ्कं हिमकरकलानां रुचिरतां
किरन्तः स्वच्छन्दं किरणमयपीयूषनिकरम्।
विलुम्पन्तु प्रौढा हरिहृदयहाराः प्रियतमाः
ममान्तःसन्तापं तव चरणशोणाम्बुजनखाः॥ १२

मिषान्माणिक्यानां विगलितनिमेषं निमिषतां
अमन्दं सौन्दर्यं तव चरणयोरम्बुधिसुते।
पदालङ्काराणां जयति कलनिक्वाणनपटुः
उदञ्चन्नुद्दामः स्तुतिवचनलीलाकलकलः॥ १३

मणिज्योत्स्नाजलैर्निजतनुरुचां मांसलतया
जटालं ते जङ्घायुगलमघभङ्गाय भवतु।
भ्रमन्ती यन्मध्ये दरदलितशोणाम्बुजरुचां
दशां माला नीराजनमिव विधत्ते मधुरिपोः॥ १४

हरद्गर्वं सर्वं करिपतिकराणां मृदुतया
भृशं भाभिर्दम्भं कनकमयरम्भावनिरुहाम्।
लसज्जानुज्योत्स्ना तरणि परिणद्धं जलधिजे
तवोरुद्वन्द्वं नः श्लथयतु भवोरुज्वरभयम्॥ १५

कलत्काणां काञ्चीं मणिगणजटालामधिवहन्
वसानः कौसुम्भं वसनमसनं कौस्तुभरुचाम्।
मुनिव्रातैः प्रातः शुचिवचनजातैरतिनुतं
नितम्बस्ते बिम्बं हसति नवमम्बाम्बरमणेः॥ १६

जगन्मिथ्याभूतं मम निगदतां वेदवचसां
अभिप्रायो नाद्यावधि हृदयमध्याविशदयम्।

इदानीं विश्वेषां जनकमुदरं ते विमृशतो
विसन्देहं चेतोऽजनि गरुडकेतोः प्रियतमे ॥ १७

अनल्पैर्वादीन्द्रैरगणितमहायुक्तिनिवहैः
निरस्ता विस्तारं क्वचिदकलयन्ती तनुमपि ।
असत्ख्यातिव्याख्याधिकचतुरिमाख्यातमहिमा
वलग्ने लग्नेयं सुगतमतसिद्धान्तसरणिः ॥ १८

निदानं शृङ्गारप्रकरमकरन्दस्य कमले
महानेवालम्बो हरिनयनरोलम्बवरयोः ।
निधानं शोभानां निधनमनुतापस्य जगतो
जवेनाभीतिं मे दिशतु तव नाभीसरसिजम् ॥ १९

गभीरामुद्वेलां प्रथमरसकल्लोलमिलितां
विगाढुं ते नाभीविमलसरसीं गौर्मम मनाक् ।
पदं यावन्न्यस्यत्यहह विनिमग्नैव सहसा
नहि क्षेमं सूते गुरुमहिमभूतेष्वविनयः ॥ २०

कुचौ ते दुग्धाम्भोनिधिकुलशिखामण्डनमणे
हरेते सौभाग्यं यदि सुरगिरेश्चित्रमिह किम् ।
त्रिलोकीलावण्याहरणनवलीलानिपुणयोः
ययोर्दत्ते भूयः करमखिलनाथो मधुरिपुः ॥ २१

हरक्रोधत्रस्यन्मदन नवदुर्गद्वयतुलां
दधत्कोकद्वन्द्वद्युतिदमनदीक्षाधिगुरुताम् ।
तवैतद्वक्षोजद्वितयमरविन्दाक्षमहिले
मम स्वान्तध्वान्तं किमपि च नितान्तं गमयतु ॥ २२

अनेकब्रह्माण्डस्थितिनियमलीलाविलसिते
दयापीयूषाम्भोनिधिसहजसंवासभवने।
विधोश्चित्तायामे हृदयकमले ते तु कमले
मनाङ् मन्निस्तारस्मृतिरपि च कोणे निवसतु॥ २३

मृणालीनां लीलाः सहजलवणिम्ना लघयतां
चतुर्णां सौभाग्यं तव जननि दोष्णां वदतु कः।
लुठन्ति स्वच्छन्दं मरकतशिलामांसलरुचः
श्रुतीनां स्पर्धां ये दधत इव कण्ठे मधुरिपोः॥ २४

अलभ्यं सौरभ्यं कविकुलनयस्यारुचिरता
तथापि त्वद्धस्ते निवसदरविन्दं विकसितम्।
कलापे काव्यानां प्रकृतिकमनीयस्तुतिविधौ
गुणोत्कर्षाधानं प्रथितमुपमानं समजनि॥ २५

अनल्पं जल्पन्तु प्रतिहतधियः पल्लवतुलां
रसज्ञामज्ञानां क इव कमले मन्थरयतु।
त्रपन्तु श्रीभिक्षावितरणवशीभूतजगतां
कराणां सौभाग्यं तव तुलयितुं तुङ्गरसनाः॥ २६

समाहारः श्रीणां विरचितविहारो हरिदृशां
परीहारो भक्तप्रभवभवसन्तापसरणेः।
प्रहारः सर्वासामपि च विपदां विष्णुदयिते
ममोद्धारोपायं तव सपदि हारो विमृशतु॥ २७

अलङ्कुर्वाणानां मणिगणघृणीनां लवणिमा
यदीयाभिर्भाभिर्भजति महिमानं लघुरपि।
सुपर्वश्रेणीनां जनितपरसौभाग्यविभवाः
तवाङ्गुल्यस्ता मे ददतु हरिवामेऽभिलषितम्॥ २८

तपस्तेपे तीव्रं किमपि परितप्य प्रतिदिनं
तव ग्रीवालक्ष्मीलवपरिचयादाप्तविभवम्।
हरिः कम्बुं चुम्बत्यथ वहति पाणौ किमधिकं
वदामस्तत्रायं प्रणयवशतोऽस्यै स्पृहयति॥ २९

अभूदप्रत्यूहः सकलहरिदुल्लासनविधिः
विलीनो लोकानां स हि नयनतापोऽपि कमले।
तवास्मिन्पीयूषं किरति वदने रम्यवदने
कुतो हेतोश्चेतो विधुरयमुदेति स्म जलधेः॥ ३०

मुखाम्भोजे मन्दस्मितमधुरकान्त्या विकसता
द्विजानां ते हीरावलिविहितनीराजनरुचाम्।
इयं ज्योत्स्ना कापि स्रवदमृतसन्दोहसरसा
ममोद्यद्दारिद्र्यज्वरतरुणतापं तिरयतु॥ ३१

कुलैः कस्तूरीणां भृशमनिशमाशास्यमपि च
प्रभातप्रोन्मीलन्नलिननिवहैरश्रुतचरम्।
वहन्तः सौरभ्यं मृदुगतिविलासा मम शिवं
तव श्वासा नासापुटविहितवासा विदधताम्॥ ३२

कपोले ते दोलायितललितलोलालकवृते
विमुक्ता धम्मिल्लादभिलसति मुक्तावलिरियम्।
स्वकीयानां बन्दीकृतमसहमानैरिव बलात्
निबध्योर्ध्वं कृष्टा तिमिरनिकुरुम्बैर्विधुकला॥ ३३

प्रसादो यस्यायं नमदमितगीर्वाणमुकुट-
प्रसर्पज्ज्योत्स्नाभिश्चरणतलपीठार्चितविधिः।
दृगम्भोजं तत्ते गतिहसितमत्तेभगमने
वने लीनैर्दीनैः कथय कथमीयादिह तुलाम्॥ ३४

दुरापा दुर्वृत्तैर्दुरितदमने दारणभरा
दयार्द्रा दीनानामुपरि दलदिन्दीवरनिभा।
दहन्ती दारिद्र्यद्रुमकुलमुदारद्रविणदा
त्वदीया दृष्टिर्मे जननि दुरदृष्टं दलयतु॥ ३५

तव श्रोत्रे फुल्लोत्पलसकलसौभाग्यजयिनी
सदैव श्रीनारायणगुणगणौघप्रणयिनी।
रवैर्दीनां लीनामनिशमवधानातिशयिनी
ममाप्येतां वाचं जलधितनये गोचरयताम्॥ ३६

प्रभाजालैः प्राभातिकदिनकराभापनयनं
तवेदं खेदं मे विघटयतु ताटङ्कयुगलम्।
महिम्ना यस्यायं प्रलयसमयेऽपि क्रतुभुजां
जगत्पायं पायं स्वपिति निरपायं तव पतिः॥ ३७

निवासो मुक्तानां निबिडतरनीलाम्बुदनिभः
तवायं धम्मिल्लो विमलयतु मल्लोचनयुगम्।
भृशं यस्मिन्कालागुरुबहुलसौरभ्यनिवहैः
पतन्ति श्रीभिक्षार्थिन इव मदान्धा मधुलिहः॥ ३८

विलग्नौ ते पार्श्वद्वयपरिसरे मत्तकरिणौ
करोन्नीतैरञ्चन्मणिकलशमुग्धास्यगलितैः।
निषिञ्चन्तौ मुक्तामणिगणजयैस्त्वां जलकणैः
नमस्यामो दामोदरगृहिणि दारिद्र्यदलिताः॥ ३९

अये मातर्लक्ष्मि त्वदरुणपदाम्भोजनिकटे
लुठन्तं बालं मामविरलगलद्बाष्पजटिलम्।
सुधासेकस्निग्धैरतिमसृणमुग्धैः करतलैः
स्पृशन्ती मा रोदीरिति वद समाश्वास्यसि कदा॥ ४०

रमे पद्मे लक्ष्मि प्रणतजनकल्पद्रुमलते
सुधाम्भोधेः पुत्रि त्रिदशनिकरोपास्तचरणे।
परे नित्यं मातर्गुणमयि परब्रह्ममहिले
जगन्नाथस्याकर्णय मृदुलवर्णावलिमिमाम्॥ ४१

—*—

श्रीवेदान्तदेशिककृता

## श्रीस्तुतिः

मानातीतप्रथितविभवां मङ्गलं मङ्गलानां
वक्षःपीठं मधुविजयिनो भूषयन्तीं स्वकान्त्या।
प्रत्यक्षानुश्रविकमहिमप्रार्थिनीनां प्रजानां
श्रेयोमूर्तिं श्रियमशरणस्त्वां शरण्यां प्रपद्ये॥ १

आविर्भावः कलशजलधावध्वरे वाऽपि यस्याः
स्थानं यस्याः सरसिजवनं विष्णुवक्षःस्थलं वा।
भूमा यस्या भुवनमखिलं देवि दिव्यं पदं वा
स्तोकप्रज्ञैरनवधिगुणा स्तूयसे सा कथं त्वम्॥ २

स्तोतव्यत्वं दिशति भवती देहिभिः स्तूयमाना
तामेव त्वामनितरगतिः स्तोतुमाशंसमानः।
सिद्धारम्भः सकलभुवनश्लाघनीयो भवेयं
सेवापेक्षा तव चरणयोः श्रेयसे कस्य न स्यात्॥ ३

यत्संकल्पाद्भवति कमले यत्र देहिन्यमीषां
जन्मस्थेमप्रलयरचना जङ्गमाजङ्गमानाम्।
तत्कल्याणं किमपि यमिनामेकलक्ष्यं समाधौ
पूर्णं तेजः स्फुरति भवतीपादलाक्षारसाङ्कम्॥ ४

निष्प्रत्यूहप्रणयघटितं देवि नित्यानपायं
विष्णुस्त्वं चेत्यनवधिगुणं द्वन्द्वमन्योन्यलक्ष्यम्।
शेषश्चित्तं विमलमनसां मौलयश्च श्रुतीनां
संपद्यन्ते विहरणविधौ यस्य शय्याविशेषाः ॥ ५

उद्देश्यत्वं जननि भजतोरुज्झितोपाधिगन्धं
प्रत्यग्रूपे हविषि युवयोरेकशेषित्वयोगात्।
पद्मे पत्युस्तव च निगमैर्नित्यमन्विष्यमाणो
नावच्छेदं भजति महिमा नर्तयन् मानसं नः ॥ ६

पश्यन्तीषु श्रुतिषु परितः सूरिवृन्देन सार्धं
मध्येकृत्य त्रिगुणफलकं निर्मितस्थानभेदम्।
विश्वाधीशप्रणयिनि सदा विभ्रमद्यूतवृत्तौ
ब्रह्मेशाद्या दधति युवयोरक्षशारप्रचारम्॥ ७

अस्येशाना त्वमसि जगतः संश्रयन्ती मुकुन्दं
लक्ष्मीः पद्मा जलधितनया विष्णुपत्नीन्दिरेति।
यन्नामानि श्रुतिपरिपणान्येवमावर्तयन्तो
नावर्तन्ते दुरितपवनप्रेरिते जन्मचक्रे ॥ ८

त्वामेवाहुः कतिचिदपरे त्वत्प्रियं लोकनाथं
किं तैरन्तःकलहमलिनैः किंचिदुत्तीर्य मग्नैः ।
त्वत्संप्रीत्यै विहरति हरौ संमुखीनां श्रुतीनां
भावारूढौ भगवति युवां दम्पती दैवतं नः ॥ ९

आपन्नार्तिप्रशमनविधौ बद्धदीक्षस्य विष्णोः
आचख्युस्त्वां प्रियसहचरीमैकमत्योपपन्नाम्।
प्रादुर्भावैरपि समतनुः प्राध्वमन्वीयसे त्वं
दूरोत्क्षिप्तैरिव मधुरता दुग्धराशेस्तरङ्गैः ॥ १०

धत्ते शोभां हरिमरकते तावकी मूर्तिराद्या
तन्वी तुङ्गस्तनभरनता तप्तजाम्बूनदाभा।
यस्यां गच्छन्त्युदयविलयैर्नित्यमानन्दसिन्धौ
इच्छावेगोल्लसितलहरीविभ्रमं व्यक्तयस्ते॥ ११

आसंसारं विततमखिलं वाङ्मयं यद्विभूतिः
यद्भ्रूभङ्गात्कुसुमधनुषः किङ्करो मेरुधन्वा।
यस्यां नित्यं नयनशतकैरेकलक्ष्यो महेन्द्रः
पद्मे तासां परिणतिरसौ भावलेशैस्त्वदीयैः॥ १२

अग्रे भर्तुः सरसिजमये भद्रपीठे निषण्णां
अम्भोराशेरधिगतसुधासंप्लवादुत्थितां त्वाम्।
पुष्पासारस्थगितभुवनैः पुष्कलावर्तकाद्यैः
क्लृप्तारम्भाः कनककलशैरभ्यषिञ्चन्गजेन्द्राः॥ १३

आलोक्य त्वाममृतसहजे विष्णुवक्षःस्थलस्थां
शापाक्रान्ताः शरणमगमन्सावरोधाः सुरेन्द्राः।
लब्ध्वा भूयस्त्रिभुवनमिदं लक्षितं त्वत्कटाक्षैः
सर्वाकारस्थिरसमुदयां संपदं निर्विशन्ति॥ १४

आर्तत्राणव्रतिभिरमृतासारनीलाम्बुवाहैः
अम्भोजानामुषसि मिषतामन्तरङ्गैरपाङ्गैः।
यस्यां यस्यां दिशि विहरते देवि दृष्टिस्त्वदीया
तस्यां तस्यामहमहमिकां तन्वते संपदोघाः॥ १५

योगारम्भत्वरित मनसो युष्मदैकान्त्ययुक्तं
धर्मं प्राप्तुं प्रथममिह ये धारयन्ते धनायाम्।
तेषां भूमेर्धनपतिगृहादम्बरादम्बुधेर्वा
धारा निर्यान्त्यधिकमधिकं वाञ्छितानां वसूनाम्॥ १६

26

श्रेयस्कामाः कमलनिलये चित्रमाम्नायवाचां
चूडापीडं तव पदयुगं चेतसा धारयन्तः ।
छत्रच्छाया सुभगशिरसश्चामरस्मेरपार्श्वाः
श्लाघाशब्दश्रवणमुदिताः स्रग्विणः संचरन्ति ॥ १७

ऊरीकर्तुं कुशलमखिलं जेतुमादीनरातीन्
दूरीकर्तुं दुरितनिवहं त्यक्तुमाद्यामविद्याम् ।
अम्ब स्तम्बावधिकजननग्रामसीमान्तरेखां
आलम्बन्ते विमलमनसो विष्णुकान्ते दयां ते ॥ १८

जाताकाङ्क्षा जननि युवयोरेकसेवाधिकारे
मायालीढं विभवमखिलं मन्यमानास्तृणाय ।
प्रीत्यै विष्णोस्तव च कृतिनः प्रीतिमन्तो भजन्ते
वेलाभङ्गप्रशमनफलं वैदिकं धर्मसेतुम् ॥ १९

सेवे देवि त्रिदशमहिलामौलिमालार्चितं ते
सिद्धिक्षेत्रं शमितविपदां संपदां पादपद्मम् ।
यस्मिन्नीषन्नमितशिरसो यापयित्वा शरीरं
वर्तिष्यन्ते वितमसि पदे वासुदेवस्य धन्याः ॥ २०

सानुप्रासप्रकटितदयैः सान्द्रवात्सल्यदिग्धैः
अम्ब स्निग्धैरमृतलहरीलब्धसब्रह्मचर्यैः ।
धर्मे तापत्रयविरचिते गाढतप्तं क्षणं मां
आकिञ्चन्यग्लपितमनघैराद्रियेथाः कटाक्षैः ॥ २१

संपद्यन्ते भवभयतमीभानवस्त्वत्प्रसादात्
भावाः सर्वे भगवति हरौ भक्तिमुद्वेलयन्तः ।
याचे किं त्वामहमिह यतः शीतलोदारशीला
भूयो भूयो दिशसि महतां मङ्गलानां प्रबन्धान् ॥ २२

माता देवि त्वमसि भगवान्वासुदेवः पिता मे
जातः सोऽहं जननि युवयोरेकलक्ष्यं दयायाः।
दत्तो युष्मत्परिजनतया देशिकैरप्यतस्त्वं
किं ते भूयः प्रियमिति किल स्मेरवक्त्रा विभासि॥ २३

कल्याणानामविकलनिधिः काऽपि कारुण्यसीमा
नित्यामोदा निगमवचसां मौलिमन्दारमाला।
संपद्दिव्या मधुविजयिनः सन्निधत्तां सदा मे
सैषा देवी सकलभुवनप्रार्थनाकामधेनुः॥ २४

उपचितगुरुभक्तेरुत्थितं वेङ्कटेशात्
कलिकलुषनिवृत्त्यै कल्प्यमानं प्रजानाम्।
सरसिजनिलयायाः स्तोत्रमेतत्पठन्तः
सकलकुशलसीमा सार्वभौमा भवन्ति॥ २५

—*—

श्रीवत्सचिह्नमिश्रकृतः

## श्रीस्तवः ।

स्वस्ति श्रीर्दिशतादशेषजगतां स्वर्गापवर्गस्थितीः
स्वर्गं दुर्गतिमापवर्गिकपदं सर्वं च कुर्वन्हरिः।
यस्या वीक्ष्य मुखं तदिङ्गितपराधीनो विधत्तेऽखिलं
क्रीडेयं खलु नान्यथाऽस्य रसदा स्यादैकरस्यात्तया॥ १

हे श्रीर्देवि समस्तलोकजननि त्वां स्तोतुमीहामहे
युक्तां भावय भारतीं प्रगुणय प्रेमप्रधानां धियम्।
भक्तिं बन्धय नन्दयाश्रितमिमं दासं जनं तावकं
लक्ष्यं लक्ष्मि कटाक्षवीचिविसृतेस्ते स्याम चामी वयम्॥ २

स्तोत्रं नाम किमामनन्ति कवयो यद्यन्यदीयान्गुणान्
अन्यत्र त्वसतोऽधिरोप्य भणितिः सा तर्हि वन्ध्या त्वयि।
सम्यक्सत्यगुणाभिवर्णनमथो ब्रूयुः कथं तादृशी
वाग्वाचस्पतिनाप्यशक्यरचना त्वत्सद्गुणार्णोनिधौ॥ ३

ये वाचां मनसां च दुर्ग्रहतया ख्याता गुणास्तावकाः
तानेव प्रति साम्बुजिह्वमुदिता यन्मामिका भारती।
हास्यं तत्तु न मन्महे न हि चकोर्यैकाऽखिलां चन्द्रिकां
नालं पातुमिति प्रगृह्य रसनामासीत सत्यां तृषि॥ ४

क्षोदीयानपि दुष्टबुद्धिरपि निःस्नेहोऽप्यनीहोऽपि ते
कीर्तिं देवि लिहन्नहं न च बिभेम्यज्ञो न जिह्नेमि च।
दुष्येत्सा तु न तावता न हि शुना लीढाऽपि भागीरथी
दुष्येच्चापि न लज्जते न च बिभेत्यार्तिस्तु शाम्येच्छुनः॥ ५

ऐश्वर्यं महदेव वाऽल्पमथवा दृश्येत पुंसां हि यत्
तल्लक्ष्म्याः समुदीक्षणात्तव यतः सार्वत्रिकं वर्तते।
तेनैतेन न विस्मयेमहि जगन्नाथोऽपि नारायणो
धन्यं मन्यत ईक्षणात्तव यतः स्वात्मानमात्मेश्वरः॥ ६

ऐश्वर्यं यदशेषपुंसि यदिदं सौन्दर्यलावण्ययोः
रूपं यच्च हि मङ्गलं किमपि यल्लोके सदित्युच्यते।
तत्सर्वं त्वदधीनमेव यदतः श्रीरित्यभेदेन वा
यद्वा श्रीमदितीदृशेन वचसा देवि प्रथामश्नुते॥ ७

देवि त्वन्महिमावधिर्न हरिणा नापि त्वया ज्ञायते
यद्यप्येवमथापि नैव युवयोः सर्वज्ञता हीयते।
यन्नास्त्येव तदज्ञतामनुगुणां सर्वज्ञताया विदुः
व्योमाम्भोजमिदन्तया खलु विदन् भ्रान्तोऽयमित्युच्यते॥ ८

लोके वनस्पतिबृहस्पतितारतम्यं
यस्याः कटाक्षपरिणाममुदाहरन्ति।
सा भारती भगवती तु यदीयदासी
तां देवदेवमहिषीं श्रियमाश्रयामः ॥ ९

यस्याः कटाक्षमृदुवीक्षणदीक्षितेन
सद्यः समुल्लसितपल्लवमुल्ललास।
विश्वं विपर्ययसमुत्थविपर्ययं त्वां
तां देवदेवमहिषीं श्रियमाश्रयामः ॥ १०

—*—

## लक्ष्मीस्तुतिः

जयन्ति जगतां मातुः स्तनकुङ्कुमबिन्दवः।
मुकुन्दाश्लेषसंक्रान्तकौस्तुभश्रीविडम्बिनः ॥ १

पायात्पयोधिदुहितुः कपोलामलचन्द्रमाः।
यत्र संक्रान्तबिम्बेन हरिणा हरिणायितम् ॥ २

देवेऽर्पितवरणस्रजि बहुमाये वहति कैटभीरूपम्।
जयति सुरासुरहसिता लज्जाजिह्मेक्षणा लक्ष्मीः ॥ ३

तल्पीकृताहिरगणितगरुडो हाराभिहतविधिर्जयति।
फणशतपीतश्वासो रागान्धायाः श्रियः केलिः ॥ ४

स्मेराननेन हरिणा सस्पृहमाकारवेदिनाकलितम्।
जयति पुरुषायितायाः कमलायाः कैटभीध्यानम् ॥ ५

कमलासनकमलेक्षणकमलारिकिरीटकमलभृद्वाहैः।
नुतपदकमला कमला करधृतकमला करोतु मे कमलम् ॥ ६

किञ्जल्कराजिरिव नीलसरोजलग्ना
लेखेव काञ्चनमयी निकषोपलस्था।
सौदामिनी जलदमण्डलगामिनीव
पायादुरःस्थलगता कमला मुरारेः ॥ ७

दन्तैः कोररकिता स्मितैर्विकसिता भ्रूविभ्रमैः पत्रिता
दोर्भ्यां पल्लविता नखैः कुसुमिता लीलाभिरुद्वेलिता।
उत्तुङ्गस्तनमण्डलेन फलिता भक्ताभिलाषे हिता
काचित्कल्पलता सुरासुरनुता पायात्सुधाब्धेः सुता ॥ ८

उत्तुङ्गस्तनमण्डलोपरिलसत्प्रालम्बमुक्तामणेः
अन्तर्बिम्बितमिन्द्रनीलनिकरच्छायानुकारिद्युति।
लज्जाव्याजमुपेत्य नम्रवदना स्पष्टं मुरारेर्वपुः
पश्यन्ती मुदिता मुदेऽस्तु भवतां लक्ष्मीर्विवाहोत्सवे ॥ ९

आख्याते हसितं पितामह इति त्रस्तं कपालीति च
व्यावृत्तं गुरुरित्ययं दहन इत्याविष्कृता भीरुता।
पौलोमीपतिरत्यसूयितमथ व्रीडाविनम्रश्रिया
पायाद्वः पुरुषोत्तमोऽयमिति यो न्यस्तः स पुष्पाञ्जलिः ॥ १०

क्रीडाभिन्नहिरण्यशुक्तिकुहरे रक्तात्मनावस्थितान्
हारं हारमुदारकुङ्कुमरसानव्याजभव्यान्नखैः।
वीरश्रीकुचकुम्भसीम्नि लिखतो वीरस्य पत्रावलीः
तत्कालोचित भावबन्धमधुरं मन्दस्मितं पातु वः ॥ ११

पद्मायाः स्तनहेमसद्मनि मणिश्रेणीसमाकर्षके
किञ्चित्कञ्चुकसन्धिसन्निधिगते शौरेः करे तस्करे।
सद्यो जागृहि जागृहीति वलयध्वानैर्ध्रुवं गर्जता
कामेन प्रतिबोधिताः प्रहरिका रोमाङ्कुराः पान्तु वः। १२

यादृग्जानासि जाम्बूनदगिरिशिखरे कान्तिरिन्दोः कलानां
इत्यौत्सुक्येन पत्यौ स्मितमधुरमुखाम्भोरुहं भाषमाणे।
लीलादोलायमानश्रुतिकमलमिलद्भृङ्गसंगीतसाक्षी
पायादम्भोधिजायाः कुसुमशरकलानाट्यनान्दीनकारः।।। १३

उष्ठिन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीभारमंसे वहन्त्याः।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु।। १४

—*—

## यामुनाचार्यकृता

## ।। चतुःश्लोकी ।।

कान्तस्ते पुरुषोत्तमः फणिपतिः शय्याऽऽसनं वाहनं
वेदात्माविहगेश्वरो यवनिका माया जगन्मोहिनी।
ब्रह्मेशादिसुरव्रजस्सदयितः त्वद्दासदासीगणः
श्रीरित्येव च नाम ते भगवति ! ब्रूमः कथं त्वां वयम्।। १

यस्यास्ते महिमानमात्मन इव त्वद्वल्लभोऽपि प्रभुः
नालं मातुमियत्तया निरवधिं नित्यानुकूलं स्वतः।
तां त्वां दास इति प्रपन्न इति च स्तोष्याम्यहं निर्भयः
लोकैकेश्वरि लोकनाथदयिते ! दान्तं दशां ते विदन्।। २

ईषत्त्वत्करुणानिरीक्षणसुधासन्धुक्षणाद्रक्ष्यते
नष्टं प्राक्तदलाभतस्त्रिभुवनं संप्रत्यनन्तोदयम्।
श्रेयो न ह्यरविन्दलोचनमनः कान्ताप्रसादादृते
संसृत्यक्षरवैष्णवाध्वसु नृणां संभाव्यते कर्हिचित्।। ३

शान्तानन्तमहाविभूति परमं यद्ब्रह्मरूपं हरेः
मूर्तं ब्रह्म ततोऽपि तत्प्रियतरं रूपं यदत्यद्भुतम्।
यान्यन्यानि यथासुखं विहरतो रूपाणि सर्वाणि
तान्याहुः स्वैरनुरूप रूपविभवैर्गाढोपगूढानि ते ।। ४

आकारत्रयसंपन्नामरविन्दनिवासिनीम्।
अशेषजगदीशित्रीं वन्दे वरदवल्लभाम्।। ५

—*—

श्रीवेदान्तदेशिकविरचिता

# गोदास्तुतिः

श्रीविष्णुचित्त कुल नन्दनकल्पवल्लीं
श्रीरङ्गराज हरिचन्दन योग दृश्याम्।
साक्षात् क्षमां करुणया कमलामिवान्यां
गोदामनन्यशरणः शरणं प्रपद्ये ।। १

वैदेशिकः श्रुति गिरामपि भूयसीनां
वर्णेषु माति महिमा न हि मादृशां ते।
इत्थं विदन्तमपि मां सहसैव गोदे
मौन द्रुहो मुखरयन्ति गुणास्त्वदीयाः ।। २

त्वत्प्रेयसः श्रवणयोरमृतायमानां
तुल्यां त्वदीय मणि नूपुर शिञ्जितानाम्।
गोदे त्वमेव जननि त्वदभिष्टवार्हां
वाचं प्रसन्न मधुरां मम संविधेहि ।। ३

कृष्णान्वयेन दधतीं यमुनानुभावं
तीर्थैर्यथावदवगाह्य सरस्वतीं ते।
गोदे विकस्वर धियां भवती कटाक्षात्
वाचः स्फुरन्ति मकरन्दमुचः कवीनाम्॥ ४

अस्मादृशामपकृतौ चिरदीक्षितानाम्
अह्नाय देवि दयते यदसौ मुकुन्दः।
तन्निश्चितं नियमितस्तव मौलि दाम्ना
तन्त्री निनादमधुरैश्च गिरां निगुम्भैः॥ ५

शोणाऽधरेपि कुचयोरपि तुङ्गभद्रा
वाचां प्रवाह निवहेऽपि सरस्वती त्वम्।
अप्राकृतैरपि रसैर्विरजा स्वभावात्
गोदाऽपि देवि कमितुर्ननु नर्मदाऽसि॥ ६

वल्मीकतः श्रवणतो वसुधात्मनस्ते
जातो बभूव स मुनिः कविसार्वभौमः।
गोदे किमद्भुतमिदं यदमी स्वदन्ते
वक्त्रारविन्द मकरन्द निभाः प्रबन्धाः॥ ७

भोक्तुं तव प्रियतमं भवतीव गोदे
भक्तिं निजां प्रणय भावनया गृणन्तः।
उच्चावचैर्विरह संगमजैरुदन्तैः
शृङ्गारयन्ति हृदयं गुरवस्त्वदीयाः॥ ८

मातः समुत्थितवतीमधिविष्णुचित्तं
विश्वोपजीव्यममृतं वचसा दुहानाम्।
तापच्छिदं हिम रुचेरिव मूर्तिमन्यां
सन्तः पयोधि दुहितुः सहजां विदुस्त्वाम्॥ ९

तातस्तु ते मधुभिदः स्तुति लेश वश्यात्
कर्णामृतैः स्तुति शतैरनवाप्त पूर्वम्।
त्वन्मौलि गन्ध सुभगामुपहृत्य मालां
लेभे महत्तर पदानुगुणं प्रसादम्॥ १०

दिग्दक्षिणाऽपि परि पक्त्रिम पुण्य लभ्यात्
सर्वोत्तरा भवति देवि तवावतारात्।
यत्रैव रङ्गपतिना बहुमान पूर्वं
निद्रालुनापि नियतं निहिताः कटाक्षाः॥ ११

प्रायेण देवि भवतीव्यपदेश योगात्
गोदावरी जगदिदं पयसा पुनीते।
यस्यां समेत्य समयेषु चिरं निवासात्
भागीरथीप्रभृतयोऽपि भवन्ति पुण्याः॥ १२

नागेशयः सुतनु पक्षिरथः कथं ते
जातः स्वयंवर पतिः पुरुषः पुराणः।
एवं विधाः समुचितं प्रणयं भवत्याः
सन्दर्शयन्ति परिहासगिरः सखीनाम्॥ १३

त्वद्भुक्त माल्य सुरभीकृत चारुमौलेः
हित्वा भुजान्तरगतामपि वैजयन्तीम्।
पत्युस्तवेश्वरि मिथः प्रतिघातलोलाः
बर्हातपत्र रुचिमारचयन्ति भृङ्गाः॥ १४

आमोदवत्यपि सदा हृदयंगमाऽपि
रागान्विताऽपि ललिताऽपि गुणोत्तराऽपि।
मौलिस्रजा तव मुकुन्दकिरीट भाजा
गोदे भवत्यधरिता खलु वैजयन्ती॥ १५

त्वन्मौलिदामनि विभोः शिरसा गृहीते
स्वच्छन्द कल्पित सपीति रस प्रमोदाः ।
मञ्जु स्वना मधुलिहो विदधुः स्वयं ते
स्वायंवरं कमपि मङ्गलतूर्य घोषम् ।। १६

विश्वासमान रजसा कमलेन नाभौ
वक्षःस्थले च कमलास्तन चन्दनेन ।
आमोदितोऽपि निगमैर्विभुरङ्घ्रियुग्मे
धत्ते नतेन शिरसा तव मौलि मालाम् ।। १७

चूडा पदेन परिगृह्य तवोत्तरीयं
मालामपि त्वदलकैरधिवास्य दत्ताम् ।
प्रायेण रङ्गपतिरेष बिभर्ति गोदे
सौभाग्य संपदभिषेक महाधिकारम् ।। १८

तुङ्गैरकृत्रिमगिरः स्वयमुत्तमाङ्गैः
यं सर्वगन्ध इति सादरमुद्वहन्ति ।
आमोदमन्यमधिगच्छति मालिकाभिः
सोऽपि त्वदीय कुटिलालक वासिताभिः ।। १९

धन्ये समस्त जगतां पितुरुत्तमाङ्गे
त्वन्मौलि माल्य भर संभरणेन भूयः ।
इन्दीवर स्रजमिवादधति त्वदीयानि
आकेकराणि बहुमान विलोकितानि ।। २०

रङ्गेश्वरस्य तव च प्रणयानुबन्धात्
अन्योन्य माल्य परिवृत्तिमभिष्टुवन्तः ।
वाचालयन्ति वसुधे रसिकास्त्रिलोकीं
न्यूनाधिकत्व समता विषयैर्विवादैः ।। २१

दूर्वा दल प्रतिमया तव देह कान्त्या
गोरोचना रुचिरया च रुचेन्दिरायाः ।
आसीदनुज्झित शिखावल कण्ठशोभं
माङ्गल्यदं प्रणमतां मधुवैरि गात्रम् ।। २२

अर्च्यं समर्च्य नियमैर्निगम प्रसूनैः
नाथं त्वया कमलया च समेयिवांसम् ।
मातश्चिरं निरविशन् निजमाधिराज्यं
मान्या मनु प्रभृतयोऽपि महीक्षितस्ते ।। २३

आर्द्रापराधिनि जनेऽप्यभिरक्षणार्थं
रङ्गेश्वरस्य रमया विनिवेद्यमाने ।
पार्श्वे परत्र भवती यदि तत्र नासीत्
प्रायेण देवि वदनं परिवर्तितं स्यात् ।। २४

गोदे गुणैरपनयन् प्रणतापराधान्
भ्रूक्षेप एव तव भोग रसानुकूलः ।
कर्मानुबन्धि फलदान रतस्य भर्तुः
स्वातन्त्र्य दुर्व्यसन मर्मभिदा निदानम् ।। २५

रङ्गे तटिद्गुणवतो रमयैव गोदे
कृष्णाम्बुदस्य घटितां कृपया सुवृष्ट्या ।
दौर्गत्य दुर्विष विनाश सुधा नदीं त्वां
सन्तः प्रपद्य शमयन्त्यचिरेण तापान् ।। २६

जातापराधमपि मामनुकम्प्य गोदे
गोप्त्री यदि त्वमसि युक्तमिदं भवत्याः ।
वात्सल्य निर्भरतया जननी कुमारं
स्तन्येन वर्धयति दष्ट पयोधराऽपि ।। २७

शतमख मणि नीला चारु कल्हार हस्ता
स्तन भर नमिताङ्गी सान्द्र वात्सल्य सिन्धुः ।
अलक विनिहिताभिः स्रग्भिराकृष्टनाथा
विलसतु हृदि गोदा विष्णुचित्तात्मजा नः ।। २८

इति विकसित भक्तेरुत्थितां वेङ्कटेशात्
बहुगुण रमणीयां वक्ति गोदास्तुतिं यः ।
स भवति बहुमान्यः श्रीमतो रङ्गभर्तुः
चरण कमलसेवां शाश्वतीमभ्युपैष्यन् ।। २९

—*—

पुण्डरीककृतं

## तुलसीस्तोत्रम्

जगद्धात्रि नमस्तुभ्यं विष्णोश्च प्रियवल्लभे ।
यतो ब्रह्मादयो देवाः सृष्टिस्थित्यन्तकारिणः ।। १

नमस्तुलसि कल्याणि नमो विष्णुप्रिये शुभे ।
नमो मोक्षप्रदे देवि नमः संपत्प्रदायिके ।। २

तुलसी पातु मां नित्यं सर्वापद्भ्योऽपि सर्वदा ।
कीर्तितापि स्मृता वापि पवित्रयति मानवम् ।। ३

नमामि शिरसा देवीं तुलसीं विलसत्तनुम् ।
यां दृष्ट्वा पापिनो मर्त्या मुच्यन्ते सर्वकिल्बिषात् ।। ४

तुलस्या रक्षितं सर्वं जगदेतच्चराचरम् ।
या विनिर्हन्ति पापानि दृष्टा वा पापिभिर्नरैः ।। ५

नमस्तुलस्यतितरां यस्यै बद्ध्वा बलिं कलौ ।
कलयन्ति सुखं सर्वं स्त्रियो वैश्यास्तथापरे ।। ६

तुलस्या नापरं किंचिद्दैवतं जगतीतले ।
यथा पवित्रितो लोको विष्णुसङ्गेन वैष्णवः ।। ७

तुलस्याः पल्लवं विष्णोः शिरस्यारोपितं कलौ ।
आरोपयति सर्वाणि श्रेयांसि वरमस्तके ।। ८

तुलस्यां सकला देवा वसन्ति सततं यतः ।
अतस्तामर्चयेल्लोके सर्वान्देवान्समर्चयन् ।। ९

नमस्तुलसि सर्वज्ञे पुरुषोत्तम वल्लभे ।
पाहि मां सर्वपापेभ्यः सर्वसंपत्प्रदायिके ।। १०

इति स्तोत्रं पुरा गीतं पुण्डरीकेण धीमता ।
विष्णुमर्चयता नित्यं शोभनैस्तुलसीदलैः ।। ११

तुलसी श्रीर्महालक्ष्मीर्विद्याऽविद्या यशस्विनी ।
धर्म्या धर्मानना देवी देवदेवमनःप्रिया ।। १२

लक्ष्मीप्रियसखी देवी द्यौर्भूमिरचला चला ।
षोडशैतानि नामानि तुलस्याः कीर्तयन्नरः ।। १३

लभते सुतरां भक्तिमन्ते विष्णुपदं लभेत् ।
तुलसी भूर्महालक्ष्मीः पद्मिनी श्रीहरिप्रिया ।। १४

तुलसी श्रीसखि शुभे पापहारिणि पुण्यदे ।
नमस्ते नारदनुते नारायणमनःप्रिये ।। १५

—*—

वेदान्तदेशिककृता

# भूस्तुतिः

सङ्कल्पकल्पलतिकामवधिं क्षमायाः
स्वेच्छा वराह महिषीं सुलभानुकम्पाम्।
विश्वस्य मातरमकिञ्चन कामधेनुं
विश्वम्भरामशरणः शरणं प्रपद्ये ॥ १

त्वं व्याहृतिः प्रथमतः प्रणवः प्रियस्ते
संवेदयत्यखिलमन्त्र गणस्तमेव।
इत्थं प्रतीत विभवामितरेष्विदानीं
स्तोतुं यथावदवने क इवार्हति त्वाम् ॥ २

नित्यं हिताहित विपर्यय बद्धभावे
त्वद्वीक्षणैक विनिवर्त्य बहु व्यपाये।
मुग्धाक्षरैरखिलधारिणि मोदमाना
मातः स्तनन्धयधियं मयि वर्तयेथाः ॥ ३

सङ्कल्प किङ्कर चराचर चक्रवालं
सर्वातिशायिनमनन्तशयस्य पुंसः।
भूमानमात्मविभवैः पुनरुक्तयन्ती
वाचामभूमिरपि भूमिरसि त्वमेका ॥ ४

वेधस्तृणावधि विहार परिच्छदं ते
विश्वं चराचरतया व्यतिभिद्यमानम्।
अम्ब त्वदाश्रिततया परिपोषयन्ती
विश्वम्भरस्य दयिताऽसि तदेक नामा ॥ ५

सर्वंसहेत्यवनिरित्यचलेति मातः
विश्वम्भरेति विपुलेति वसुन्धरेति।
अन्यानि चान्यविमुखान्यभिधान वृत्त्या
नामान्यमूनि कथयन्ति तवानुभावम्॥ ६

तापान् क्षिपन् प्रसविता सुमनो गणानां
प्रच्छाय शीतल तलः प्रदिशन् फलानि।
त्वत्सङ्गमात् भवति माधवि लब्ध पोषः
शाखा शतैरधिगतो हरिचन्दनोऽसौ॥ ७

स्मेरेण वर्धित रसस्य मुखेन्दुना ते
निस्पन्दतां विजहतो निजया प्रकृत्या।
विश्रान्ति भूमिरसि तत्वतरङ्गपङ्क्तेः
वेलेव विष्णुजलधेरपृथग्भवन्ती॥ ८

स्वाभाविके वसुमति श्रुतिभिर्विभाव्ये
पत्युर्महिम्नि भवतीं प्रतिपन्न वासाम्।
शङ्के विमान वहन प्रतिमा समानाः
स्तम्बेरम प्रभृतयोऽपि वहन्ति सत्त्वाः॥ ९

संभावयन् मधुरिपुः प्रणयानुरोधात्
वक्षःस्थलेन वरुणालय राजकन्याम्।
विश्वम्भरे बहुमुखप्रतिपन्न भोगः
शेषात्मना तु भवतीं शिरसा दधाति॥ १०

क्रीडा वराह दयिते कृतिनः क्षितीन्द्राः
संक्रन्दनस्तदितरेऽपि दिशामधीशाः।
आमोदयन्ति भुवनान्यलिकाश्रितानां
अम्ब त्वदङ्घ्रि रजसां परिणाम भेदैः॥ ११

भूतेषु यत् त्वदभिमान विशेष पात्रं
पोषं तदेव भजतीति विभावयन्तः।
भूतं प्रभूत गुणपञ्चकमाद्यमेव
प्रायो निदर्शनतया प्रतिपादयन्ति॥ १२

कान्तस्तवैष करुणा जलधिः प्रजानां
आज्ञातिलङ्घन वशादुपजात रोषः।
अह्नाय विश्व जननि क्षमया भवत्या
सर्वावगाहन सहामुपयात्यवस्थाम्॥ १३

आश्वासनाय जगतां पुरुषे परस्मिन्
आपन्न रक्षण दशामभिनेतुकामे।
अन्तर्हितेतर गुणादबला स्वभावात्
औदन्वते पयसि मज्जनमभ्यनैषीः॥ १४

पूर्वं वराह वपुषा पुरुषोत्तमेन
प्रीतेन भोगि सदने समुदीक्षितायाः।
पादाहताः प्रलय वारिधयस्तवासन्
उद्वाह मङ्गल विधेरुचिता मृदङ्गाः॥ १५

व्योमातिलङ्घिनि विभोः प्रलयाम्बु राशौ
वेशन्त लेश इव मातुमशक्य मूर्तेः।
सद्यः समुद्र वसने सरसैरकार्षीः
आनन्द सागरमपारमपाङ्ग पातैः॥ १६

27

दंष्ट्रा विदारित महासुर शोणिताङ्कैः
अङ्गैः प्रियस्तव दधे परिरम्भ लीलाम्।
सा ते पयोधिजल केलि समुत्थितायाः
सैरन्ध्रिकेव विदधे नवमङ्गरागम्॥ १७

अन्योन्य संवलन जृम्भित तूर्य घोषैः
संवर्तसिन्धुसलिलैर्विहिताभिषेका।
एकातपत्रयसि विश्वमिदं गुणैः स्वैः
अध्यास्य भर्तुरधिकोन्नतमंस पीठम्॥ १८

भर्तुस्तमालरुचिरे भुज मध्य भागे
पर्याय मौक्तिकवती पृषतैः पयोधेः।
तापानुबन्ध शमनी जगतां त्रयाणां
तारापथे स्फुरसि तारकिता निशेव॥ १९

आसक्त वासव शरासन पल्लवैस्त्वां
संवृद्धये शुभ तटिद्गुण जाल रम्यैः।
देवेश दिव्य महिषीं धृत सिन्धु तोयैः
जीमूत रत्न कलशैरभिषिञ्चति द्यौः॥ २०

आविर्मदैरमरदन्तिभिरुह्यमानां
रत्नाकरेण रुचिरां रशनागुणेन।
मातस्त्रिलोक जननीं वन मालिनीं त्वां
माया वराह महिषीमवयन्ति सन्तः॥ २१

निष्कण्टक प्रशमयोग निषेवणीयां
छाया विशेष परिभूत समस्त तापाम्।
स्वर्गापवर्गसरणिं भवतीमुशन्ति
स्वच्छन्द सूकरवधूमवधूत पङ्काम्॥ २२

गण्डोज्वलां गहन कुन्तल दर्शनीयां
शैलस्तनीं तरल निर्झरलम्ब हाराम्।
श्यामां स्वतस्त्रियुग सूकर गेहिनि त्वं
व्यक्तिं समुद्र वसनामुभयीं बिभर्षि॥ २३

निःसंशयैर्निगम सीमनि विष्णुपत्नि
प्रख्यापितं भृगु मुखैर्मुनिभिः प्रतीतैः ।
पश्यन्त्यनन्य पर धी रस संस्तुतेन
सन्तः समाधि नयनेन तवानुभावम् ॥ २४

संचोदिता करुणया चतुरः पुमर्थान्
व्यातन्वती विविध मन्त्र गणोपगीता ।
संचिन्त्यसे वसुमति स्थिर भक्ति बन्धैः
अन्तर्बहिश्च बहुधा प्रणिधान दक्षैः ॥ २५

क्रीडा गृहीत कमलादि विशेष चिह्नां
विश्राणिताभयवरां वसुधे सभूतिम् ।
दौर्गत्य दुर्विषविनाश सुधानदीं त्वां
संचिन्तयन् हि लभते धनदाधिकारान् ॥ २६

उद्वेलकल्मष परम्परितादमर्षात्
उत्तंसितेन हरिमञ्जलिनाऽप्यधृष्यम् ।
आकस्मिकोऽयमधिगम्ययति प्रजानां
अम्ब त्वदीय करुणा परिणाम एव ॥ २७

प्रत्येकमब्द नियुतैरपि दुर्व्यपोहात्
प्राप्ते विपाकसमये जनितानुतापात् ।
नित्यापराध निवहाच्चकितस्य जन्तोः
गन्तुं मुकुन्द चरणौ शरणं क्षमे त्वम् ॥ २८

त्राणाभिसन्धि सुभगेऽपि सदा मुकुन्दे
संसार तन्त्र वहनेन विलम्बमाने ।
रक्षा विधौ तनुभृतामनघानुकम्पा
मातः स्वयं वितनुषे महतीमपेक्षाम् ॥ २९

धर्मं द्रुहं सकलदुष्कृति सार्वभौमम्
आत्मानभिज्ञमनुतापलवोज्झितं माम्।
वैतान सूकरपतेश्चरणारविन्दे
सर्वंसहे ननु समर्पयितुं क्षमा त्वम्॥ ३०

तापत्रयीं निरवधिं भवतीदयार्द्राः
संसारघर्मजनितां सपदि क्षिपन्तः।
मातर्भजन्तु मधुरामृत वर्ष मैत्रीं
माया वराह दयिते मयि ते कटाक्षाः॥ ३१

पत्युर्दक्षिण पाणि पङ्कजपुटे विन्यस्त पादाम्बुजा
वामं पन्नग सार्वभौम सदृशं पर्यङ्कयन्ती भुजम्।
पौत्र स्पर्श लसत्कपोल फलका फुल्लारविन्देक्षणा
सा मे पुष्यतु मङ्गलान्यनुदिनं सर्वाणि सर्वंसहा॥ ३२

'अस्येशाना जगत' इति या श्रूयते विष्णुपत्नी
तस्याः स्तोत्रं विरचितमिदं वेङ्कटेशेन भक्त्या।
श्रद्धा भक्ति प्रचय गुरुणा चेतसा संस्तुवानो
यद्यत्कामः सपदि लभते तत्र तत्र प्रतिष्ठाम्॥ ३३

—*—

## सीतास्तुतिः

उन्मृष्टं कुचसीम्नि पत्रमकरं दृष्ट्वा हठालिङ्गनात्
कोपो मास्तु पुनर्लिखाम्यमुमिति स्मेरे रघूणां वरे।
कोपेनारुणितोऽश्रुपातदलितः प्रेम्णा च विस्तारितो
दत्तो मैथिलकन्यया दिशतु नः क्षेमं कटाक्षाङ्कुरः॥

—*—

विश्वनाथचक्रवर्तिठकुरकृतम्

# बृन्दादेव्यष्टकम्

गाङ्गेयचाम्पेय तडिद्विनिन्दि रोचिः प्रवाहस्नपितात्मबृन्दे।
बन्धूकबन्धुद्युतिदिव्यवासोबृन्दे नुमस्ते चरणारविन्दम्।। १

बिम्बाधरोदित्वरमन्दहास्य नासाग्रमुक्ताद्युति दीपितास्ये।
विचित्ररत्नाभरणश्रियाढ्ये वृन्दे नुमस्ते चरणारविन्दम्।। २

समस्तवैकुण्ठशिरोमणौ श्रीकृष्णस्य बृन्दावन धन्य धाम्नि।
दत्ताधिकारे वृषभानुपुत्र्या बृन्दे नुमस्ते चरणारविन्दम्।। ३

त्वदाज्ञया पल्लवपुष्पभृङ्ग मृगादिभिर्माधवकेलिकुञ्जाः।
मध्वादिभिर्भान्ति विभूष्यमाणाः वृन्दे नुमस्ते चरणारविन्दम्।। ४

त्वदीयदौत्येन निकुञ्जयूनोः अत्युत्कयोः केलिविलाससिद्धिः।
त्वत्सौभगं केन निरुच्यतां तद्बृन्दे नुमस्ते चरणारविन्दम्।। ५

रासाभिलाषो वसतिश्च वृन्दावने त्वदीशाङ्घ्रिसरोजसेवा।
लभ्या च पुंसां कृपया तवैव बृन्दे नुमस्ते चरणारविन्दम्।। ६

त्वं कीर्त्यसे सात्वततन्त्रविद्भिः लीलाभिधाना किल कृष्णशक्तिः।
तवैव मूर्तिस्तुलसी नृलोके बृन्दे नुमस्ते चरणारविन्दम्।। ७

भक्त्या विहीना अपराधलेशैः क्षिप्ताश्च कामादितरङ्गमध्ये।
कृपामयि त्वां शरणं प्रपन्नाः बृन्दे नुमस्ते चरणारविन्दम्।। ८

बृन्दाष्टकं यः शृणुयात्पठेच्च बृन्दावनाधीश पदाब्जभृङ्गः।
स प्राप्य बृन्दावननित्यवासं तत्प्रेमसेवां लभते कृतार्थः।। ९

—*—

# श्रीराधिकाष्टकम्

रस-वलित-मृगाक्षी मौलि माणिक्य लक्ष्मीः
प्रमुदितमुरवैरि प्रेम वापीमराली।
व्रज वर वृषभानोः पुण्य गीर्वाण वल्ली
स्नपयतु निजदास्ये राधिका मां कदा नु॥ १

स्फुरदरुण दुकूल द्योतितोद्यन्नितम्ब-
स्थलमभि वरकाञ्चीलास्य मुल्लासयन्ती।
कुचकलश विलास स्फीत मुक्तासरःश्रीः
स्नपयतु निजदास्ये राधिका मां कदा नु॥ २

सरसिजवर गर्भाखर्व कान्तिः समुद्यत्-
तरुणिम घनसाराश्लिष्ट कैशोर सीधुः।
दरविकसित हास्य स्यन्दि बिम्बाधराग्रा
स्नपयतु निजदास्ये राधिका मां कदा नु॥ ३

अतिचटुलतरं तं काननान्तर्मिलन्तं
व्रजनृपतिकुमारं वीक्ष्य शङ्काकुलाक्षी।
मधुर मधु वचोभिः संस्तुता नेत्रभङ्ग्या
स्नपयतु निजदास्ये राधिका मां कदा नु॥ ४

व्रजकुलमहिलानां प्राणभूताऽखिलानां
पशुप पति गृहिण्याः कृष्णवत् प्रेमपात्रम्।
सुललित ललितान्तः स्नेह फुल्लान्तरात्मा
स्नपयतु निजदास्ये राधिका मां कदा नु॥ ५

निरवधि सविशाखा शाखियूथ प्रसूनैः
स्रजमिह रजयन्ती वैजयन्तीं वनान्ते।
अघविजय वरोरः प्रेयसी श्रेयसी सा
स्नपयतु निजदास्ये राधिका मां कदा नु॥ ६

प्रकटितनिवासं स्निग्धवेणुप्रणादैः
द्रुतगतिहरिमारात् प्राप्य कुञ्जे स्मिताक्षी।
श्रवणकुहरकण्डूं तन्वती नम्रवक्त्रा
स्नपयतु निजदास्ये राधिका मां कदा नु॥ ७

अमलकमलराजिस्पर्शवात प्रशीते
निजसरसि निदाघे सायमुल्लासिनीयम्।
परिजनगणयुक्ता क्रीडयन्ती बकारिं
स्नपयतु निजदास्ये राधिका मां कदा नु॥ ८

पठति विमलचेताः मिष्टराधाष्टकं यः
परिहृत निखिलाशासन्ततिः कातरः सन्।
पशुपपति कुमारः कम्रमामोदितस्तं
निजजनगणमध्ये राधिकायास्तनोति॥ ९

—*—

श्रीकृष्णदासकविराजविरचितं

## ॥ श्रीराधिकाष्टकम् ॥

कुङ्कुमाक्तकाञ्चनाब्ज गर्वहारि गौरभा
पीतनाञ्चिताब्ज गन्धकीर्ति निन्दिसौरभा।
वल्लवेशसूनु सर्ववाञ्छितार्थ साधिका
मह्यमात्मपादपद्म दास्यदाऽस्तु राधिका॥ १

कौरविन्द कान्तिनिन्दि चित्रपत्रशाटिका
कृष्ण मत्तभृङ्गकेलि फुल्लपुष्प वाटिका।
कृष्ण नित्यसङ्गमार्थपद्मबन्धुराधिका
मह्यमात्मपादपद्मदास्यदाऽस्तु राधिका॥ २

सौकुमार्य सृष्ट पल्लवालिकीर्ति निग्रहा
चन्द्रचन्दनोत्पलेन्दु सेव्यशीतविग्रहा।
स्वाभिमर्शवल्लवीशकामतापबाधिका
मह्यमात्मपादपद्मदास्यदाऽस्तु राधिका॥ ३

विश्ववन्द्य यौवताभिवन्दितापि या रमा
रूप नव्ययौवनादिसम्पदा न यत्समा।
शीलहार्दलीलया च सा यतोऽस्ति नाधिका
मह्यमात्मपादपद्मदास्यदास्तु राधिका॥ ४

रासलास्य गीतनर्मसत्कलालि पण्डिता
प्रेम रम्यरूपवेश सद्गुणालि मण्डिता।
विश्वनव्य गोपयोषिदालितोपि याऽधिका
मह्यमात्मपादपद्मदास्यदाऽस्तु राधिका॥ ५

नित्य नव्य रूपकेलि कृष्णभाव सम्पदा
कृष्णरागबन्धगोपयौवतेषु कम्पदा।
कृष्णरूपवेशकेलिलग्नसत्समाधिका
मह्यमात्मपादपद्मदास्यदाऽस्तु राधिका॥ ६

स्वेदकम्प कण्टकाश्रु गद्गदादि सञ्चिता
मर्षहर्ष वामतादि भाव भूषणाञ्चिता।
कृष्ण नेत्रतोषिरत्नमण्डनालिदाधिका
मह्यमात्मपादपद्मदास्यदाऽस्तु राधिका॥ ७

या क्षणार्ध कृष्ण विप्रयोगसन्ततोदिता-
नेकदैन्य चापलादि भावबृन्दमोदिता।
यत्नलब्धकृष्णसङ्ग निर्गताखिलाधिका
मह्यमात्मपादपद्मदास्यदाऽस्तु राधिका ॥ ८

अष्टकेन यस्त्वनेन नौति कृष्णवल्लभां
दर्शनेऽपि शैलजादि योषिदालिदुर्लभाम्।
कृष्णसङ्गनन्दितात्मदास्यसीधुभाजनं
तं करोति नन्दितालिसञ्चयाशु सा जनम् ॥ ९

—*—

व्रजमोहनदासकृतं

## ॥ श्रीराधास्तोत्रम् ॥

जय जय वृषभानुनन्दिनि रमणीशिरोमणि राधिके।
जय जय मोहन नागरशेखर मदनमोहन मनोहारिके ॥ १

जय जय बृन्दाविपिनविहारिणि श्यामसुन्दरसुखदायिके।
जय जय ललितादिकवशवर्तिनि नन्दनन्दनहृदि शायिके ॥ २

जय जय गोपीजन रतिनायका लिङ्गन सुखजीविके।
जय जय प्रेम सुधामयि सुन्दरि पीताम्बरधरसेविके ॥ ३

जय जय नीलाम्बरवरधारिणि व्रजपतिसुतहृतवंशिके।
जय जय शास्त्रागमान्तरवर्तिनि सिद्धसतीकुलवंशिके ॥ ४

जय जय रासविनोदविमोहिनि रासेश्वरि रसवर्धिके।
जय जय कान्त्यामृतमदखण्डिनि रूपवतीमदमर्दिके ॥ ५

जय जय केशिनिषूदनकर्षिणि भावविशेषविभूषिके।
जय जय पूर्णानन्दमुकुटमणे बिम्बाधररसपोषिके ॥ ६

जय जय गोकुलमण्डनमण्डिनि अधरस्मितशोभिके।
जय जय दामोदर सञ्ज्ञानन्द निरन्तरलोभिके ॥ ७

जय जय जगदाह्लादकहृदये सङ्कीर्तनमिति भावके।
सुजनकण्ठभूषणमिदं वर्णित व्रजमोहनदासके ॥ ८

—*—

## श्रीराधाकृपाकटाक्षस्तवराजः

मुनीन्द्रबृन्दवन्दिते त्रिलोकशोकहारिणि
प्रसन्नवक्त्रपङ्कजे निकुञ्जभूविलासिनि।
व्रजेन्द्र भानुनन्दिनि व्रजेन्द्रसूनुसङ्गते
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ १

अशोकवृक्षवल्लरीवितानमण्डपस्थिते
प्रवालबालपल्लव प्रभारुणाङ्घ्रिकोमले।
वराभयस्फुरत्करे प्रभूतसम्पदालये
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ २

अनङ्गरङ्गमङ्गल प्रसङ्ग भङ्गुर भ्रुवां
सविभ्रमं ससम्भ्रमं दृगन्तबाणपातनैः।
निरन्तरं वशीकृत प्रतीतिनन्दनन्दने
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ ३

तडित्सुवर्णचम्पक प्रदीप्तगौरविग्रहे
मुखप्रभापरास्तकोटिशारदेन्दुमण्डले।

विचित्रचित्रसञ्चरच्चकोरशाबलोचने
कदा करिष्यसीह मां कृपाकटाक्ष भाजनम् । ४

मदोन्मदातियौवने प्रमोद मान मण्डिते
प्रियानुरागरञ्जिते कलाविलासपण्डिते ।
अनन्यधन्य कुञ्जराज्यकामकेलिकोविदे
कदा करिष्यसीह मां कृपाकटाक्ष भाजनम् ॥ ५

अशेषहावभावधीर हीरहारभूषिते
प्रभूतशातकुम्भ कुम्भकुम्भकुम्भसुस्तनि ।
प्रशस्तमन्दहास्यचूर्णपूर्ण सौख्यसागरे
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ ६

मृणालवालवल्लरी तरङ्गरङ्गदोर्लते
लताग्रलास्यलोलनीललोचनावलोकने ।
ललल्लुलन्मिलन्मनोज्ञ मुग्धमोहनाश्रिते
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ ७

सुवर्णमालिकाञ्चितत्रिरेखकम्बुकण्ठगे
त्रिसूत्रमङ्गलीगुण त्रिरत्नदीप्तिदीधिते ।
सलोल नीलकुन्तलप्रसूनगुच्छगुम्फिते
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ ८

नितम्बबिम्बलम्बमान पुष्पमेखलागुणे
प्रशस्तरत्नकिङ्किणीकलापमध्यमञ्जुले ।
करीन्द्रशुण्डदण्डिकावराह सौभगोरुके
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ ९

अनेकमन्त्रनादमञ्जुनूपुरारवस्खल-
त्समाज राजहंसवंश निक्वणातिगौरवे।
विलोलहेमवल्लरीविडम्बिचारुचङ्क्रमे
कदा करिष्यसीह मां कृपाकटाक्षभाजनम्।। १०

अनन्तकोटि विष्णुलोकनम्रपद्मजार्चिते
हिमाद्रिजा पुलोमजा विरिञ्चजा वरप्रदे।
अपारसिद्धिऋद्धिदिग्ध सम्पदङ्गुलीनखे
कदा करिष्यसीह मां कृपाकटाक्षभाजनम्।। ११

मखेश्वरि क्रियेश्वरि स्वधेश्वरि सुरेश्वरि
त्रिवेदभारतीश्वरि प्रमाणशासनेश्वरि।
रमेश्वरि क्षमेश्वरि प्रमोदकाननेश्वरि
व्रजेश्वरि व्रजाधिपे श्रीराधिके नमोस्तु ते।। १२

इमीममद्भुतं स्तवं निशम्य भानुनन्दिनी
करोतु सन्ततं जनं कृपाकटाक्षभाजनम्।
भवेत्तदैव सञ्चित त्रिरूपकर्मनाशनं
भवेत्तदा व्रजेन्द्रसूनु मण्डल प्रवेशनम्।। १३

—*—

## श्रीराधाकुण्डाष्टकम्

वृषभदनुजनाशात् नर्मधर्मोक्तिरङ्गैः
निखिलनिजतनूभिर्यत् स्वहस्तेन पूर्णम्।
प्रकटितमपि बृन्दारण्यराज्ञा प्रमोदैः
तदतिसुरभि राधाकुण्डमेवाश्रयो मे।। १

व्रजभुवि मुरशत्रोः प्रेयसीनां निकामैः
असुलभं अपि तूर्णं प्रेमकल्पद्रुमं तम्।
जनयति हृदि भूमौ स्नातुरुच्चैः प्रियं यत्
तदतिसुरभि राधाकुण्डमेवाश्रयो मे॥ २

अघरिपुरपि यत्नादत्र देव्याः प्रसाद-
प्रसरकृतकटाक्षप्राप्तिकामः प्रकामम्।
अनुसरति यदुच्चैः स्नानसेवानुबन्धैः
तदतिसुरभि राधाकुण्डमेवाश्रयो मे॥ ३

व्रजभुवनसुधांशोः प्रेमभूमिर्निकामं
व्रजमधुरकिशोरी मौलिरत्नप्रियेव।
परिचितमपि नाम्ना यच्च तेनैव तस्याः
तदतिसुरभि राधाकुण्डमेवाश्रयो मे॥ ४

अपि जन इह कश्चित् यस्य सेवाप्रसादैः
प्रणयसुरलता स्यात्तस्य गोष्ठेन्द्रसूनोः।
सपदि किल मदीशा दास्यपुष्पप्रशस्या
तदतिसुरभि राधाकुण्डमेवाश्रयो मे॥ ५

ततमधुरनिकुञ्जाः क्लृप्तनामान उच्चैः
निजपरिजनवर्गैः संविभज्याश्रितास्तैः।
मधुकररुतरम्या यस्य राजन्ति काम्याः
तदति सुरभि राधाकुण्डमेवाश्रयो मे॥ ६

ततभुवि वरवेद्यं यस्य नर्मातिहृद्यं
मधुरमधुरवार्तां गोष्ठचन्द्रस्य भङ्ग्या।
प्रथयितुमित ईशप्राणसख्यालिभिः सा
तदतिसुरभि राधाकुण्ड एवाश्रयो मे॥ ७

अनुदिनमतिरङ्गैः प्रेममत्तालिसङ्घैः
वरसरसिजगन्धैः हारिवारिप्रपूर्णे।
विहरत इह यस्मिन् दम्पती तौ प्रमत्तौ
तदतिसुरभि राधाकुण्डमेवाश्रयो मे ॥ ८

—*—

वेदान्तदेशिककृतं

## गरुडपञ्चाशत्स्तोत्रम्

परव्यूहवर्णकः

अङ्गेष्वानन्द मुख्य श्रुतिशिखर मिलद्दण्डकं गण्डपूर्वं
प्रागेवाभ्यस्य षट्सु प्रतिदिशमनघं न्यस्य शुद्धास्त्रबन्धाः।
पक्षि व्यत्यस्त पक्षि द्वितय मुख पुट प्रस्फुटोदार तारं
मन्त्रं गारुत्मतं तं हुतवह दयिता शेखरं शीलयामः ॥ १

वेदः स्वार्थाधिरूढो बहिरबहिरभिव्यक्तिमभ्येति यस्यां
सिद्धिः साङ्कर्षणी सा परिणमति यया सापवर्गत्रिवर्गा।
प्राणस्य प्राणमन्ये प्रणिहितमनसो यत्र निर्धारयन्ति
प्राची सा ब्रह्मविद्या परिचितगहना पातु गारुत्मती नः ॥ २

नेत्रं गायत्रमूचे त्रिवृदिति च शिरो नामधेयं यजूंषि
छन्दांस्यङ्गानि धिष्ण्यात्मभिरजनि शफैर्विग्रहो वामदेव्यम्।
यस्य स्तोमात्मनोऽसौ बृहदितर गरुत्तादृशाम्नाय पुच्छः
स्वाच्छन्द्यं नः प्रसूतां श्रुतिशतशिखराभिष्टुतात्मा गरुत्मान्॥ ३

यो यं धत्ते स्वनिष्ठं वहनमपि वरः स्पर्शितो येन यस्मै
यस्माद् यस्याहवश्रीर्विदधति भजनं यत्र यत्रेति सन्तः।
प्रायो देवः स इत्थं हरिगरुडभिदाकल्पितारोह वाह-
स्वाभाव्यः स्वात्मभव्यः प्रदिशतु शकुनिर्ब्रह्मसब्रह्मतां नः ॥ ४

एको विष्णोर्द्वितीयस्त्रिचतुरविदितं पञ्चवर्णीरहस्यं
षाड्गुण्यं स्मेर सप्त स्वर गतिरणिमाद्यष्टसंपन्नवात्मा ।
देवो दर्वीकरारिर्दश शत नयनाराति साहस्र लक्षैः
विक्रीडत्पक्ष कोटिर्विघटयतु भयं वीत संख्योदयो नः ॥ ५

सत्याद्यैः सात्वतादि प्रथित महिमभिः पञ्चभिर्व्यूहभेदैः
पञ्चाभिख्यो निरुन्धन् भवगरल भवं प्राणिनां पञ्च भावम् ।
प्राणापानादि भेदात् प्रतितनु मरुतो दैवतं पञ्च वृत्तेः
पञ्चात्मा पञ्चधाऽसौ पुरुष उपनिषद्घोषितस्तोषयेन्नः ॥ ६

श्लिष्यद्भोगीन्द्र भोगे श्रुति निकर निधौ मूर्तिभेदे स्वकीये
वर्णव्यक्तीर्विचित्राः परिकलयति यो वक्त्र बाहूरु पादैः ।
प्राणः सर्वस्य जन्तोः प्रकटित परम ब्रह्मभावः स इत्थं
क्लेशं छिन्दन् खगेशः सपदि विपदि नः सन्निधिः सन्निधत्ताम् ॥७

अग्रे तिष्ठन् उदग्रो मणि मुकुर इवानन्य दृष्टेर्मुरारेः
पायान्माया भुजङ्गी विषमविषभयाद् गाढमस्मान् गरुत्मान् ।
क्षुभ्यत्क्षीराब्धि पाथः सहभवगरल स्पर्शशङ्की स शङ्के
छायां धत्ते यदीयां हृदि हरि हृदयारोह धन्यो मणीन्द्रः ॥ ८

२. अमृतहरणवर्णकः ।

आहर्तारं सुधाया दुरधिगम महाचक्रदुर्गस्थितायाः
जेतारं वज्रपाणेः सह विबुधगणैराहवे बाहुवेगात् ।
विष्णौ संप्रीयमाणे वर विनिमयतो विश्वविख्यातकीर्तिं
देवं याऽसूत साऽसौ दिशतु भगवती शर्म दाक्षायणी नः ॥ ९

वित्रासाद् वीतिहोत्रं प्रथममधिगतैरन्तिके मन्दधाम्ना
भूयस्तेनैव सार्धं भय भर तरलैर्वन्दितो देवबृन्दैः ।

कल्पान्त क्षोभ दक्षं कथमपि कृपया संक्षिपन् धाम चण्डं
भित्त्वाऽण्डं निर्जिहानो भवभयमिह नः खण्डयत्वण्डजेन्द्रः ॥ १०

क्षुण्ण क्षोणीधराणि क्षुभित चतुर कूपार तिम्यद्द्रुन्ति
त्रुट्यत्तारासराणि स्थपुटित विबुध स्थानकानि क्षिपेयुः ।
पाताल ब्रह्म सौधावधि विहित मुधा वर्तनान्यस्मदार्तिं
ब्रह्माण्डस्यान्तराले बृहति खगपतेरर्भक क्रीडितानि ॥ ११

संविच्छस्त्रं दिशन्त्या सह विजय चमूराशिषः प्रेषयन्त्या
संबध्नन्त्या तनुत्रं सुचरितमशनं पक्कणं निर्दिशन्त्या ।
एनोऽस्मद्वैनतेयो नुदतु विनतया क्लृप्तरक्षाविशेषः
कद्रू संकेत दास्य क्षपण पण सुधा लक्ष भैक्षं जिघृक्षुः ॥ १२

विक्षेपैः पक्षतीनां अनिभृतगतिभिर्वादितव्योमतूर्यो
वाचालाम्भोधि वीचीवलय विरचितालोकशब्दानुबन्धः ।
दिक्कन्या कीर्यमाण क्षरदुडु निकर व्याजलाजाभिषेको
नाकोन्माथाय गच्छन् नरकमपि समये नागहन्ता निहन्तु ॥ १३

ऋक्षाक्ष क्षेप दक्षो मिहिर हिमकरोत्तालतालाभिघाती
वेला वाः केलि लोलो ि र घनघटाकन्दुकाघात शीलाः ।
पायान्नः पातकेभ्यः पतग कुलपतेः पक्षविक्षेप जातो
वातः पाताल हेलापटह पटरवारम्भसंरम्भ धीरः ॥ १४

किं निर्घातः किमर्कः परिपतति दिवः किं समिद्धोऽयमौर्वः
किंस्वित् कार्तस्वराद्रिर्ननु विदितमिदं व्योमवर्त्मा गरुत्मान् ।
आसीदत्याजिहीर्षत्यभिपतति हरत्यत्ति हा तात हाम्बे-
त्यालापोद्युक्त भिल्लाकुलजठर पुटः पातु नः पत्रिनाथः ॥ १५

आसृक्कात्कैरसृग्भिर्दुरुपरम तृषा शातनी शातदंष्ट्रा-
कोटी लोटत्करोटी विकट कटकटाराव घोरावतारा।
भिन्द्यात् सार्धं पुलिन्द्या सपदि परिहृत ब्रह्मगा जिह्मगारेः
उद्वेल्लद्भिल्ल पल्ली निगरण करणा पारणा कारणां नः ॥ १६

स्वच्छन्दस्वर्गिबृन्द प्रथमतम महोत्पात निर्घात घोरः
स्वान्तध्वान्तं निरुन्ध्याद् धुत धरणि पयोराशिराशीविषारेः।
प्रत्युद्यद्भिल्लपल्ली भट रुधिर सरिल्लोल कल्लोल माला-
हाला निर्वेश हेला हलहल बहुलो हर्ष कोलाहलो नः ॥ १७

सान्द्र क्रोधानुबन्धात् सरसि नखमुखे पादपे गण्डशैले
तुण्डाग्रे कण्ठरन्ध्रे तदनु च जठरे निर्विशेषं युयुत्सू।
अव्यादस्मान् अभव्यादविदित नखर श्रेणि दंष्ट्रानिवेशौ
जीवग्राहं गृहीत्वा कमठ करटिनौ भक्षयन् पक्षिमल्लः ॥ १८

अल्पः कल्पान्त लीला नटमकुट सुधा सूति खण्डो बहूनां
निःसारस्त्वद्भुजाद्रेरनुभवतु मुदा मन्थनं त्वेष सिन्धुः।
राका चन्द्रस्तु राहोः स्वमिति कथयतः प्रेक्ष्य कद्रूकुमारान्
सान्तर्हासं खगेन्द्रः सपदि हृतसुधस्त्रायतां आयतान्नः ॥ १९

आरादभ्युत्थितैरावतं अमित जवोदश्वदुच्चैःश्रवस्कं
जातक्षोभं निमथ्नन् दिशि दिशि दिविषद्वाहिनीशं क्षणेन।
भ्राम्यन्सव्यापसव्यं सुमहति मिषति स्वर्गिसार्थे सुधार्थं
प्रेङ्खन्नेत्रः श्रियं नः प्रकटयतु चिरं पक्षवान्मन्थशैलः ॥ २०

अस्थानेषु ग्रहाणामनियत विहितानन्त वक्रातिचारा
विश्वोपाधि व्यवस्था विगमविलुलित प्रागवागादि भेदाः।
छित्राः सुत्राम भक्त ग्रह कलह विधावण्डजेन्द्रस्य चण्डाः
पक्षोत्क्षेपा विपक्ष क्षपण सरभसाः शर्म मे निर्मिमीरन् ॥ २१

2

तत्तत्प्रत्यर्थि सारावधि विहित मृषा रोष गन्धो रुषान्धैः
एकः क्रीडन्ननेकैः सुरपति सुभटैरक्षतो रक्षतान्नः ।
अन्योन्याबद्ध लक्षापहरण विहितामन्द मात्सर्यतुङ्गैः
अङ्गैरेव स्वकीयैरहमहमिकया मानितो वैनतेयः ॥ २२

अस्तव्योमान्तमन्तर्हित निखिल हरिन्मण्डलं चण्डभानोः
लुण्टाकैर्यैरकाण्डे जगदखिलमिदं शर्वरी वर्वरीति ।
प्रेङ्खोलत्स्वर्गगोलस्खलदुडुनिकर स्कन्ध बन्धान् निरुन्धन्
रंहोभिस्तैर्मदम्हो हरतु तरलित ब्रह्म सद्मा गरुत्मान् ॥ २३

यः स्वाङ्के संगरान्तर्गरुदनिल लव स्तम्भिते जम्भशत्रौ
कुण्ठास्त्रे सन्नकण्ठं प्रणयति पवये पक्षलेशं दिदेश ।
सोऽस्माकं संविधत्तां सुरपति पृतना द्वन्द्व युद्धैक मल्लो
माङ्गल्यं वालखिल्य द्विजवर तपसां कोऽपि मूर्तो विवर्तः ॥ २४

रुद्रान् विद्राव्य सेन्द्रान् हुतवहसहितं गन्धवाहं गृहीत्वा
कालं निष्काल्य धूत्वा निर्ऋति धनपती पाशिनं क्लेशयित्वा ।
सर्पाणां छाद्मिकानां अमृत मय पण प्रापण प्राप्तदर्पो
निर्बाधं कापि सर्पन् अपहरतु हरेरौपवाह्यो मदंहः ॥ २५

नागदमनवर्णकः

भुग्न भ्रूभ्रूकुटीभृद् भ्रमदमितगरुत्क्षोभित क्ष्मान्तरिक्षः
चक्राक्षो वक्रतुण्डः खरतर नखरः क्रूरदंष्ट्राकरालः ।
पायादस्मान् अपायाद् भयभर विगलद्दन्दशूकेन्द्र शूकः
शौरेः संक्रन्दनादि प्रतिभट पृतना क्रन्दनः स्यन्दनेन्द्रः ॥ २६

अर्यम्णा धुर्ययोक्त्र ग्रहण भय भृता सान्त्वितोऽनूरुबन्धात्
कोदण्डज्यां जिघृक्षेदिति चकितधिया शङ्कितः शङ्करेण ।

तल्पे कल्पेत मा ते मतिरिति हरिणाऽप्यादरेणानुनीतः
पक्षीन्द्रस्त्रायतां नः फणधर महिषी पत्रभङ्गापहारी ।। २७

छायाताक्ष्यानिहीनां फणमणि मुकुर श्रेणि विस्पष्ट बिम्बान्
त्राणापेक्षा धृत स्वप्रतिकृति मनसा वीक्ष्य जातानुकम्पः ।
तेषां दृष्ट्वाऽथ चेष्टाः प्रतिगरुड गणाशङ्कया तुङ्गरोषः
सर्पन् दर्पोद्धतो नः शमयतु दुरितं सर्पसन्तान हन्ता ।। २८

उच्छ्वासाकृष्ट तारागण घटित मृषा मौक्तिकाकल्पशिल्पः
पक्षव्याधूत पाथो निधि कुहर गुहागर्भ दत्तावकाशः ।
दृष्टिं दष्ट्रांग्र दूतीं पृथुषु फण भृतां प्रेषयन्नुत्तमाङ्गे(षु)
अङ्गैरङ्गानि रुन्धन्नवतु पिपतिषुः पत्रिणामग्रणीर्नः ।। २९

आ वेधः सौध शृङ्गादनुपरत गतेरा भुजङ्गेन्द्रलोकात्
श्रेणी बन्धं वितन्वन् क्षण परिणमितालात पात प्रकारः ।
पायान्नः पुण्य पाप प्रचय मय पुनर्गर्भ कुम्भी निपातात्
पातालस्यान्तराले बृहति खगपतेर्निर्विघातो निपातः ।। ३०

प्रत्यग्राकीर्ण तत्तत्फण मणि निकरं शङ्कुला कोटि वक्रं
तुण्डाग्रं संक्षुणवानः कुलगिरि कठिने कर्परे कूर्मभर्तुः ।
पाताल क्षेत्र पक द्विरसन पृतना शालि विच्छेद शाली
शैलीं नः सप्तशैली लघिमद रभसः सौतु साध्वीं सुपर्णः ।। ३१

पर्यस्यत्पन्नगीनां युगपदसमयानर्भकान् गर्भकोशाद्
ब्रह्म स्तम्ब प्रकम्प व्यतिषजदखिलोदन्वदुन्निद्र घोषम् ।
चक्षुश्चक्षुः श्रुतीनां सपदि बधिरयत् पातु पत्रीश्वरस्य
क्षिप्र क्षिप्त क्षमाभृत्क्षण घटित नभः स्फोटमास्फोटितं नः ।। ३२

तोय स्कन्धो न सिन्धोः समघटत मिथः पक्ष विक्षेप भिन्नः
पातालं न प्रविष्टं पृथुनि च विवरे रश्मिभिस्तिग्मरश्मेः ।
तावद्द्रस्ताहि वक्त्र क्षरित विषमषी पङ्ककस्तूरिकाङ्कः
प्रत्यायातः स्वयूथ्यैः स्थित इति विदितः पातु पत्रीश्वरो नः ।। ३३

बद्धस्पर्धैरिव स्वैर्बहुभिरभिमुखैरेककण्ठं स्तुवाने
तत्तद्विश्वोपकार प्रणयि सुरगण प्रार्थित प्राणरक्षे ।
पायान्नः प्रत्यहं ते कमपि विषधरं प्रेषयामीति भीते
संधित्सौ सर्पराजे सकरुणमरुणानन्तरं धाम दिव्यम् ।। ३४

काप्यस्थ्ना शर्कराढ्यं क्वचन घनतरासृक्छटा शीधु दिग्धं
निर्मोकैः क्वापि कीर्णं विषयमपरतो मण्डितं रत्नखण्डैः ।
अध्यारूढैः स्ववारेष्वहमहमिकया वध्य वेषं दधानैः
काले खेलन् भुजङ्गैः कलयतु कुशलं काद्रवेयान्तको नः ।। ३५

४. परिष्कारवर्णकः ।

वामे वैकुण्ठशय्या फणिपतिकटको वासुकि ब्रह्मसूत्रो
रक्षेन्नस्तक्षकेन ग्रथित कटितटश्चारुकार्कोट हारः ।
पद्मं कर्णेऽपसव्ये प्रथिमवति महापद्ममन्यत्र बिभ्रत्
चूडायां शङ्खपालं गुलिकमपि भुजे दक्षिणे पक्षिमल्लः ।। ३६

वर्त्त्याभ स्वस्तिकाग्र स्फुरदरुण शिखा दीप्र रत्नप्रदीपैः
बध्नद्भिस्तापमन्तर्बहुल विषमषी गन्ध तैलाभिपूर्णैः ।
नित्यं नीराजनार्थैः निज फण फलकैर्घूर्णमानानि तूर्णं
भोगैरापूरयेयुर्भुजग कुलरिपो र्भूषणानीषणां नः ।। ३७

अङ्गप्रत्यङ्गलीनामृतरस विसर स्पर्श लोभादिवान्तः-
त्रासादुग्रासानुबन्धादिव सहज मिथो वैर शङ्कोत्तरङ्गात् ।

रुद्रागाढोपगूढोच्छ्वसन निबिडित स्थान योगादिवास्मद्-
भद्राय स्युर्भजन्तो भगवति गरुडे गाढतां गूढपादः ॥ ३८

कोटीरे रत्नकोटि प्रतिफलिततया नैकधा भिन्नमूर्तिः
वल्मीकस्थान् स्वयूथ्यानभित इव निजैर्वेष्टनैः क्लृप्तरक्षः ।
क्षेमं नः सौतु हेमाचल विधृत शरन्मेघ लेखानुकारी
रोचिश्चूडाल चूडामणिरुरग रिपोरेष चूडाभुजङ्गः ॥ ३९

द्राघीयः कर्णपाश द्युति परिभवन व्रीलयेव स्वभोगं
संक्षिप्याश्नन् समीरं दरविनतमुखो निःश्वसन् मन्दमन्दम् ।
आसीदद्दण्ड भित्ति प्रतिफलन मिषात् कापि गूढं विविक्षुः
क्षिप्रं दोषान् क्षिपेन्नः खगपति कुहना कुण्डलः कुण्डलीन्द्रः ॥४०

वालाग्र ग्रन्थि बन्ध ग्रथित पृथु शिरो रत्न सन्दर्शनीयो
मुक्ता शुभ्रोदराभो हरिमणि शकल श्रेणि दृश्येतरांशः ।
विष्वग्दम्भोलिधाराव्रण किण विषमोत्तम्भनस्तब्ध वृत्तिः
व्यालाहारस्य हृद्यो हरतु स मदघं हार दर्वीकरेन्द्रः ॥ ४१

वैकक्ष्य स्रग्विशेषच्छुरणपरिणमच्छस्त्रबन्धानुबन्धो
वक्षः पीठाधिरूढो भुजग दमयितुर्ब्रह्म सूत्रायमाणः ।
अश्रान्त स्वैर निद्रा विरचित विविधोच्छ्वास निश्वास वेग-
क्षामोच्छूनाकृतिर्नः क्षपयतु दुरितं कोऽपि कद्रू कुमारः ॥ ४२

श्लिष्यद्रुद्रासुकीर्ति स्तन तट घुसृणा लेप संक्रान्तसार-
स्फारामोदाभिलाषोन्नमित पृथु फणा चक्रवालाभिरामः ।
प्रायः प्रेयः पटीरद्रुम विटपधिया श्लिष्ट पक्षीन्द्र बाहुः
व्याहन्यादस्मदीयं वृजिनभरमसौ वृन्दशो दन्दशूकः ॥ ४३

ग्रस्तानन्तर्निविष्टान् फणिन इव शुचा गाढमाश्लिष्य दुःख्यन्
क्षुण्णानेकः स्वबन्धून् क्षुधमिव कुपितः पीडयन् वेष्टनेन ।
व्यालस्तार्क्ष्योदरस्थो विपुलगळगुहावाहि फूत्कारवात्या-
पौनःपुन्येन हन्यात् पुनरुदरगुहा गेह वास्तव्यतां नः ॥ ४४

गाढासक्तो गरुत्मत्कटितट निकटे रक्त चण्डातकाङ्के
फक्कत्काञ्ची महिम्ना फणिमणि महसा लोहिताङ्गो भुजङ्गः ।
सत्तासांसिद्धिकं नः सपदि बहुविधं कर्मबन्धं निरुन्ध्याद्
विन्ध्याग्र्यालीन सन्ध्या घन घटित तटित्कान्ति चातुर्य धुर्यः ॥४५

५. अद्भुतवर्णकः ।

वेगोत्तानं वितानं व्यजनमनुगुणं वैजयन्ती जयन्ती
मित्रं नित्याभ्यमित्रं युधि विजयरथो युग्ययोगानपेक्षः ।
दासो निष्पर्युदासो दनु तनय भिदो निःसहायः सहायो
दोधूयेतास्मदीयं दुरितमधरितारातिपक्षः स्वपक्षैः ॥ ४६

उक्षा दक्षान्तकस्य स्खलति वलजितः कुञ्जरः खञ्जरीतिः
क्लान्तो धातुः शकुन्तोऽनुग इति दयया सामि रुद्धस्यदोऽपि ।
ग्राहग्रस्त द्विपेन्द्र क्षति भय चकिताकुण्ठ वैकुण्ठ चिन्ता-
नासीरोदार मूर्तिर्नरक विहतये स्याद्विहङ्गेश्वरो नः ॥ ४७

वेगोद्वेलः सुवेलः किमिदमिति मिथो मन्त्रितो वानरेन्द्रैः
माया मानुष्यलीलामभिनयति हरौ लब्ध सेवा विशेषः ।
वैदेही कर्णपूर स्तबक सुरभिणा यः समाश्लेषि दोष्णा
तृष्णा पारिप्लवानां स भवतु गरुडो दुःख वारिप्लवो नः ॥ ४८

दुग्धोदन्वत्प्रभूतः स्वकमहिम पृथुर्विष्णुना कृष्णनाम्ना
पिञ्छा कल्पानुकल्पः समघटि सुदृढो यत्प्रदिष्टः किरीटः ।
वीरो वैरोचनास्त्रव्रण किण गुणितोदग्रनिर्घात वातः
संघातं सर्वघाती स हरतु महतामस्मदत्याहितानाम् ॥ ४९

रुन्ध्यात् संवर्त संन्ध्या घनपटल कनत्पक्ष विक्षेप हेला-
वातूलास्फाल तूलाञ्चल निचय तुलाधेय दैतेय लोकः ।
आस्माकैः कर्म पाकैरभिगत महितानीकमप्रत्यनीकैः
दीव्यन् दिव्यापदानैर्दनुज विजयिनो वैजयन्ती शकुन्तः ॥ ५०

यत्पक्षस्था त्रिवेदी त्रिगुण जलनिधिर्लङ्घ्यते यद्गुणज्ञैः
वर्गस्त्रैवर्गिकाणां गतिमिह लभते नाथवद् यत्सनाथः ।
त्रैकाल्योपस्थितात् स त्रियुग निधिरघादायतात् त्रायतां नः
त्रातानेकस्त्रिधाम्नस्त्रिदश रिपु चमू मोहनो वाहनेन्द्रः ॥ ५१

सैकां पञ्चाशतं यामतनुत विनतानन्दनं नन्दयिष्यन्
कृत्वा मौलौ तदाज्ञां कविकथक घटा केसरी वेङ्कटेशः ।
तामेतां शीलयन्तः शमित विषधर व्याधि दैवाधिपीडाः
काङ्क्षा पौरस्त्य लाभाः कृतमितर फलैस्तार्क्ष्यकल्पा भवन्ति ॥ ५२

—*—

वेदान्तदेशिककृतः

## गरुडदण्डकः

नमः पन्नग नद्धाय वैकुण्ठ वश वर्तिने ।
श्रुति सिन्धु सुधोत्पाद मन्दराय गरुत्मते ॥ १

गरुडमखिल वेद नीडाधिरूढं द्विषत्पीडनोत्कण्ठिताकुण्ठ वैकुण्ठ पीठीकृतस्कन्धमीडे स्वनीडागतिप्रीतरुद्रासुकीर्तिस्तनाभोगगाढोप-गूढस्फुरत्कण्टकव्रातवेधव्यथावेपमानद्विजिह्वाधिपाकल्प विष्फार्यमाण स्फटावाटिका रत्न रोचिश्छटा राजि नीराजितं कान्ति कल्लोलिनी राजितम् ॥ २

जय गरुड सुपर्ण दर्वीकराहार देवाधिपाहारहारिन् दिवौकस्पति क्षिप्त दम्भोलि धारा किणाकल्प कल्पान्त वातूल कल्पोदयानल्प वीरायितोद्यच्चमत्कार दैत्यारि जैत्रध्वजारोह निर्धारितोत्कर्ष संकर्षणात्मन् गरुत्मन् मरुत्पञ्चकाधीश सत्यादि मूर्ते न कश्चित् समस्ते नमस्ते पुनस्ते नमः ॥ ३

नम इदमजहत्सपर्याय पर्याय निर्यात पक्षानिलास्फालनोद्वेल पाथोधि वीची चपेटाहतागाध पाताल भाङ्कार संक्रुद्ध नागेन्द्रपीडासृणी भाव भास्वन्नख श्रेणये चण्ड तुण्डाय नृत्यद्भुजङ्गभ्रुवे वज्रिणे दंष्ट्रया तुभ्यं अध्यात्मविद्या विधेया विधेया भवद्दास्यमापादयेथा दयेथाश्च मे ॥ ४

मनुरनुगत पक्षि वक्त्र स्फुरत्तारकस्तावकश्चित्रभानुप्रियाशेखरस्त्रायतां नस्त्रिवर्गापवर्ग प्रसूतिः परव्योम धामन् वलद्वेषिदर्प ज्वलद्वालखिल्य प्रतिज्ञावतीर्ण स्थिरां तत्त्व बुद्धिं परां भक्तिधेनुं जगन्मूलकन्दे मुकुन्दे महानन्ददोग्ध्रीं दधीथा मुधाकामहीनामहीनामहीनान्तक ॥ ५

षट्त्रिंशद्गण चरणो नर परिपाटी नवीन गुम्भ गुणः ।
विष्णुरथ दण्डकोऽयं विघटयतु विपक्ष वाहिनी व्यूहम् ॥ ६

विचित्र सिद्धिदः सोऽयं वेङ्कटेश विपश्चिता ।
गरुडध्वज तोषाय गीतो गरुड दण्डकः ॥ ७

## गरुडः

सौवर्णाङ्कितपत्रमारुतहताहिव्रातकान्ताकुच
स्फूर्जन्मौक्तिकभूषणः खगपतिः पूर्णेन्दुबिम्बाननः ।
पद्माधीश्वरपादपद्मयुगलस्पर्शामलाङ्गानतः
पायाद्वो विनतासुतो हरकृपालोकैकपात्रीकृतः ॥ ८

——*——

श्रीशङ्करभगवत्पादकृतं

## हनुमत्पञ्चरत्नस्तोत्रम्

वीताखिलविषयेच्छं जातानन्दाश्रुपुलकमत्यच्छम्।
सीतापतिदूताद्यं वातात्मजमद्य भावये हृद्यम्॥ १

तरुणारुणमुखकमलं करुणारसपूरपूरितापाङ्गम्।
संजीवनमाशासे मञ्जुलमहिमानमञ्जनाभाग्यम्॥ २

शम्बरवैरिशरातिगमम्बुजदलविपुललोचनोदारम्।
कम्बुगलमनिलदिष्टं बिम्बोज्ज्वलितोष्ठमेकमवलम्बे ॥ ३

दूरीकृतसीतार्तिः प्रकटीकृतरामवैभवस्फूर्तिः।
दारितदशमुखकीर्तिः पुरतो मम भातु हनुमतो मूर्तिः ॥ ४

वानर निकराध्यक्षं दानवकुलकुमुदरविकरसदृक्षम्।
दीनजनावनदीक्षं पवनतपःपाकपुञ्जमद्राक्षम्॥ ५

एतत्पवनसुतस्य स्तोत्रं यः पठति पञ्चरत्नाख्यम्।
चिरमिह निखिलान् भोगान् भुक्त्वा श्रीरामभक्तिभाग्भवति॥ ६

—*—

## श्रीहनुमत्स्तोत्रम्

(विभीषणकृतम्)

श्रीहनुमते नमः। अस्य श्रीहनुमत्स्तोत्रमहामन्त्रस्य, विभीषण ऋषिः, अनुष्टुप् छन्दः, हनुमान् देवता। मम शत्रुमुखस्तम्भनार्थे सर्वकार्यसिद्ध्यर्थे च जपे विनियोगः। ध्यानम्—

चन्द्राभं चरणारविन्दयुगलं कौपीन मौञ्जीधरं
नाभ्यां वै कटिसूत्रयुक्तवसनं यज्ञोपवीतावृतम्।
हस्ताभ्यामवलम्ब्य चाञ्जलिमथो हारावली कुण्डलं
बिभ्रद्दीर्घशिखं प्रसन्नवदनं दिव्याञ्जनेयं भजे॥

मन्त्रः– ओ नमो हनुमते रुद्राय। मम सर्वदुष्टजन मुखस्तम्भनं कुरु कुरु। मम सर्वकार्यसिद्धिं कुरु कुरु। ऐं ह्रां ह्रीं ह्रूं फट् स्वाहा। (अष्टवारं जपेत्।)

आपन्नाखिललोकर्तिहारिणे श्रीहनूमते
अकस्मादागत क्लेशनाशनाय नमोऽस्तु ते॥ १

सीता-वियुक्त-श्रीराम-शोक-दुःखभयावह ।
तापत्रयार्ति-शमन ! दैत्यापह ! नमोऽस्तु ते॥ २

आधि-व्याधि-महामारी-ग्रहपीडा-प्रहारिणे॥
प्राणापहन्त्रे दैत्यानां राम-प्राणात्मने नमः॥ ३

संसारसागराज्ञान भ्रमि-विभ्रान्त-चेतसाम्।
शरणागत-मर्त्यानां शरण्याय नमोऽस्तु ते॥ ४

राजद्वारे प्रयाणे च प्रवेशे शत्रु-सङ्कटे।
गज-सिंह-व्याघ्र-चौर-भीषणेऽध्वनि कानने॥ ५

प्रपन्नार्त्ति-विनाशाय वाय्वात्मज ! नमोऽस्तु ते।
प्रदोषे वा प्रभाते वा ये स्मरन्त्यञ्जनीसुतम्॥ ६

अर्थसिद्धिं यशः कीर्तिं प्राप्नुयुर्नाऽत्र संशयः।
कारागृहे प्रयाणे च सङ्ग्रामे देशविप्लवे॥ ७

ये स्मरन्ति हनूमन्तं तेषां नैव विपत्तयः।
वज्रदेहाय कालाग्निरुद्रायामिततेजसे॥ ८

दुष्ट-दैत्य-महादर्प-ज्वालनाय महात्मने।
ब्रह्मास्त्र-स्तम्भनायास्मै नमः श्रीरुद्रमूर्त्तये ॥ ९

जप्त्वा स्तोत्रमिमं मन्त्रं वसुवारं जपेन्नरः ।
राजद्वारे सभास्थाने प्राप्तवादे जयो ध्रुवम् ॥ १०

विभीषणेन प्रोक्तं च यः पठेत् सततं नरः ।
सर्वापद्भ्यो विमुच्येत नात्र कार्या विचारणा ॥ ११

—*—

॥ अच्युतयतिकृतं

## हनुमदष्टकम्

श्रीरघुराजपदाब्जनिकेतन पङ्कजलोचन मङ्गलराशे
चण्डमहाभुजदण्डसुरारिविखण्डनपण्डित पाहि दयालो।
पातकिनं च समुद्धर मां महतां हि सतामपि मानमुदारं
त्वां भजतो मम देहि दयाघन हनुमन् स्वपदाम्बुजदास्यम् ॥ १

संसृतितापमहानलदग्धतनूरुहमर्मतनोरतिवेलं
पुत्रधनस्वजनात्मगृहादिषु सक्तमतेरतिकिल्बिषमूर्तेः ।
केनचिदप्यमलेन पुराकृतपुण्यसुपुञ्जलवेन विभो वै
त्वां भजतो मम देहि दयाघन हनुमन् स्वपदाम्बुजदास्यम् ॥ २

संसृतिकूपमनल्पमघोरनिदाघनिदानमजस्रमशेषं
प्राप्य सुदुःखसहस्रभुजङ्गविषैकसमाकुलसर्वतनोर्मे ।
घोरमहाकृपणापदमेव गतस्य हरे पतितस्य भवाब्धौ
त्वां भजतो मम देहि दयाघन हे हनुमन् स्वपदाम्बुजदास्यम् ॥ ३

संसृतिसिन्धुविशालकरालमहाबलकालझषग्रसनार्तं
व्यग्रसमग्रधियं कृपणं च महामदनक्रसुचक्रहतासुम् ।

कालमहारसनोर्मिनिपीडितमुद्धर दीनमनन्यगतिं मां
त्वां भजतो मम देहि दयाघन हे हनुमन्स्वपदाम्बुजदास्यम् ॥ ४

संसृतिघोरमहागहने चरतो मणिरञ्जितपुण्यसुमूर्तेः
मन्मथभीकरघोरमहोग्रमृगप्रवरार्दितगात्रसुसन्धेः ।
मत्सरतापविशेषनिपीडितबाह्यमतेश्च कथंचिदमेयं
त्वां भजतो मम देहि दयाघन हे हनुमन्स्वपदाम्बुजदास्यम् ॥ ५

संसृतिवृक्षमनेकशताघनिदानमनन्तविकर्मसुशाखं
दुःख फलं करणादिपलाशमनङ्गसुपुष्पमचिन्त्यसुमूलम् ।
तं ह्यधिरुह्य हरे पतितं शरणागतमेव विमोचय मूढं
त्वां भजतो मम देहि दयाघन हे हनुमन्स्वपदाम्बुजदास्यम् ॥ ६

संसृतिपन्नगवक्त्रभयङ्करदंष्ट्रमहाविषदग्धशरीरं
प्राणविनिर्गमभीतिसमाकुलमन्दमनाथमतीव विषण्णम् ।
मोहमहाकुहरे पतितं दययोद्धर मामजितेन्द्रियकामं
त्वां भजतो मम देहि दयाघन हे हनुमन् स्वपदाम्बुजदास्यम् ॥ ७

इन्द्रियनामकचौरगणैर्हृततत्त्वविवेकमहाधनराशिं
संसृतिजालनिपातितमेव महाबलिभिश्च विखण्डितकायम् ।
त्वत्पदपद्ममनुत्तममाश्रितमाशु कपीश्वर पाहि कृपालो
त्वां भजतो मम देहि दयाघन हे हनुमन्स्वपदाम्बुजदास्यम् ॥ ८

ब्रह्ममरुद्गणरुद्रमहेन्द्रकिरीटसुकोटिलसत्पदपीठं
दाशरथिं जपति क्षितिमण्डल एष निधाय सदैव हृदब्जे ।
तस्य हनूमत एव शिवंकरमष्टकमेतदनिष्टहरं वै
यः सततं हि पठेत्स नरो लभतेऽच्युतरामपदाब्जनिवासम् ॥ ९

—*—

## हनूमान्

अशेषलङ्कापतिसैन्यहन्ता श्रीरामसेवाचरणैककर्ता।
अनेकदुःखाहतलोकगोप्ता त्वसौ हनूमांस्तव सौख्यकर्ता ॥

कृतक्रोधे यस्मिन्नमरनगरी मङ्गलरवा
नवातङ्का लङ्का समजनि वनं वृश्चति सति।
सदा सीताकान्तप्रणतिमतिविख्यातमहिमा
हनूमानव्याद्वः कपिकुळशिरोमण्डनमणिः ॥

## हनुन्! रक्ष

अञ्जनागर्भसंभूत कपीन्द्रसचिवोत्तम।
रामप्रिय नमस्तुभ्यं हनुमन् रक्ष सर्वदा ॥

सीताशीर्वादसंपन्न समस्तावयवाक्षत।
लोललाङ्गूलपातेन ममारातीन्निवारय ॥

—*—

श्रीमद्भागवतकथाप्रस्तावक

# ॥ श्रीपुरुषोत्तमनामसहस्रम् ॥

पुराणपुरुषो विष्णुः पुरुषोत्तम उच्यते।
नाम्नां सहस्रं वक्ष्यामि तस्य भागवतोद्धृतम् ॥ १
यस्य प्रसादाद्वागीशाः प्रजेशा विभवोन्नताः।
क्षुद्रा अपि भवन्त्याशु श्रीकृष्णं तं नतोऽस्म्यहम् ॥ २
अनन्ता एव कृष्णस्य लीला नामप्रवर्तिकाः।

उक्ता भागवते गूढाः प्रकटा अपि कुत्रचित् ।। ३
अतस्तानि प्रवक्ष्यामि नामानि मुरवैरिणः ।
सहस्रं यैस्तु पठितं पठितं स्याच्छुकामृतम् ।। ४
कृष्णनामसहस्रस्य ऋषिरग्निर्निरूपितः ।
गायत्री च तथा छन्दो देवता पुरुषोत्तमः ।। ५
विनियोगः समस्तेषु पुरुषार्थेषु वै मतः ।
बीजं भक्तप्रियः शक्तिः सत्यवागुच्यते हरिः ।। ६
भक्तोद्धरणयत्नस्तु मन्त्रोऽत्र परमो मतः ।
अवतारितभक्तांशः कीलकं परिकीर्तितम् ।। ७
अस्त्रं सर्वसमर्थश्च गोविन्दः कवचं मतम् ।
पुरुषो ध्यानमत्रोक्तः सिद्धिः शरणसंस्मृतिः ।। ८

(प्रथमस्कन्धीयनामानि)

श्रीकृष्णः सच्चिदानन्दो नित्यलीलाविनोदकृत् ।
सर्वागमविनोदी च लक्ष्मीशः पुरुषोत्तमः ।। ९
आदिकालः सर्वकालः कालात्मा माययावृतः ।
भक्तोद्धारप्रयत्नात्मा जगत्कर्ता जगन्मयः ।। १०
नामलीलापरो विष्णुर्व्यासात्मा शुकमोक्षदः ।
व्यापिवैकुण्ठदाता च श्रीमद्भागवतागमः ।। ११
शुकवागमृताब्धीन्दुः शौनकाद्यखिलेष्टदः ।
भक्तिप्रवर्तकस्त्राता व्यासचिन्ताविनाशकः ।। १२
सर्वसिद्धान्तवागात्मा नारदाद्यखिलेष्टदः ।
अन्तरात्मा ध्यानगम्यो भक्तिरत्नप्रदायकः ।। १३

मुक्तोपसृप्यः पूर्णात्मा मुक्तानां रतिवर्धनः ।
भक्तकार्यैकनिरतौ द्रौण्यस्त्रविनिवारकः ॥ १४

भक्तस्मयप्रणेता च भक्तवाक्परिपालकः ।
ब्रह्मण्यदेवो धर्मात्मा भक्तानां च परीक्षकः ॥ १५

आसन्नहितकर्ता च मायाहितकरः प्रभुः ।
उत्तराप्राणदाता च ब्रह्मास्त्रविनिवारकः ॥ १६

सर्वतः पाण्डवपतिः परीक्षिच्छुद्धिकारणम् ।
गूढात्मा सर्ववेदेषु भक्तैकहृदयङ्गमः ॥ १७

कुन्तीस्तुत्यः प्रसन्नात्मा परमाद्भुतकार्यकृत् ।
भीष्ममुक्तिप्रदः स्वामी भक्तमोहनिवारकः ॥ १८

सर्वावस्थासु संसेव्यः समः सुखहितप्रदः ।
कृतकृत्यः सर्वसाक्षी भक्तस्त्रीरतिवर्धनः ॥ १९

सर्वसौभाग्यनिलयः परमाश्चर्यरूपधृक् ।
अनन्यपुरुषस्वामी द्वारकाभाग्यभाजनषम् ॥ २०

बीजसंस्कारकर्ता च परीक्षिज्ज्ञानपोषकः ।
सर्वत्रपूर्णगुणकः सर्वभूषणभूषितः ॥ २१

सर्वलक्षणदाता च धृतराष्ट्रविमुक्तिदः ।
सन्मार्गरक्षको नित्यं विदुरप्रीतिपूरकः ॥ २२

लीलाव्यामोहकर्ता च कालधर्मप्रवर्तकः ।
पाण्डवानां मोक्षदाता परीक्षिद्भाग्यवर्धनः ॥ २३

कलिनिग्रहकर्ता च धर्मादीनां च पोषकः ।
सत्सङ्गज्ञानहेतुश्च श्रीभागवतकारणम् ॥ २४

प्राकृतादृष्टमार्गश्च श्रोतव्यः सकलागमैः ।
(द्वितीयस्कन्धीयनामानि)
कीर्तितव्यः शुद्धभावैः स्मर्तव्यश्चात्मवित्तमैः ।। २५
अनेकमार्गकर्ता च नानाविधगतिप्रदः ।
पुरुषः सकलाधारः सत्त्वैकनिलयात्मभूः ।। २६
सर्वध्येयो योगगम्यो भक्त्या ग्राह्यः सुरप्रियः ।
जन्मादिसार्थककृतिर्लीलाकर्ता पतिः सताम् ।। २७
आदिकर्ता तत्त्वकर्ता सर्वकर्ता विशारदः ।
नानावतारकर्ता च ब्रह्माविर्भावकारणम् ।। २८
दशलीलाविनोदी च नानासृष्टिप्रवर्तकः ।
अनेककल्पकर्ता च सर्वदोषविवर्जितः ।। २९
(तृतीयस्कन्धीयनामनि)
वैराग्यहेतुस्तीर्थात्मा सर्वतीर्थफलप्रदः ।
तीर्थशुद्धैकनिलयः स्वमार्गपरिपोषकः ।। ३०
तीर्थकीतिर्भक्तगम्यो भक्तानुशयकार्यकृत् ।
भक्ततुल्यः सर्वतुल्यः स्वेच्छासर्वप्रवर्तकः ।। ३१
गुणातीतोऽनवद्यात्मा सर्गलीलाप्रवर्तकः ।
साक्षात्सर्वजगत्कर्ता महदादिप्रवर्तकः ।। ३२
मायाप्रवर्तकः साक्षी मायारतिविवर्धनः ।
आकाशात्मा चतुर्मूर्तिश्चतुर्धा भूतभावनः ।। ३३
रजःप्रवर्तको ब्रह्मा मरीच्यादिपितामहः ।
वेदकर्ता यज्ञकर्ता सर्वकर्ताऽमितात्मकः ।। ३४

अनेकसृष्टिकर्ता च दशधासृष्टिकारकः ।
यज्ञाङ्गो यज्ञवाराहो भूधरो भूमिपालकः ॥ ३५

सेतुर्विधरणो जैत्रो हिरण्याक्षान्तकः सुरः ।
दितिकश्यपकामैकहेतुसृष्टिप्रवर्तकः ॥ ३६

देवाभयप्रदाता च वैकुण्ठाधिपतिर्महान् ।
सर्वगर्वप्रहारी च सनकाद्यखिलार्थदः ॥ ३७

सर्वाश्वासनकर्ता च भक्ततुल्याहवप्रदः ।
काललक्षणहेतुश्च सर्वार्थज्ञापकः परः ॥ ३८

भक्तोन्नतिकरः सर्वप्रकारसुखदायकः ।
नानायुद्धप्रहरणो ब्रह्मशापविमोचकः ॥ ३९

पुष्टिसर्गप्रणेता च गुणसृष्टिप्रवर्तकः ।
कर्दमेष्टप्रदाता च देवहूत्यखिलार्थदः ॥ ४०

शुक्लनारायणः सत्यकालधर्मप्रवर्तकः ।
ज्ञानावतारः शान्तात्मा कपिलः कालनाशकः ॥ ४१

त्रिगुणाधिपतिः सांख्यशास्त्रकर्ता विशारदः ।
सर्गदूषणहारी च पुष्टिमोक्षप्रवर्तकः ॥ ४२

लौकिकानन्ददाता च ब्रह्मानन्दप्रवर्तकः ।
भक्तिसिद्धान्तवक्ता च सगुणज्ञानदीपकः ॥ ४३

आत्मप्रदः पूर्णकामो योगात्मा योगभावितः ।
जीवन्मुक्तिप्रदः श्रीमानन्यभक्तिप्रवर्तकः ॥ ४४

कालसामर्थ्यदाता च कालदोषनिवारकः ।
गर्भोत्तमज्ञानदाता कर्ममार्गनियामकः ॥ ४५

सर्वमार्गनिराकर्ता भक्तिमार्गैकपोषकः ।
सिद्धिहेतुः सर्वहेतुः सर्वाश्चर्यैककारणम् ।। ४६
चेतनाचेतनपतिः समुद्रपरिपूजितः ।
सांख्याचार्यस्तुतः सिद्धपूजितः सर्वपूजितः ।। ४७
(चतुर्थस्कन्धीयनामानि)
विसर्गकर्ता सर्वेशः कोटिसूर्यसमप्रभः ।
अनन्तगुणगम्भीरो महापुरुषपूजितः ।। ४८
अनन्तसुखदाता च ब्रह्मकोटिप्रजापतिः ।
सुधाकोटिस्वास्थ्यहेतुः कामधुक्कोटिकामदः ।। ४९
समुद्रकोटिगम्भीरस्तीर्थकोटिसमाह्वयः ।
सुमेरुकोटिनिष्कम्पः कोटिब्रह्माण्डविग्रहः ।। ५०
कोट्यश्वमेधपापघ्नो वायुकोटिमहाबलः ।
कोटीन्दुजगदानन्दी शिवकोटिप्रसादकृत् ।। ५१
सर्वसद्गुणमाहात्म्यः सर्वसद्गुणभाजनम् ।
मन्वादिप्रेरको धर्मो यज्ञनारायणः परः ।। ५२
आकूतिसूनुर्देवेन्द्रो रुचिजन्माऽभयप्रदः ।
दक्षिणापतिरोजस्वी क्रियाशक्तिः परायणः ।। ५३
दत्तात्रेयो योगपतिर्योगमार्गप्रवर्तकः ।
अनसूयागर्भरत्नमृषिवंशविवर्धनः ।। ५४
गुणत्रयविभागज्ञश्चतुर्वर्गविशारदः ।
नारायणो धर्मसूनुर्मूर्तिपुण्ययशस्करः ।। ५५

सहस्रकवचच्छेदी तपःसारो नरप्रियः ।
विश्वानन्दप्रदः कर्मसाक्षी भारतपूजितः ।। ५६
अनन्ताद्भुतमाहात्म्यो बदरीस्थानभूषणम् ।
जितकामो जितक्रोधो जितसङ्गो जितेन्द्रियः ।। ५७
उर्वशीप्रभवः स्वर्गसुखदायी स्थितिप्रदः ।
अमानी मानदो गोप्ता भगवच्छास्त्रबोधकः ।। ५८
ब्रह्मादिवन्द्यो हंसः श्रीर्मायावैभवकारणम् ।
विविधानन्तसर्गात्मा विश्वपूरणतत्परः ।। ५९
यज्ञजीवनहेतुश्च यज्ञस्वामीष्टबोधकः ।
नानासिद्धान्तगम्यश्च सप्ततन्तुश्च षड्गुणः ।। ६०
प्रतिसर्गजगत्कर्ता नानालीलाविशारदः ।
ध्रुवप्रियो ध्रुवस्वामी चिन्तिताधिकदायकः ।। ६१
दुर्लभानन्तफलदो दयानिधिरमित्रहा ।
अङ्गस्वामी कृपासारो वैन्यो भूमिनियामकः ।। ६२
भूविदोग्धा प्रजाप्राणपालनैकपरायणः ।
यशोदाता ज्ञानदाता सर्वधर्मप्रदर्शकः ।। ६३
पुरञ्जनो जगन्मित्रं विसर्गान्तप्रदर्शनः ।
प्रचेतसां पतिश्चित्रभक्तिहेतुर्जनार्दनः ।। ६४
स्मृतिहेतुब्रह्मभावसायुज्यादिप्रदः शुभः ।
विजयी स्थितिलीलाब्धिरच्युतो विजयप्रदः ।। ६५

(पञ्चमस्कन्धीयनामानि)

स्वसामर्थ्यप्रदो भक्तकीर्तिहेतुरधोक्षजः ।
प्रियव्रतप्रियस्वामी स्वेच्छावादविशारदः ॥ ६६
सङ्ख्यगम्यः स्वप्रकाशः सर्वसङ्गविवर्जितः ।
इच्छायां च समर्यादस्त्यागमात्रोपलम्भनः ॥ ६७
अचिन्त्यकार्यकर्ता च तर्कागोचरकार्यकृत् ।
शृङ्गाररसमर्यादा आग्नीध्ररसभाजनम् ॥ ६८
नाभीष्टपूरकः कर्ममर्यादादर्शनोत्सुकः ।
सर्वरूपोऽद्भुततमो मर्यादापुरुषोत्तमः ॥ ६९
सर्वरूपेषु सत्यात्मा कालसाक्षी शशिप्रभः ।
मेरुदेवीव्रतफलमृषभो भगलक्षणः ॥ ७०
जगत्सन्तर्पको मेघरूपी देवेन्द्रदर्पहा ।
जयन्तीपतिरत्यन्तप्रमाणाशेषलौकिकः ॥ ७१
शतधान्यस्तभूतात्मा शतानन्दो गुणप्रसूः ।
वैष्णवोत्पादनपरः सर्वधर्मोपदेशकः ॥ ७२
परहंसक्रियागोप्ता योगचर्याप्रदर्शकः ।
चतुर्थाश्रमनिर्णेता सदानन्दशरीरवान् ॥ ७३
प्रदर्शितान्यधर्मश्च भरतस्वाम्यपारकृत् ।
यथावत्कर्मकर्ता च सङ्गानिष्टप्रदर्शकः ॥ ७४
आवश्यकपुनर्जन्मकर्ममार्गप्रदर्शकः ।
यज्ञरूपमृगः शान्तः सहिष्णुः सत्पराक्रमः ॥ ७५

रहूगणगतिज्ञश्च रहूगणविमोचकः ।
भवाटवीतत्त्ववक्ता बहिर्मुखहिते रतः ॥ ७६
गयस्वामी स्थानवंशकर्ता स्थानविभेदकृत् ।
पुरुषावयवो भूमिविशेषविनिरूपकः ॥ ७७
जम्बूद्वीपपतिर्मेरुनाभिपद्मरुहाश्रयः ।
नानाविभूतिलीलाढ्यो गङ्गोत्पत्तिनिदानकृत् ॥ ७८
गङ्गामाहात्म्यहेतुश्च गङ्गारूपोऽतिगूढकृत् ।
वैकुण्ठदेहहेत्वम्बुजन्मकृत् सर्वपावनः ॥ ७९
शिवस्वामी शिवोपास्यो गूढः सङ्कर्षणात्मकः ।
स्थानरक्षार्थमत्स्यादिरूपः सर्वैकपूजितः ॥ ८०
उपास्यनानारूपात्मा ज्योतीरूपो गतिप्रदः ।
सूर्यनारायणो वेदकान्तिरुज्ज्वलवेषधृक् ॥ ८१
हंसोऽन्तरिक्षगमनः सर्वप्रसवकाणम् ।
आनन्दकर्ता वसुदो बुधो वाक्पतिरुज्ज्वलः ॥ ८२
कालात्मा कालकालश्च कालच्छेदकृदुत्तमः ।
शिशुमारः सर्वमूर्तिराधिदैविकरूपधृक् ॥ ८३
अनन्तसुखभोगाढ्यो विवरैश्वर्यभाजनम् ।
सङ्कर्षणो दैत्यपतिः सर्वाधारो बृहद्वपुः ॥ ८४
अनन्तनरकच्छेदी स्मृतिमात्रार्तिनाशनः।
सर्वानुग्रहकर्ता च मर्यादाभिन्नशास्त्रकृत् ॥ ८५

(षष्ठस्कन्धीयनामानि)

कालान्तकभयच्छेदी नामसामर्थ्यरूपधृक्।
उद्धारानर्हगोप्त्रात्मा नामादिप्रेरकोत्तमः ॥ ८६
अजामिलमहादुष्टमोचकोऽघविमोचकः।
धर्मवक्ताऽक्लिष्टवक्ता विष्णुधर्मस्वरूपधृक् ॥ ८७
सन्मार्गप्रेरको धर्ता त्यागहेतुरधोक्षजः।
वैकुण्ठपुरनेता च दाससंवृद्धिकारकः ॥ ८८
दक्षप्रसादकृद्धंसगुह्यस्तुतिविभावनः।
स्वाभिप्रायप्रवक्ता च मुक्तजीवप्रसूतिकृत् ॥ ८९
नारदप्रेरणात्मा च हर्यश्वब्रह्मभावनः।
शबलाश्वहितो गूढवाक्यार्थज्ञापनक्षमः ॥ ९०
गूढार्थज्ञापनः सर्वमोक्षानन्दप्रतिष्ठितः।
पुष्टिप्ररोहहेतुश्च दासैकज्ञातहृद्गतः ॥ ९१
शान्तिकर्ता सुहितकृत् स्त्रीप्रसूः सर्वकामधुक्।
पुष्टिवंशप्रणेता च विश्वरूपेष्टदेवता ॥ ९२
कवचात्मा पालनात्मा वर्मोपचितिकारणम्।
विश्वरूपशिरश्छेदी त्वाष्ट्रयज्ञविनाशकः ॥ ९३
वृत्रस्वामी वृत्रगम्यो वृत्रव्रतपरायणः।
वृत्रकीर्तिर्वृत्रमोक्षो मघवत्प्राणरक्षकः ॥ ९४
अश्वमेधहरिर्भोक्ता देवेन्द्रामीवनाशकः।
संसारमोचकश्चित्रकेतुबोधनतत्परः ॥ ९५
मन्त्रसिद्धिः सिद्धिहेतुः सुसिद्धिफलदायकः।
महादेवतिरस्कर्ता भक्त्यै पूर्वार्थनाशकः ॥ ९६

देवब्राह्मणविद्वेषवैमुख्यज्ञापकः शिवः ।
आदित्यो दैत्यराजश्च महत्पतिरचिन्त्यकृत् ।। ९७
मरुतां भेदकस्त्राता व्रतात्मा पुंप्रसूतिकृत् ।
(सप्तमस्कन्धीयनामानि)
कर्मात्मा वासनात्मा च ऊतिलीलापरायणः ।। ९८
समदैत्यसुरः स्वात्मा वैषम्यज्ञानसंश्रयः ।
देहाद्युपाधिरहितः सर्वज्ञः सर्वहेतुवित् ।। ९९
ब्रह्मवाक्स्थापनपरः स्वजन्मावधिकार्यकृत् ।
सदसद्वासनाहेतुस्त्रिसत्यो भक्तमोचकः ।। १००
हिरण्यकशिपुद्वेषी प्रविष्टात्माऽतिभीषणः ।
शान्तिज्ञानादिहेतुश्च प्रह्लादोत्पत्तिकारणम् ।। १०१
दैत्यसिद्धान्तसद्वक्ता तपःसार उदारधीः ।
दैत्यहेतुप्रकटनो भक्तिचिह्नप्रकाशकः ।। १०२
सद्वेषहेतुः सद्वेषवासनात्मा निरन्तरः ।
नैष्ठुर्यसीमा प्रह्लादवत्सलः सङ्गदोषहा ।। १०३
महानुभावः साकारः सर्वाकारः प्रमाणभूः ।
स्तम्भप्रसूतिर्नृहरिर्नृसिंहो भीमविक्रमः ।। १०४
विकटास्यो ललज्जिह्वो नखशस्त्रो जवोत्कटः ।
हिरण्यकशिपुच्छेदी क्रूरदैत्यनिवारकः ।। १०५
सिंहासनस्थः क्रोधात्मा लक्ष्मीभयविवर्धनः ।
ब्रह्माद्यत्यन्तभयभूरपूर्वाचिन्त्यरूपधृक् ।। १०६

भक्तैकशान्तहृदयो भक्तस्तुत्यः स्तुतिप्रियः ।
भक्ताभ्गलेहनोद्भूतक्रोधपुञ्जः प्रशान्तधीः ।। १०७
स्मृतिमात्रभयत्राता ब्रह्मबुद्धिप्रदायकः ।
गोरूपधार्यमृतपः शिवकीर्तिविवर्धनः ।। १०८
धर्मात्मा सर्वकर्मात्मा विशेषात्माश्रमप्रभुः ।
संसारमग्नस्वोद्धर्ता सन्मार्गाखिलतत्त्ववाक् ।। १०९
आचारात्मा सदाचारो मन्वन्तरविभावनः ।
(अष्टमस्कन्धीयनामानि)
स्मृत्याशेषाशुभहरो गजेन्द्रस्मृतिकारणम् ।। ११०
जातिस्मरणहेत्वेकपूजाभक्तिस्वरूपदः ।
यज्ञो भयान्मनुत्राता विभुर्ब्रह्मव्रताश्रयः ।। १११
सत्यसेनो दुष्टघाती हरिर्गजविमोचकः ।
वैकुण्ठो लोककर्ता च, अजितोऽमृतकारणम् ।। ११२
उरुक्रमो भूमिहर्ता सार्वभौमो बलिप्रियः ।
विभुः सर्वहितैकात्मा विष्वक्सेनः शिवप्रियः ।। ११३
धर्मसेतुर्लोकधृतिः सुधामान्तरपालकः ।
उपहर्ता योगपतिर्बृहद्भानुः क्रियापतिः ।। ११४
चतुर्दशप्रमाणात्मा धर्मो मन्वादिबोधकः ।
लक्ष्मीभोगैकनिलयो देवमन्त्रप्रदायकः ।। ११५
दैत्यव्यामोहकः साक्षाद्गरुडस्कन्धसंश्रयः ।
लीलामन्दरधारी च दैत्यवासुकिपूजितः ।। ११६

समुद्रोन्मथनायत्तोऽविघ्नकर्ता स्ववाक्यकृत्।
आदिकूर्मः पवित्रात्मा मन्दराघर्षणोत्सुकः ॥ ११७
श्वासैजदब्धिवार्वीचिः कल्पान्तावधिकार्यकृत्।
चतुर्दशमहारत्नो लक्ष्मीसौभाग्यवर्धनः ॥ ११८
धन्वन्तरिः सुधाहस्तो यज्ञभोक्तार्तिनाशनः।
आयुर्वेदप्रणेता च देवदैत्याखिलार्चितः ॥ ११९
बुद्धिव्यामोहको देवकार्यसाधनतत्परः।
स्त्रीरूपो मायया वक्ता दैत्यान्तःकरणप्रियः ॥ १२०
पायितामृतदेवांशो युद्धहेतुस्मृतिप्रदः।
सुमालिमालिवधकृन्माल्यवत्प्राणहारकः ॥ १२१
कालनेमिशिरश्छेदी दैत्ययज्ञविनाशकः।
इन्द्रसामर्थ्यदाता च दैत्यशेषस्थितिप्रियः ॥ १२२
शिवव्यामोहको मायी भृगुमन्त्रस्वशक्तिदः।
बलिजीवनकर्ता च स्वर्गहेतुर्व्रतार्चितः ॥ १२३
अदित्यानन्दकर्ता च कश्यपादितिसम्भवः।
उपेन्द्र इन्द्रावरजो वामनब्रह्मरूपधृक्॥ १२४
ब्रह्मादिसेवितवपुर्यज्ञपावनतत्परः।
याच्ञोपदेशकर्ता च ज्ञापिताशेषसंस्थितिः ॥ १२५
सत्यार्थप्रेरकः सर्वहर्ता गर्वविनाशकः।
त्रिविक्रमस्त्रिलोकात्मा विश्वमूर्तिः पृथुश्रवाः ॥ १२६
पाशबद्धबलिः सर्वदैत्यपक्षोपमर्दकः।
सुतलस्थापितबलिः स्वर्गाधिकसुखप्रदः ॥ १२७

कर्मसम्पूर्तिकर्ता च स्वर्गसंस्थापितामरः ।
ज्ञातत्रिविधधर्मात्मा महामीनोऽब्धिसंश्रयः ।। १२८
सत्यव्रतप्रियो गोप्ता मत्स्यमूर्तिधृतश्रुतिः ।
शृङ्गबद्धधृतक्षोणिः सर्वार्थज्ञापको गुरुः ।। १२९
(नवमस्कन्धीयनामानि)
ईशसेवकलीलात्मा सूर्यवंशप्रवर्तकः ।
सोमवंशोद्भवकरो मनुपुत्रगतिप्रदः ।। १३०
अम्बरीषप्रियः साधुर्दुर्वासोगर्वनाशकः ।
ब्रह्मशापोपसंहर्ता भक्तकीर्तिविवर्धनः ।। १३१
इक्ष्वाकुवंशजनकः सगराद्यखिलार्थदः ।
भगीरथमहायत्नो गङ्गाधौताङ्घ्रिपङ्कजः ।। १३२
ब्रह्मस्वामी शिवस्वामी सगरात्मजमुक्तिदः ।
खट्वाङ्गमोक्षहेतुश्च रघुवंशविवर्धनः ।। १३३
रघुनाथो रामचन्द्रो रामभद्रो रघुप्रियः ।
अनन्तकीर्तिः पुण्यात्मा पुण्यश्लोकैकभास्करः ।। १३४
कोशलेन्द्रः प्रमाणात्मा सेव्यो दशरथात्मजः ।
लक्ष्मणो भरतश्चैव शत्रुघ्नो व्यूहविग्रहः ।। १३५
विश्वामित्रप्रियो दान्तस्ताडकावधमोक्षदः ।
वायव्यास्त्राब्धिनिक्षिप्तमारीचश्च सुबाहुहा ।। १३६
वृषध्वजधनुर्भङ्गप्राप्तसीतामहोत्सवः ।
सीतापतिर्भृगुपतिगर्वपर्वतनाशकः ।। १३७

अयोध्यास्थमहाभोगयुक्तलक्ष्मीविनोदवान्।
कैकयीवाक्यकर्ता च पितृवाक्परिपालकः ॥ १३८
वैराग्यबोधकोऽनन्यसात्त्विकस्थानबोधकः।
अहल्यादुःखहारी च गुहस्वामी सलक्ष्मणः ॥ १३९
चित्रकूटप्रियस्थानो दण्डकारण्यपावनः।
शरभङ्गसुतीक्ष्णादिपूजितोऽगस्त्यभाग्य भूः ॥ १४०
ऋषिसम्प्रार्थितकृतिर्विराधवधपण्डितः।
छिन्नशूर्पणखानासः खरदूषणघातकः ॥ १४१
एकबाणहतानेकसहस्रबलराक्षसः।
मारीचघाती नियतसीतासंबन्धशोभितः ॥ १४२
सीतावियोगनाट्यश्च जटायुर्वधमोक्षदः।
शबरीपूजितो भक्तहनुमत्प्रमुखावृतः ॥ १४३
दुन्दुभ्यस्थिप्रहरणः सप्ततालविभेदनः।
सुग्रीवराज्यदो वालिघाती सागरशोषणः ॥ १४४
सेतुबन्धनकर्ता च विभीषणहितप्रदः।
रावणादिशिरश्छेदी राक्षसाघौघनाशकः ॥ १४५
सीताऽभयप्रदाता च पुष्पकागमनोत्सुकः।
अयोध्यापतिरत्यन्तसर्वलोकसुखप्रदः ॥ १४६
मथुरापुरनिर्माता सुकृतज्ञस्वरूपदः।
जनकज्ञानगम्यश्च ऐलान्तप्रकटश्रुतिः ॥ १४७
हैहयान्तकरो रामो दुष्टक्षत्रविनाशकः।
सोमवंशहितैकात्मा यदुवंशविवर्धनः ॥ १४८

(दशमस्कन्धीयनामानि)

परब्रह्मावतरणः केशवः क्लेशनाशनः ।
भूमिभारावतरणो भक्तार्थाखिलमानसः ॥ १४९
सर्वभक्तनिरोधात्मा लीलानन्तनिरोधकृत् ।
भूमिष्ठपरमानन्दो देवकीशुद्धिकारणम् ॥ १५०
वसुदेवज्ञाननिष्ठसमजीवनिवारकः ।
सर्ववैराग्यकरणस्वलीलाधारशोधकः ॥ १५१
मायाज्ञापनकर्ता च शेषसम्भारसम्भृतिः ।
भक्तक्लेशपरिज्ञाता तन्निवारणतत्परः ॥ १५२
आविष्टवसुदेवांशो देवकीगर्भभूषणम् ।
पूर्णतेजोमयः पूर्णः कंसाधृष्यप्रतापवान् ॥ १५३
विवेकज्ञानदाता च ब्रह्माद्यखिलसंस्तुतः ।
सत्यो जगत्कल्पतरुर्नानारूपविमोहनः ॥ १५४
भक्तिमार्गप्रतिष्ठाता विद्वन्मोहप्रवर्तकः ।
मूलकालगुणद्रष्टा नयनानन्दभाजनम् ॥ १५५
वसुदेवसुखाब्धिश्च देवकीनयनामृतम् ।
पितृमातृस्तुतः पूर्वसर्ववृत्तान्तबोधकः ॥ १५६
गोकुलागतिलीलाप्तवसुदेवकरस्थितिः ।
सर्वेशत्वप्रकटनो मायाव्यत्ययकारकः ॥ १५७
ज्ञानमोहितदुष्टेशः प्रपञ्चास्मृतिकारणम् ।
यशोदानन्दनो नन्दभाग्यभूगोकुलोत्सवः ॥ १५८

नन्दप्रियो नन्दसूनुर्यशोदायाः स्तनन्धयः।
पूतनासुपयःपाता मुग्धभावातिसुन्दरः ॥ १५९
सुन्दरीहृदयानन्दो गोपीमन्त्राभिमन्त्रितः।
गोपालाश्चर्यरसकृत् शकटासुरखण्डनः ॥ १६०
नन्दव्रजजनानन्दी नन्दभाग्यमहोदयः।
तृणावर्तवधोत्साहो यशोदाज्ञानविग्रहः ॥ १६१
बलभद्रप्रियः कृष्णः सङ्कर्षणसहायवान्।
रामानुजो वासुदेवो गोष्ठाङ्गणगतिप्रियः ॥ १६२
किङ्किणीरवभावज्ञो वत्सपुच्छावलम्बनः।
नवनीतप्रियो गोपीमोहसंसारनाशकः ॥ १६३
गोपबालकभावज्ञश्चौर्यविद्याविशारदः।
मृत्स्नाभक्षणलीलास्यमाहात्म्यज्ञानदायकः ॥ १६४
धराद्रोणप्रीतिकर्ता दधिभाण्डविभेदनः।
दामोदरो भक्तवश्यो यमलार्जुनभञ्जनः ॥ १६५
बृहद्वनमहाश्चर्यो वृन्दावनगतिप्रियः।
वत्सघाती बालकेलिर्बकासुरनिषूदनः ॥ १६६
अरण्यभोक्ताप्यथवा बाललीलापरायणः।
प्रोत्साहजनकश्चैवमघासुरनिषूदनः ॥ १६७
व्यालमोक्षप्रदः पुष्टो ब्रह्ममोहप्रवर्धनः।
अनन्तमूर्तिः सर्वात्मा जङ्गमस्थावराकृतिः ॥ १६८
ब्रह्ममोहनकर्ता च स्तुत्य आत्मा सदाप्रियः।
पौगण्डलीलाभिरतिर्गोचारणपरायणः ॥ १६९

वृन्दावनलतागुल्मवृक्षरूपनिरूपकः ।
नादब्रह्मप्रकटनो वयःप्रतिकृतिस्वनः ॥ १७०
बर्हिनृत्यानुकरणो गोपालानुकृतिस्वनः ।
सदाचारप्रतिष्ठाता बलश्रमनिराकृतिः ॥ १७१
तरुमूलकृताशेषतल्पशायी सखिस्तुतः ।
गोपालसेवितपदः श्रीलालितपदाम्बुजः ॥ १७२
गोपसम्प्रार्थितफलदाननाशितधेनुकः ।
कालीयफणिमाणिक्यरञ्जितश्रीपदाम्बुजः ॥ १७३
दृष्टिसञ्जीविताशेषगोपगोगोपिकाप्रियः ।
लीलासम्पीतदावाग्निः प्रलम्बवधपण्डितः ॥ १७४
दावाग्न्यावृतगोपालदृष्ट्याच्छादनवह्निपः ।
वर्षाशरद्विभूतिश्रीर्गोपीकामप्रबोधकः ॥ १७५
गोपीरत्नस्तुताशेषवेणुवाद्यविशारदः ।
कात्यायनीव्रतव्याजसर्वभावाश्रिताङ्गनः ॥ १७६
सत्सङ्गतिस्तुतिव्याजस्तुतवृन्दावनाङ्घ्रिपः ।
गोपक्षुच्छान्तिसंव्याजविप्रभार्याप्रसादकृत् ॥ १७७
हेतुप्राप्तेन्द्रयागस्वकार्यगोसवबोधकः ।
शैलरूपकृताशेषरसभोगसुखावहः ॥ १७८
लीलागोवर्धनोद्धारपालितस्वव्रजप्रियः ।
गोपस्वच्छन्दलीलार्थगर्गवाक्यार्थबोधकः ॥ १७९
इन्द्रधेनुस्तुतिप्राप्तगोविन्देन्द्राभिधानवान् ।
व्रतादिधर्मसंसक्तनन्दक्लेशविनाशकः ॥ १८०

नन्दादिगोपमात्रेष्टवैकुण्ठगतिदायकः ।
वेणुवादस्मरक्षोभमत्तगोपीविमुक्तिदः ।। १८१
सर्वभावप्राप्तगोपीसुखसंवर्धनक्षमः ।
गोपीगर्वप्रणाशार्थतिरोधानसुखप्रदः ।। १८२
कृष्णभावव्याप्तविश्वगोपीभावितवेशधृक् ।
राधाविशेषसम्भोगप्राप्तदोषनिवारकः ।। १८३
परमप्रीतिसङ्गीतसर्वाद्भुतमहागुणः ।
मानापनोदनाक्रन्दगोपीदृष्टिमहोत्सवः ।। १८४
गोपिकाव्याप्तसर्वाङ्गः स्त्रीसम्भाषाविशारदः।
रासोत्सवमहासौख्यगोपीसम्भोगसागरः ।। १८५
जलस्थलरतिव्याप्तगोपीदृष्ट्यभिपूजितः ।
शास्त्रानपेक्षकामैकमुक्तिद्वारविवर्धनः ।। १८६
सुदर्शनमहासर्पग्रस्तनन्दविमोचकः ।
गीतमोहितगोपीधृक्शङ्खचूडविनाशकः ।। १८७
गुणसङ्गीतसन्तुष्टिर्गोपीसंसारविस्मृतिः ।
अरिष्टमथनो दैत्यबुद्धिव्यामोहकारकः ।। १८८
केशिघाती नारदेष्टो व्योमासुरविनाशकः ।
अक्रूरभक्तिसंराद्धपादरेणुमहानिधिः ।। १८९
रथावरोहशुद्धात्मा गोपीमानसहारकः ।
ह्रदसन्दर्शिताशेषवैकुण्ठाक्रूरसंस्तुतः ।। १९०
मथुरागमनोत्साहो मथुराभाग्यभाजनम् ।
मथुरानगरीशोभादर्शनोत्सुकमानसः ।। १९१

दुष्टरञ्जकघाती च वायकार्चितविग्रहः ।
वस्त्रमालासुशोभाङ्गः कुब्जालेपनभूषितः ॥ १९२
कुब्जासुरूपकर्ता च कुब्जारतिवरप्रदः ।
प्रसादरूपसन्तुष्टहरकोदण्डखण्डनः ॥ १९३
शकलाहतकंसाप्तधनूरक्षकसैनिकः ।
जाग्रत्स्वप्नभयव्याप्तमृत्युलक्षणबोधकः ॥ १९४
मथुरामल्ल ओजस्वी मल्लयुद्धविशारदः ।
सद्यःकुवलयापीडघाती चाणूरमर्दनः ॥ १९५
लीलाहतमहामल्लःशलतोशलघातकः ।
कंसान्तको जितामित्रो वसुदेवविमोचकः ॥ १९६
ज्ञाततत्त्वपितृज्ञानमोहनामृतवाङ्मयः ।
उग्रसेनप्रतिष्ठाता यादवाधिविनाशकः ॥ १९७
नन्दादिसान्त्वनकरो ब्रह्मचर्यव्रते स्थितः ।
गुरुशूश्रूषणपरो विद्यापारमितेश्वरः ॥ १९८
सान्दीपनिमृतापत्यदाता कालान्तकादिजित् ।
गोकुलाश्वासनपरो यशोदानन्दपोषकः ॥ १९९
गोपिकाविरहव्याजमनोगतिरतिप्रदः ।
समोद्धवभ्रमरवाक् गोपिकामोहनाशकः ॥ २००
कुब्जारतिप्रदोऽक्रूरपवित्रीकृतभूगृहः ।
पृथादुःखप्रणेता च पाण्डवानां सुखप्रदः ॥ २०१
(दशमस्कन्धोत्तरार्धीयनामानि)
जरासन्धसमानीतसैन्यघाती विचारकः ।

यवनव्याप्तमथुराजनदत्तकुशस्थलिः ॥ २०२
द्वारकाद्भुतनिर्माणविस्मापितसुरासुरः ।
मनुष्यमात्रभोगार्थभूम्यानीतेन्द्रवैभवः ॥ २०३
यवनव्याप्तमथुरानिर्गमानन्दविग्रहः ।
मुचुकुन्दमहाबोधयवनप्राणदर्पहा ॥ २०४
मुचुकुन्दस्तुताशेषगुणकर्ममहोदयः ।
फलप्रदानसन्तुष्टिर्जन्मान्तरितमोक्षदः ॥ २०५
शिवब्राह्मणवाक्याप्तजयभीतिविभावनः ।
प्रवर्षणप्रार्थिताग्निदानपुण्यमहोत्सवः ॥ २०६
रुक्मिणीरमणः कामपिता प्रद्युम्नभावनः ।
स्यमन्तकमणिव्याजप्राप्तजाम्बवतीपतिः ॥ २०७
सत्यभामाप्राणपतिः कालिन्दीरतिवर्धनः ।
मित्रविन्दापतिः सत्यापतिर्वृषनिषूदनः ॥ २०८
भद्रावाञ्छितभर्ता च लक्ष्मणावरणक्षमः ।
इन्द्रादिप्रार्थितवधनरकासुरसूदनः ॥ २०९
मुरारिः पीठहन्ता च ताम्रादिप्राणहारकः ।
षोडशस्त्रीसहस्रेशः छत्रकुण्डलदानकृत् ॥ २१०
पारिजाताहरणो देवेन्द्रमदनाशकः ।
रुक्मिणीसमसर्वस्त्रीसाध्यभोगरतिप्रदः ॥ २११
रुक्मिणीपरिहासोक्तिवाक्तिरोधानकारकः ।
शम्बरान्तकसत्पुत्रविवाहहतरुक्मिकः ।
उषापहृतपौत्रश्रीबाणबाहुनिवारकः ॥ २१३

शीतज्वरभयव्याप्तज्वरसंस्तुतषड्गुणः ।
शङ्करप्रतियोद्धा च द्वन्द्वयुद्धविशारदः ॥ २१४
नृगपापप्रभेत्ता च ब्रह्मस्वगुणदोषदृक् ।
विष्णुभक्तिविरोधैकब्रह्मस्वविनिवारकः ॥ २१५
बलभद्राहितगुणो गोकुलप्रीतिदायकः ।
गोपीस्नेहैकनिलयो गोपीप्राणस्थितिप्रदः ॥ २१६
वाक्यातिगामियमुनाहलाकर्षणवैभवः ।
पौण्ड्रकत्याजितस्पर्धः काशीराजविभेदनः ॥ २१७
काशीनिदाहकरणः शिवभस्मप्रदायकः ।
द्विविदप्राणघाती च कौरवाखर्वगर्वनुत् ॥ २१८
लाङ्गलाकृष्टनगरीसंविग्नाखिलनागरः ।
प्रपन्नाभयदः साम्बप्राप्तसन्मानभाजनम् ॥ २१९
नारदान्विष्टचरणो भक्तविक्षेपनाशकः ।
सदाचारैकनिलयः सुधर्माध्यासितासनः ॥ २२०
जरासन्धावरुद्धेन विज्ञापितनिजक्लमः ।
मन्त्र्युद्धवादिवाक्योक्तप्रकारैकपरायणः ॥ २२१
राजसूयादिमखकृत् सम्प्रार्थितसहायकृत् ।
इन्द्रप्रस्थप्रयाणार्थमहत्सम्भारसम्भृतिः ॥ २२२
जरासन्धवधव्याजमोचिताशेषभूमिपः ।
सन्मार्गबोधको यज्ञक्षितिवारणतत्परः ॥ २२३
शिशुपालहतिव्याजजयशापविमोचकः ।
दुर्योधनाभिमानाब्धिशोषबाणवृकोदरः ॥ २२४

महादेववरप्राप्तपुरशाल्वविनाशकः ।
दन्तवाक्त्रवधव्याजविजयाद्यौघनाशकः ॥ २२५
विदूरथप्राणहर्ता न्यस्तशस्त्रास्त्रविग्रहः ।
उपधर्मविलिप्ताङ्गसूतघाती वरप्रदः ॥ २२६
बल्वलप्राणहरणपालितर्षिश्रुतिक्रियः ।
सर्वतीर्थाघनाशार्थतीर्थयात्राविशारदः ॥ २२७
ज्ञानक्रियाविभेदेष्टफलसाधनतत्परः ।
सारथ्यादिक्रियाकर्ता भक्तवश्यत्वबोधकः ॥ २२८
सुदामरङ्कभार्यार्थभूम्यानीतेन्द्रवैभवः ।
रविग्रहनिमित्ताप्तकुरुक्षेत्रैकपावनः ॥ २२९
नृपगोपीसमस्तस्त्रीपावनार्थाखिलक्रियः ।
ऋषिमार्गप्रतिष्ठाता वसुदेवमखक्रियः ॥ २३०
वसुदेवज्ञानदाता देवकीपुत्रदायकः ।
अर्जुनस्त्रीप्रदाता च बहुलाश्वस्वरूपदः ॥ २३१
श्रुतदेवेष्टदाता च सर्वश्रुतिनिरूपितः ।
महादेवाद्यतिश्रेष्ठो भक्तिलक्षणनिर्णयः ॥ २३२
वृकग्रस्तशिवत्राता नानावाक्यविशारदः ।
नरगर्वविनाशार्थहृतब्राह्मणबालकः ॥ २३३
लोकालोकपरस्थानस्थितबालकदायकः ।
द्वारकास्थमहाभोगनानास्त्रीरतिवर्धनः ॥ २३४
मनस्तिरोधानकृतव्यग्रस्त्रीचित्तभावितः ।
(एकादशस्कन्धीयनामानि)

मुक्तिलीलाविहरणो मौशलव्याजसंहृतिः ॥ २३५
श्रीभागवतधर्मादिबोधको भक्तिनीतिकृत् ।
उद्धवज्ञानदाता च पञ्चविंशतिधा गुरुः ॥ २३६
आचारमुक्तिभक्त्यादिवक्ता शब्दोद्भवस्थितिः ।
हंसो धर्मप्रवक्ता च सनकाद्युपदेशकृत् ॥ २३७
भक्तिसाधनवक्ता च योगसिद्धिप्रदायकः ।
नानाविभूतिवक्ता च शुद्धधर्मावबोधकः ॥ २३८
मार्गत्रयविभेदात्मा नानाशङ्कानिवारकः ।
भिक्षुगीताप्रवक्ता च शुद्धसांख्यप्रवर्तकः ॥ २३९
मनोगुणविशेषात्मा ज्ञापकोक्तपुरूरवाः ।
पूजाविधिप्रवक्ता च सर्वसिद्धान्तबोधकः ॥ २४०
लघुस्वमार्गवक्ता च स्वस्थानगतिबोधकः।
यादवाङ्गोपसंहर्ता सर्वाश्चर्यगतिक्रियः ॥ २४१

(द्वादशस्कन्धीयनामानि)

कालधर्मविभेदार्थवर्णनाशनतत्परः ।
बुद्धो गुप्तार्थवक्ता च नानाशास्त्रविधायकः ॥ २४२
नष्टधर्ममनुष्यादिलक्षणज्ञापनोत्सुकः ।
आश्रयैकगतिज्ञाता कल्किः कलिमलापहः ॥ २४३
शास्त्रवैराग्यसम्बोधो नानाप्रलयबोधकः ।
विशेषतः शुकव्याजपरीक्षिज्ज्ञानबोधकः ॥ २४४
शुकेष्टगतिरूपात्मा परीक्षिद्देहमोक्षदः ।
शब्दरूपो नादरूपो वेदरूपो विभेदनः ॥ २४५

व्यासः शाखाप्रवक्ता च पुराणार्थप्रवर्तकः ।
मार्कण्डेयप्रसन्नात्मा वटपत्रपुटेशयः ॥ २४६
मायाव्याप्तमहामोहदुःखशान्तिप्रवर्तकः ।
महादेवस्वरूपश्च भक्तिदाता कृपानिधिः ॥ २४७
आदित्यान्तर्गतः कालो द्वादशात्मा सुपूजितः ।
श्रीभागवतरूपश्च सर्वार्थफलदायकः ॥ २४८
इतीदं कीर्तनीयस्य हरेर्नामसहस्रकम् ।
पञ्चसप्ततिविस्तीर्णं पुराणान्तरभाषितम् ॥ २४९
य एतत्प्रातरुत्थाय श्रद्धावान् सुसमाहितः ।
जपेदर्थाहितमतिः स गोविन्दपदं व्रजेत् ॥ २५०
सर्वधर्मविनिर्मुक्तः सर्वसाधनवर्जितः ।
एतद्धारणमात्रेण कृष्णस्य पदवीं व्रजेत् ॥ २५१
हर्यावेशितचित्तेन श्रीभागवतसागरात् ।
समुद्धृतानि नामानि चिन्तामणिनिभानि हि ॥
कण्ठस्थितान्यर्थदीप्त्या बाधन्तेऽज्ञानजं तमः ।
भक्तिं श्रीकृष्णदेवस्य साधयन्ति विनिश्चितम् ॥ २५३
किम्बहूक्तेन भगवान् नामभिः स्तुतषड्गुणः ।
आत्माभावं नयत्याशु भक्तिं च कुरुते दृढाम् ॥ २५४
यः कृष्णभक्तिमिह वाञ्छति साधनौघैः
नामानि भासुरयशांसि जपेत्स नित्यम् ।
तं वै हरिः स्वपुरुषं कुरुतेऽतिशीघ्र-
मात्मार्पणं समधिगच्छति भावतुष्टः ॥ २५५

श्रीकृष्ण कृष्णसख वृष्णिवृषावनिध्रुक्-
राजन्यवंशदहनानपवर्गवीर्य।
गोविन्द गोपवनिताव्रजभृत्यगीत
तीर्थश्रवः श्रवणमङ्गल पाहि भृत्यान्॥ २५६

—*—

# पुरुषोत्तमसहस्रनामावलिः

(भागवतकथाऽनुसारिणी)

(प्रथमस्कन्धतः)

श्रीकृष्णाय नमः । सच्चिदानन्दाय । नित्यलीलाविनोदकृते । सर्वागमविनोदिने । लक्ष्मीशाय । पुरुषोत्तमाय । आदिकालाय । सर्वकालाय । कालात्मने । माययाऽऽवृताय । भक्तोद्धारप्रयत्नात्मने । जगत्कर्त्रे । जगन्मयाय । नामलीलापराय । विष्णवे । व्यासात्मने । शुकमोक्षदाय । व्यापिवैकुण्ठदात्रे । श्रीमद्भागवतागमाय । शुकवागमृताब्धीन्दवे नमः । २०

शौनकाद्यखिलेष्टदाय नमः । भक्तिप्रवर्तकाय । त्रात्रे । व्यासचिन्ताविनाशकाय । सर्वसिद्धान्तवागात्मने । नारदाद्यखिलेष्टदाय । अन्तरात्मने । ध्यानगम्याय । भक्तिरत्नप्रदायकाय । मुक्तोपसृप्याय । पूर्णात्मने । मुक्तानां रतिवर्धनाय । भक्तकार्यैकनिरताय । द्रौण्यस्त्रविनिवारकाय । भक्तस्मयप्रणेत्रे । भक्तवाक्परिपालकाय । ब्रह्मण्यदेवाय । धर्मात्मने । भक्तानां परीक्षकाय । आसन्निहितकर्त्रे । नमः । ४०

मायाहितकराय नमः । प्रभवे । उत्तराप्राणदात्रे । ब्रह्मास्त्रविनिवारकाय । सर्वतः पाण्डवपतये । परीक्षिच्छुद्धिकारणाय ।

सर्ववेदेषु गूढात्मने। भक्तैकहृदयङ्गमाय। कुन्तीस्तुत्याय। प्रसन्नात्मने। परमाद्भुतकार्यकृते। भीष्ममुक्तिप्रदाय। स्वामिने। भक्तमोहनिवारकाय। सर्वावस्थासु संसेव्याय। समाय। सुखहितप्रदाय। कृतकृत्याय। सर्वसाक्षिणे। भक्तस्त्रीरतिवर्धनाय नमः। ६०

सर्वसौभाग्यनिलयाय नमः। परमाश्चर्यरूपधृषे। अनन्यपुरुषस्वामिने। द्वारकाभाग्यभाजनाय। बीजसंस्कारकर्त्रे। परीक्षिज्ज्ञानपोषकाय। सर्वत्र पूर्णगुणकाय। सर्वभूषणभूषिताय। सर्वलक्षणदात्रे। धृतराष्ट्रविमुक्तिदाय। नित्यं सन्मार्गरक्षकाय। विदुरप्रीतिपूरकाय। लीलाव्यामोहकर्त्रे। कालधर्मप्रवर्तकाय। पाण्वानां मोक्षदात्रे। परीक्षिद्भाग्यवर्धनाय। कलिनिग्रहकर्त्रे। धर्मादीनां पोषकाय। सत्सङ्गज्ञानहेतवे। श्रीभागवतकारणाय नमः। (८०)

(द्वितीय स्कन्धतः) प्राकृतादृष्टमार्गाय नमः। सकलागमैः श्रोतव्याय। शुद्धभावैः कीर्तितव्याय। आत्मवित्तमैः स्मर्तव्याय। अनेकमार्गकर्त्रे। नानाविधगतिप्रदाय। पुरुषाय। सकलाधाराय। सत्वैकनिलयात्मभुवे। सर्वध्येयाय। योगगम्याय। भक्त्या ग्राह्याय। सुरप्रियाय। जन्मादिसार्थककृतये। लीलाकर्त्रे। सतां पतये। आदिकर्त्रे। तत्त्वकर्त्रे। सर्वकर्त्रे। विशारदाय नमः (१००)

नानावतारकर्त्रे नमः। ब्रह्माविर्भावकारणाय। दशलीलाविनोदिने। नानासृष्टिप्रवर्तकाय। अनेककल्पकर्त्रे। सर्वदोषविवर्जिताय। (तृतीयस्कन्धतः) वैराग्यहेतवे। तीर्थात्मने। सर्वतीर्थफलप्रदाय। तीर्थशुद्धैकनिलयाय। स्वमार्गपरिपोषकाय। तीर्थकीर्तये। भक्तगम्याय। भक्तानुशयकार्यकृते। भक्ततुल्याय। सर्वतुल्याय। स्वेच्छासर्वप्रवर्तकाय। गुणातीताय। अनवद्यात्मने। सर्गलीलाप्रवर्तकाय नमः। १२०

साक्षात्सर्वजगत्कर्त्रे नमः । महदादिप्रवर्तकाय । मायाप्रवर्तकाय । साक्षिणे । मायारतिविवर्धनाय । आकाशात्मने । चतुर्मूर्तये । चतुर्धा भूतभावनाय । रजःप्रवर्तकाय । ब्रह्मणे । मरीच्यादिपितामहाय । वेदकर्त्रे । यज्ञकर्त्रे । सर्वकर्त्रे । अमितात्मकाय । अनेकसृष्टिकर्त्रे । दशधासृष्टिकारकाय । यज्ञाङ्गाय । यज्ञवाराहाय । भूधराय नमः ।। १४०

भूमिपालकाय नमः । सेतवे । विधरणाय । जैत्राय । हिरण्याक्षान्तकाय । सुराय । दितिकश्यपकामैकहेतुसृष्टिप्रवर्तकाय । देवाभयप्रदात्रे । वैकुण्ठाधिपतये । महते । सर्वगर्वप्रहारिणे । सनकाद्यखिलार्थदाय । सर्वाश्वासनकर्त्रे । भक्ततुल्याहवप्रदाय । काललक्षणहेतवे । सर्वार्थज्ञापकाय । पराय । भक्तोन्नतिकराय । सर्वप्रकारसुखदायकाय । नानायुद्धप्रहरणाय नमः । १६०

ब्रह्मशापविमोचकाय नमः । पुष्टिसर्गप्रणेत्रे । गुणसृष्टिप्रवर्तकाय । कर्दमेष्टप्रदात्रे । देवहूत्यखिलार्थदाय । शुक्लनारायणाय । सत्यकालधर्मप्रवर्तकाय । ज्ञानावताराय । शान्तात्मने । कपिलाय । कालनाशकाय । त्रिगुणाधिपतये । सांख्यशास्त्रकर्त्रे । विशारदाय । सर्गदूषणहारिणे । पुष्टिमोक्षप्रवर्तकाय । लौकिकानन्ददात्रे । ब्रह्मानन्दप्रवर्तकाय । भक्तिसिद्धान्तवक्त्रे । सगुणज्ञानदीपकाय नमः । १८०

आत्मप्रदाय नमः । पूर्णकामाय । योगात्मने । योगभाविताय । जीवन्मुक्तिप्रदाय । श्रीमते । अन्यभक्तिप्रवर्तकाय । कालसामर्थ्यदात्रे । कालदोषनिवारकाय । गर्भोत्तमज्ञानदात्रे । कर्ममार्गनियामकाय । सर्वमार्गनिराकर्त्रे । भक्तिमार्गैकपोषकाय । सिद्धिहेतवे । सर्वहेतवे । सर्वाश्चर्यैककारणाय । चेतनाचेतनपतये । समुद्रपरिपूजिताय । सांख्याचार्यस्तुताय । सिद्धपूजिताय नमः । २००

सर्वपूजिताय नमः (चतुर्थस्कन्धतः) विसर्गकर्त्रे । सर्वेशाय । कोटिसूर्यसमप्रभाय । अनन्तगुणगम्भीराय । महापुरुषपूजिताय । अनन्तसुखदात्रे । ब्रह्मकोटिप्रजापतये । सुधाकोटिस्वास्थ्यहेतवे । कामधुक्कोटिकामदाय । समुद्रकोटिगम्भीराय । तीर्थकोटिसमाह्वयाय । सुमेरुकोटिनिष्कम्पाय । कोटिब्रह्माण्डविग्रहाय । कोट्यश्वमेधपापघ्नाय । वायुकोटिमहाबलाय । कोटीन्दुजगदानन्दिने । शिवकोटिप्रसादकृते । सर्वसद्गुणमाहात्म्याय । सर्वसद्गुणभाजनाय नमः । २२०

मन्वादिप्रेरकाय नमः । धर्माय । यज्ञनारायणाय । पराय । आकृतिसूनवे । देवेन्द्राय । रुचिजन्मने । अभयप्रदाय । दक्षिणापतये। ओजस्विने । क्रियाशक्तये । परायणाय । दत्तात्रेयाय । योगपतये । योगमार्गप्रवर्तकाय । अनसूयागर्भरत्नाय । ऋषिवंशविवर्धनाय । गुणत्रयविभागज्ञाय । चतुर्वर्गविशारदाय । नारायणाय नमः । २४०

धर्मसूनवे नमः । मूर्तिपुण्ययशस्कराय । सहस्रकवचच्छेदिने । तपःसाराय । नरप्रियाय । विश्वानन्दप्रदाय । कर्मसाक्षिणे । भारतपूजिताय । अनन्ताद्भुतमाहात्म्याय । बदरीस्थानभूषणाय । जितकामाय । जितक्रोधाय। जितसङ्गाय । जितेन्द्रियाय । उर्वशीप्रभवाय । स्वर्गसुखदायिने । स्थितिप्रदाय । अमानिने । मानदाय । गोप्त्रे नमः । २६०

भगवच्छास्त्रबोधकाय नमः । ब्रह्मादिवन्द्याय । हंसाय । श्रियै । मायावैभवकारणाय। विविधानन्दसर्गात्मने । विश्वपूरणतत्पराय । यज्ञजीवनहेत्वे । यज्ञस्वामिने । इष्टबोधकाय । नानासिद्धान्तगम्याय । सप्ततन्तवे । षड्गुणाय । प्रतिसर्गजगत्कर्त्रे । नानालीलाविशारदाय । ध्रुवप्रियाय। ध्रुवस्वामिने । चिन्तिताधिकदायकाय। दुर्लभानन्तफलदाय। दयानिधये नमः ।। २८०

ओं अमित्रघ्ने नमः । अङ्गस्वामिने । कृपासाराय । वैन्याय । भूमिनियामकाय । भूविदोग्ध्रे । प्रजाप्राणपालनैकपरायणाय । यशोदात्रे । ज्ञानदात्रे । सर्वधर्मप्रदर्शकाय । पुरञ्जनाय । जगन्मित्राय । विसर्गान्तप्रदर्शनाय । प्रचेतसां पतये । चित्रभक्तिहेतवे । जनार्दनाय । स्मृतिहेतुब्रह्मभाव सायुज्यादिप्रदाय । शुभाय । (पञ्चमस्कन्धतः) विजयिने स्थितिलीलाब्धये नमः । ३००

ओं अच्युताय नमः । विजयप्रदाय । स्वसामर्थ्य प्रदाय । भक्तकीर्तिहितवे । अधोक्षजाय । प्रियव्रतप्रियस्वामिने । स्वेच्छावाद-विशारदाय । सङ्गचगम्याय । स्वप्रकाशाय । सर्वसङ्गविवर्जिताय । इच्छायां समर्यादाय । त्यागमात्रोपलम्भनाय । अचिन्त्य कार्यकर्त्रे । तर्कागेचरकार्यकृते । शृङ्गाररसमर्यादायै । आग्नीध्ररसभाजनाय । नाभीष्टपूरकाय । कर्ममर्यादादर्शनोत्सुकाय । सर्वरूपाय । अद्भुततमाय नमः । ३२०

मर्यादापुरुषोत्तमाय नमः । सर्वरूपेषु सत्यात्मने । कालसाक्षिणे । शशिप्रभाय । मेरुदेवीव्रतफलाय । ऋषभाय । भगलक्षणाय । जगत्सन्तर्पकाय । मेघरूपिणे । देवेन्द्रदर्पघ्ने । जयन्तीपतये । अत्यन्तप्रमाणाशेषलौकिकाय । शताधान्यस्तभूतात्मने । शतनन्दाय । गुणप्रसुवे । वैष्णवोत्पादनपराय । सर्वधर्मोपदेशकाय । परहंसक्रिया-गोप्त्रे । योगचर्याप्रवर्तकाय । चतुर्थाश्रमनिर्णेत्रे नमः । ३४०

सदानन्दशरीवते नमः । प्रदर्शितान्यधर्माय । भरतस्वामिने । अपारकृते । यथावत्कर्मकर्त्रे । सङ्गानिष्टप्रदर्शकाय । आवश्यकपुनर्जन्म-कर्ममार्गप्रदर्शकाय । यज्ञरूपमृगाय । शान्ताय । सहिष्णवे । सत्पराक्रमाय । रहूगणगतिज्ञाय । रहूगणविमोचकाय । भवाटवीतत्त्व-वक्त्रे । बहिर्मुखहिते रताय । गयस्वामिने । स्थानवंशकर्त्रे ।

स्थानविभागकृते । पुरुषावयवाय । भूमिविशेषविनिरूपकाय नमः । ३६०

जम्बूद्वीपपतये नमः । मेरुनाभिपद्मरुहाश्रयाय । नानाविभूतिलीलाढ्याय । गङ्गोत्पत्तिनिदानकृते । गङ्गामाहात्म्यहेतवे । गङ्गारूपाय । अतिगूढकृते । वैकुण्ठदेहहेत्वम्बुजन्मकृते । सर्वपावनाय । शिवस्वामिने । शिवोपास्याय । गूढाय । सङ्कर्षणात्मकाय । स्थानरक्षार्थ मत्स्यादिरूपाय । सर्वैकपूजिताय । उपास्यनानारूपात्मने । ज्योतीरूपाय । गतिप्रदाय । सूर्यनारायणाय । वेदकान्तये नमः । ३८०

उज्ज्वलवेषधृशे नमः । हंसाय । अन्तरिक्षगमनाय । सर्वप्रसवकारणाय । आनन्दकर्त्रे । वसुदाय । बुधाय । वाक्पतये । उज्ज्वलाय । कालात्मने । कालकालाय । कालच्छेदकृते । उत्तमाय । शिशुमाराय । सर्वमूर्तये । आधिदैविकरूपधृशे । अनन्तसुखभोगाढ्याय । विवरैश्वर्य भाजनाय । सङ्कर्षणाय । दैत्यपतये नमः । ४००

सर्वाधाराय नमः । बृहद्वपुषे । अनन्तनरकच्छेदिने । स्मृतिमात्रार्तिनाशनाय । सर्वानुग्रहकर्त्रे । मर्यादाभिन्नशास्त्रकृते । (षष्ठस्कन्धतः) कालान्तकभयच्छेदिने । नामसामर्थ्यरूपधृशे । उद्धारानर्हगोप्त्रात्मने । नामादिप्रेरकोत्तमाय । अजामिलमहादुष्ट-मोचकाय । अघविमोचकाय । धर्मवक्त्रे । अक्लिष्टवक्त्रे । विष्णुधर्मस्वरूपधृशे । सन्मार्गप्रेरकाय । धर्त्रे । त्यागहेतवे । अधोक्षजाय । वैकुण्ठपुरनेत्रे नमः ।। ४२०

दाससंवृद्धिकारकाय नमः । दक्षप्रसादकृते । हंसगुह्यस्तुति-विभावनाय । स्वाभिप्रायप्रवक्त्रे । मुक्तजीवप्रसूतिकृते । नारदप्रेरणात्मने । हर्यश्वब्रह्मभावनाय । शबलाश्वहिताय । गूढवाक्यार्थज्ञापनक्षमाय । गूढार्थज्ञापनाय । सर्वमोक्षानन्दप्रतिष्ठिताय । पुष्टिप्ररोहहेतवे ।

दासैकज्ञातहृद्गताय । शान्तिकर्त्रे । सुहितकृते । स्त्रीप्रसुवे। सर्वकामदुहे । पुष्टिवंशप्रणेत्रे । विश्वरूपेष्टदेवतायै । कवचात्मने नमः । ४४०

ओं पालनात्मने नमः । वर्मोपचितिकारणाय । विश्वरूपशिरच्छेदिने । त्वाष्ट्रयज्ञविनाशकाय । वृत्रस्वामिने । वृत्रगम्याय । वृत्रव्रतपरायणाय । वृत्रकीर्तये । वृत्रमोक्षाय । मघवत्प्राणरक्षकाय । अश्वमेधहविर्भोक्त्रे । देवेन्द्रामीवनाशकाय । संसारमोचकाय । चित्रकेतुबोधनतत्पराय । मन्त्रसिद्धये । सिद्धिहेतवे । सुसिद्धिफलदायकाय । महादेवतिरस्कर्त्रे । भक्त्यै पूर्वार्थनाशकाय । देवब्राह्मण विद्वेषवैमुख्यज्ञापकाय नमः । ४६०

शिवाय नमः । आदित्याय । दैत्यराजाय । महत्पतये । अचिन्त्यकृते । मरुतां भेदकाय । त्रात्रे । व्रतात्मने । पुंप्रसूतिकृते। (सप्तमस्कन्धतः) कर्मात्मने । वासनात्मने । ऊतिलीलापरायणाय । समदैत्यसुराय । स्वात्मने । वैषम्यज्ञानसंश्रयाय । देहाद्युपाधिरहिताय । सर्वज्ञाय । सर्वहेतुविदे । ब्रह्मवाक्स्थापनपराय । स्वजन्मावधिकार्यकृते नमः। ४८०

ओं सदसद्वासनाहेतवे नमः । त्रिसत्याय । भक्तमोचकाय । हिरण्यकशिपुद्वेषिणे । प्रविष्टात्मने । अतिभीषणाय । शान्तिज्ञानादि-हेतवे । प्रह्लादोत्पत्तिकारणाय । दैत्यसिद्धान्तसद्वक्त्रे । तपःसाराय । उदारधिये । दैत्यहेतुप्रकटनाय । भक्तिचिह्नप्रकाशकाय । सद्द्वेषहेतवे । सद्द्वेषवासनात्मने । निरन्तराय । नैष्ठुर्यसीम्ने । प्रह्लादवत्सलाय । सङ्गदोषघ्ने । महानुभावाय नमः । ५००

ओं साकाराय नमः । सर्वाकाराय । प्रमाणभुवे । स्तम्भप्रसूतये । नृहरये । नृसिंहाय । भीमविक्रमाय । विकटास्याय । ललज्जिह्वाय । नखशस्त्राय । जवोत्कटाय। हिरण्यकशिपुच्छेदिने। क्रूरदैत्यनिवारकाय।

सिंहासनस्थाय । क्रोधात्मने । लक्ष्मीभयविवर्धनाय । ब्रह्माद्यत्यन्त-भयभुवे । अपूर्वाचिन्त्यरूपधृशे । भक्तैकशान्तहृदयाय । भक्तस्तुत्याय नमः । ५२०

ओं स्तुतिप्रियाय नमः । भक्ताङ्गलेहनोद्धूतक्रोधपुञ्जाय । प्रशान्तधिये । स्मृतिमात्रभयत्रात्रे । ब्रह्मबुद्धिप्रदायकाय । गोरूपधारिणे । अमृतपाय । शिवकीर्तिविवर्धनाय । धर्मात्मने । सर्वकर्मात्मने । विशेषात्मने । आश्रमप्रभवे । संसारमग्नस्वोद्धर्त्रे । सन्मार्गाखिल-तत्त्ववाचे । (अष्टमस्कन्धतः) आचारात्मने । सदाचाराय । मन्वन्तरविभावनाय । स्मृत्याशेषाशुभहराय । गजेन्द्रस्मृतिकारणाय । जातिस्मरणहेत्वेक-पूजाभक्तिस्वरूपदाय नमः ।। ५४०

ओं यज्ञाय नमः । भयान्मनुत्रात्रे । विभवे । ब्रह्मव्रताश्रयाय । सत्यसेनाय । दुष्टघातिने । हरये । गजविमोचकाय । वैकुण्ठाय । लोककर्त्रे । अजिताय । अमृतकारणाय । उरुक्रमाय । भूमिहर्त्रे । सार्वभौमाय । बलिप्रियाय । विभवे । सर्वहितैकात्मने । विष्वक्सेनाय । शिवप्रियाय नमः । ५६०

धर्मसेतवे नमः । लोकधृतये । सुधामान्तरपालकाय । उपहर्त्रे । योगपतये । बृहद्भानवे । क्रियापतये । चतुर्दशप्रमाणात्मने । धर्माय । मन्वादिबोधकाय । लक्ष्मीभोगैकनिलयाय । देवमन्त्रप्रदायकाय । दैत्यव्यामोहकाय । साक्षाद्गरुडस्कन्धसंश्रयाय । लीलामन्दरधारिणे । दैत्यवासुपूकिजिताय । समुद्रोन्मथनायत्ताय । अविघ्नकर्त्रे । स्ववाक्यकृते । आदिकूर्माय नमः ।। ५८०

ओं पवित्रात्मने नमः। मन्दराघर्षणोत्सुकाय । श्वासैजदब्धिवार्वीचये । कल्पान्तावधिकार्यकृते । चतुर्दशमहारत्नाय । लक्ष्मीसौभाग्यवर्धनाय । धन्वन्तरये । सुधाहस्ताय । यज्ञभोक्त्रे ।

आर्तिनाशनाय । आयुर्वेदप्रणेत्रे । देवदैत्याखिलार्चिताय । बुद्धिव्यामोहकाय । देवकार्यसाधनतत्पराय । मायया स्त्रीरूपाय । वक्त्रे । दैत्यान्तः करणप्रियाय । पायितामृतदेवांशाय । युद्धहेतुस्मृतिप्रदाय । सुमालिमालिवधकृते नमः । ६००

माल्यवत्प्राणहारकाय नमः । कालनेमिशिरश्छेदिने । दैत्ययज्ञ-विनाशकाय । इन्द्रसामर्थ्यदात्रे । दैत्यशेषस्थितिप्रियाय । शिवव्यामोहकाय । मायिने । भृगुमन्त्रस्वशक्तिदाय । बलिजीवनकर्त्रे । स्वर्गहेतवे । ब्रह्मार्चिताय । अदित्यानन्द कर्त्रे । कश्यपादितिसंभवाय । उपेन्द्राय । इन्द्रावरजाय । वामनब्रह्मरूपधृशे । ब्रह्मादिसेवितवपुषे । यज्ञपावनतत्पराय । याच्ञोपदेशकर्त्रे । ज्ञापिताशेषसंस्थितय नमः । ६२०

सत्यार्थप्रेरकाय नमः । सर्वहर्त्रे । गर्वविनाशकाय । त्रिविक्रमाय । त्रिलोकात्मने । विश्वमूर्तये । पृथुश्रवसे । पाशबद्धबलये । सर्वदैत्यपक्षोपमर्दकाय । सुतलस्थापितबलये । स्वर्गाधिकसुखप्रदाय । कर्मसंपूर्तिकर्त्रे । स्वर्गसंस्थापितामराय । ज्ञातत्रिविधधर्मात्मने । महामीनाय । अब्धिसंश्रयाय । सत्यव्रतप्रियाय । गोप्त्रे । मत्स्यमूर्तिधृतश्रुतये । शृङ्गबद्धधृतक्षोणये नमः । ६४०

ओं सर्वार्थज्ञापकाय नमः । गुरवे । (नवमस्कन्धतः) ईशसेवकलीलात्मने । सूर्यवंशप्रवर्तकाय । सोमवंशोद्भवकराय । मनुपुत्रगतिप्रदाय । अम्बरीषप्रियाय । साधवे । दुर्वासोगर्वनाशकाय । ब्रह्मशापोपसंहर्त्रे । भक्तकीर्तिविवर्धनाय । इक्ष्वाकुवंशजनकाय । सगराद्यखिलार्थदाय । भगीरथमहायत्नाय । गङ्गाधौताङ्घ्रिपङ्कजाय । ब्रह्मस्वामिने । शिवस्वामिने । सगरात्मजमुक्तिदाय । खट्वाङ्गमोक्षहेतवे । रघुवंशविवर्धनाय नमः । ६६०

ओं रघुनाथाय नमः । रामचन्द्राय । रामभद्राय । रघुप्रियाय । अनन्तकीर्तये । पुण्यात्मने । पुण्यश्लोकैकभास्कराय । कोशलेन्द्राय । प्रमाणात्मने । सेव्याय । दशरथात्मजाय । लक्ष्मणाय । भरताय । शत्रुघ्नाय । व्यूहविग्रहाय । विश्वामित्रप्रियाय । दान्ताय । ताडकावधमोक्षदाय । वायव्यास्त्राब्धिनिक्षिप्तमारीचाय । सुबाहुघ्ने नमः । ६८०

वृषध्वजधनुर्भङ्गप्राप्तसीतामहोत्सवाय । सीतापतये । भृगुपति-गर्वपर्वतनाशकाय । अयोध्यास्थमहाभोगयुक्तलक्ष्मीविनोदवते । कैकयीवाक्यकर्त्रे । पितृवाक्परिपालकाय । वैराग्यबोधकाय । अनन्यसात्विकस्थानबोधकाय । अहल्यादुःखहारिणे । गुहस्वामिने । सलक्ष्मणाय । चित्रकूटप्रियस्थानाय । दण्डकारण्यपावनाय । शरभङ्गसुतीक्ष्णादिपूजिताय । अगस्त्य भाग्यभुवे । ऋषिसंप्रार्थितकृतये । विराधवधपण्डिताय । छिन्नशूर्पणखानासाय । खरदूषणघातकाय । एकबाणहतानेकसहस्रबलराक्षसाय नमः । ७००

मारीचघातिने नमः । नियतसत्तासंबन्धशोभिताय । सीतावियोगनाट्याय । जटायुर्वधमोक्षदाय । शबरीपूजिताय । भक्तहनुमत्प्रमुखावृताय । दुन्दुभ्यस्थिप्रहरणाय । सप्ततालविभेदनाय । सुग्रीवराज्यदाय । वालिघातिने । सागरशोषिणे । सेतुबन्धकर्त्रे । विभीषणहितप्रदाय । रावणादिशिरश्छेदिने । राक्षसाघौघनाशकाय । सीताऽभयप्रदात्रे । पुष्पकागमनोत्सुकाय । अयोध्यापतये । अत्यन्तसर्वलोकसुखप्रदाय । मथुरापुर निर्मात्रे नमः । ७२०

सुकृतज्ञस्वरूपदाय नमः । जनकज्ञानगम्याय । ऐलान्तप्रकटश्रुतये । हैहयान्तकराय । रामाय । दुष्टक्षत्र विनाशकाय । सोमवंशहितैकात्मने । यदुवंशविवर्धनाय । (दशमस्कन्धतः)

परब्रह्मावतरणाय । केशवाय । क्लेशनाशनाय । भूमिभारावतरणाय । भक्तार्थाखिलमानसाय । सर्वभक्तनिरोधात्मने । लीलानन्तनिरोधकृते । भूमिष्ठपरमानन्दाय । देवकीशुद्धिकारणाय । वसुदेवज्ञाननिष्ठसमजीव-निवारकाय । सर्ववैराग्यकरणस्वलीलाधारशोधकाय । मायाज्ञापनकर्त्रे नमः । ७४०

शेषसंभारसंभृतये नमः । भक्तक्लेशपरिज्ञात्रे । तन्निवारण-तत्पराय । आविष्टवसुदेवांशाय । देवकीगर्भभूषणाय । पूर्णतेजोमयाय । पूर्णाय । कंसाधृष्यप्रतापवते । विवेकज्ञानदात्रे । ब्रह्माद्यखिलसंस्तुताय । सत्याय । जगत्कल्पतरवे । नानारूपविमोहनाय । भक्तिमार्गप्रतिष्ठात्रे । विद्वन्मोहप्रवर्तकाय । मूलकालगुणद्रष्ट्रे । नयनानन्दभाजनाय । वसुदेवसुखाब्धये । देवकीनयनामृताय । पितृमातृस्तुताय नमः ।। ७६०

पूर्वसर्ववृत्तान्तबोधकाय नमः । गोकुलागतिलीलाप्तव-सुदेवकरस्थितये । सर्वेशत्वप्रकटनाय । मायाव्यत्ययकारकाय । ज्ञानमोहितदुष्टेशाय । प्रपञ्चास्मृतिकारणाय । यशोदानन्दनाय । नन्दभाग्यभूगोकुलोत्सवाय । नन्दप्रियाय । नन्दसूनवे । यशोदायाः स्तनन्धयाय । पूतनासुपयःपात्रे । मुग्धभावातिसुन्दराय । सुन्दरीहृदयानन्दाय । गोपीमन्त्राभिमन्त्रिताय । गोपालाश्चर्यरसकृते । शकटासुरखण्डनाय । नन्दव्रजजनानन्दिने । नन्दभाग्यमहोदयाय । तृणावर्तवधोत्साहाय नमः । ७८०

यशोदाज्ञानविग्रहाय नमः । बलभद्रप्रियाय । कृष्णाय । संकर्षणसहायवते । रामानुजाय । वासुदेवाय । गोष्ठाङ्गणगतिप्रियाय । किङ्किणीरवभावज्ञाय । वत्सपुच्छावलम्बनाय । नवनीतप्रियाय । गोपीमोहसंसारनाशकाय । गोपबालकभावज्ञाय । चौर्यविद्याविशारदाय । मृत्स्नाभक्षणलीलास्यमाहात्म्यज्ञानदायकाय । धराद्रोणप्रीतिकर्त्रे ।

दधिभाण्डविभेदनाय। दामोदराय। भक्तवश्याय। यमलार्जुनभञ्जनाय। बृहद्वनमहाश्चर्याय नमः। ८००

बृन्दावनगतिप्रियाय नमः । वत्सघातिने । बालकेलये । बकासुरनिषूदनाय । अरण्यभोक्त्रे । बाललीलापरायणाय । प्रोत्साहजनकाय। अघासुरनिषूदनाय । व्यालमोक्षप्रदाय । पुष्टाय । ब्रह्ममोहप्रवर्धनाय । अनन्तमूर्तये । सर्वात्मने । जङ्गमस्थावराकृतये । ब्रह्ममोहनकर्त्रे। स्तुत्याय। आत्मने। सदाप्रियाय। पौगण्डलीलाभिरतये। गोचारणपरायणाय नमः। ८२०

बृन्दावनलतागुल्मवृक्षरूपनिरूपकाय नमः। नादब्रह्मप्रकटनाय। वयः प्रतिकृतिस्वनाय। बर्हिनृत्यानुकरणाय। गोपालानुकृतिस्वनाय। सदाचारप्रतिष्ठात्रे। बलश्रमनिराकृतये। तरुमूलकृताशेषतल्पशायिने। सखिस्तुताय । गोपालसेवितपदाय । श्रीलालितपदाम्बुजाय । गोपसंप्रार्थितफलदाननाशितधेनुकाय । कालीयफणिमाणिक्य-रञ्जितश्रीपदाम्बुजाय । दृष्टिसञ्जीविताशेषगोपगोगोपिकाप्रियाय । लीलासंपीतदावाग्नये । प्रलम्बवधपण्डिताय । दावाग्न्यावृतगोपाल-दृष्ट्याच्छादनवह्निपाय। वर्षाशरद्विभूतिश्रिये। गोपीकामप्रबोधकाय। गोपीरत्नस्तुता-शेषवेणुवाद्यविशारदाय नमः। ८४०

कात्यायनीव्रतव्याजसर्वभावाश्रिताङ्गनाय नमः । सत्सङ्गति-स्तुतिव्याजस्तुतवृन्दावनांघ्रिपाय। गोपक्षुच्छान्ति संव्याज विप्रभार्या-प्रसादकृते । हेतुप्राप्तेन्द्रयागस्वकार्यगोसवबोधकाय नमः । शैलरूप-कृताशेषरसभोगसुखावहाय। लीलागोवर्धनोद्धारपालितस्वव्रजप्रियाय। गोपस्वच्छन्दलीलार्थगर्गवाक्यार्थबोधकाय । इन्द्रधेनुस्तुतिप्राप्त-गोविन्देन्द्राभिधानवते । व्रतादिधर्मसंसक्तनन्दक्लेश विनाशकाय । नन्दादिगोपमात्रेष्टवैकुण्ठगतिदायकाय । वेणुवादस्मरक्षोभमत्तगोपी

विमुक्तिदाय । सर्वभावप्राप्तगोपी सुखसंवर्धनक्षमाय । गोपीगर्व-प्रणाशार्थं तिरोधानसुखप्रदाय । कृष्णभावव्याप्तविश्वगोपी भावित-वेशधृषे । राधाविशेष-संभोगप्राप्तदोषनिवारकाय । परमप्रीतिसंगीत सर्वाद्भुतमहागुणाय । मानापनोदनाक्रन्दगोपीदृष्टिमहोत्सवाय । गोपिकाव्याप्तसर्वाङ्गाय । स्त्रीसंभाषविशारदाय । रासोत्सवमहा-सौख्यगोपी-संभोगसागराय नमः । ८६०

जलस्थलरतिव्याप्तगोपीदृष्ट्यभिपूजिताय नमः । शास्त्रानपेक्ष-कामैकमुक्तिद्वारविवर्धनाय । सुदर्शनमहासर्पग्रस्तनन्दविमोचकाय । गीतमोहितगोपीधृक्शंखचूडविनाशकाय । गुणसंगीतसन्तुष्टये । गोपीसंसारविस्मृतये । अरिष्टमथनाय । दैत्यबुद्धिव्यामोहकारकाय । कैशिघातिने । नारदेष्टाय । व्योमासुरविनाशकाय। अक्रूरभक्ति-संराद्धपादरेणुमहानिधये । रथावरोहशुद्धात्मने । गोपीमानसहारकाय । ह्रदसन्दर्शिताशेषवैकुण्ठाक्रूरसंस्तुताय । मथुरागमनोत्साहाय । मथुराभाग्यभाजनाय । मथुरानगरीशोभादर्शनोत्सुकमानसाय । दुष्टरञ्जकघातिने। वायकार्चितविग्रहाय नमः । ८८०

ओं वस्त्रमालासुशोभाङ्गाय नमः । कुब्जालेपनभूषिताय । कुब्जासुरूपकर्त्रे । कुब्जारतिवरप्रदाय । प्रसादरूपसन्तुष्टहरकोदण्ड-खण्डनाय । शकलाहतकंसाप्तधनूरक्षकसैनिकाय । जाग्रत्स्वप्नभय-व्याप्तमृत्युलक्षणबोधकाय । मथुरामल्लाय । ओजस्विने । मल्लयुद्धविशारदाय । सद्यः कुवलयापीडघातिने । चाणूरमर्दनाय । लीलाहतमहामल्लाय। शलतोशलघातकाय। कंसान्तकाय। जितामित्राय। रथावरोह शुद्धात्मने । गोपीमानसहारकाय । वसुदेवविमोचकाय । ज्ञाततत्वपितृज्ञानमोहनामृतवाङ्मयाय । उग्रसेन प्रतिष्ठात्रे । यादवाधिविनाशकाय नमः ॥ ९००

ओं नन्दादिसान्त्वनकराय नमः । ब्रह्मचर्यव्रते स्थिताय । गुरुशुश्रूषणपराय । विद्यापारमितेश्वराय । सान्दीपनिमृतापत्यदात्रे । कालान्तकादिजिते । गोकुलाश्वासनपराय । यशोदानन्दपोषकाय । गोपिकाविरहव्याजमनोगतिरतिप्रदाय । समोद्धवभ्रमरवाचे । गोपिकामोहनाशकाय । कुब्जारतिप्रदाय । अक्रूरपवित्रीकृतभूगृहाय । पृथादुःखप्रणेत्रे । पाण्डवानां सुखप्रदाय । (उत्तरार्धतः) जरासन्धसमानीतसैन्यघातिने । विचारकाय । यवनव्याप्तमथुरा-जनदत्तकुशस्थलिने । द्वारकाद्भुतनिर्माणविस्मापितसुरासुराय । मनुष्यमात्रभोगार्थभूम्यानीतेन्द्रवैभवाय नमः । ९२०

यवनव्याप्तमथुरानिर्गमानन्दविग्रहाय नमः । मुचुकुन्द-महाबोधयवनप्राणदर्पघ्ने । मुचुकुन्दस्तुताशेषगुणकर्ममहोदयाय । फलप्रदानसन्तुष्टये । जन्मान्तरितमोक्षदाय । शिवब्राह्मणवाक्याप्त-जयभीतिविभावनाय । प्रवर्षणप्रार्थिताग्निदानपुण्य-महोत्सवाय । रुक्मिणीरमणाय । कामपित्रे । प्रद्युम्नभावनाय । स्यमन्तकमणि-व्याजप्राप्तजाम्बवतीपतये । सत्यभामाप्राणपतये । कालिन्दीरतिवर्धनाय । मित्रविन्दापतये । सत्यापतये । वृषनिषूदनाय । भद्रावाञ्छितभर्त्रे । लक्ष्मणावरणक्षमाय । इन्द्रादिप्रार्थित-वधनरकासुरसूदनाय । मुरारये नमः । ९४०

पीठहन्त्रे नमः । ताम्रादिप्राणहारकाय । षोडशस्त्रीसहस्रेशाय । छत्रकुण्डलदानकृते । पारिजातापहरणाय । देवेन्द्रमदनाशकाय । रुक्मिणीसमसर्वस्त्रीसाध्यभोगरतिप्रदाय । रुक्मिणीपरिहासोक्ति-वाक्तिरोधानकारकाय । पुत्रपौत्रमहाभाग्यगृहधर्मप्रवर्तकाय । शम्बरान्तकसत्पुत्रविवाहहतरुक्मिकाय । उषापहृतपौत्रश्रिये । बाणबाहुनिवारकाय । शीतज्वरभयव्याप्तज्वरसंस्तुतषड्गुणाय ।

शङ्करप्रतियोद्ध्रे । द्वन्द्वयुद्धविशारदाय । नृगपापप्रभेत्त्रे । ब्रह्मस्वगुणदोषदृशे । विष्णुभक्तिविरोधैकब्रह्मस्वविनिवारकाय । बलभद्राहितगुणाय। गोकुलप्रीतिदायकाय नमः। ९६०

गोपीस्नेहैकनिलयाय नमः । गोपीप्राणस्थितिप्रदाय । वाक्यातिगामियमुनाहलाकर्षणवैभवाय । पौण्ड्रकत्याजितस्पर्धाय । काशीराजविभेदनाय । काशीनिदाहकरणाय । शिवभस्मप्रदायकाय । द्विविदप्राणघातिने । कौरवाखर्वगर्वनुदे । लाङ्गलाकृष्ट-नगरीसंविग्नाखिलनागराय । प्रपन्नाभयदाय । साम्बप्राप्त सन्मानभाजनाय । नारदान्विष्टचरणाय । भक्तविक्षेपनाशकाय । सदाचारैकनिलयाय । सुधर्माध्यासिताननाय । जरासन्धावरुद्धेन विज्ञापितनिजक्रमाय । मन्त्र्युद्धवादिवाक्योक्तप्रकारैकपरायणाय । राजसूयादिमखकृते। संप्रार्थितसहायकृते नमः। ९८०

इन्द्रप्रस्थप्रयाणार्तमहत्संभारसंभृतये नमः । जरासन्धवध-व्याजमोचिताशेषभूमिपाय । सन्मार्गबोधकाय । यज्ञक्षितिवारण-तत्पराय । शिशुपालहतिव्याजजयशापविमोचकाय । दुर्योधनाभि-मानाब्धिशोषबाणवृकोदराय । महादेववरप्राप्तपुरशाल्वविनाशकाय । दन्तवक्त्रवधव्याजविजयाघौघनाशकाय । विदूरथप्राणहर्त्रे । न्यस्त-शस्त्रास्त्रविग्रहाय । उपधर्मविलिप्ताङ्गसूतघातिने । वरप्रदाय । बल्वक-प्राणहरणपालितर्षिनुतिक्रियाय । सर्वतीर्थाघनाशार्थतीर्थयात्रा-विशारदाय । ज्ञानक्रियाविभेदेष्टफलसाधनतत्पराय । सारथ्यादिक्रिया-कर्त्रे । भक्तवश्यत्वबोधकाय। सुदामरङ्क-भार्यार्थभूम्यानीतेन्द्रवैभवाय। रविग्रह निमित्ताप्त कुरुक्षेत्रैकपावनाय । नृपगोपी समस्तस्त्रीपावनार्थाखिलक्रियाय नमः। १०००

ओं ऋषिमार्गप्रतिष्ठात्रे नमः । वसुदेवमखक्रियाय । वसुदेवज्ञानदात्रे । देवकीपुत्रदायकाय । अर्जुनस्त्रीप्रदात्रे । बहुलाश्वस्वरूपदाय । श्रुतदेवेष्टदात्रे । सर्वश्रुतिनिरूपिताय । महादेवाद्यतिश्रेष्ठाय । भक्तिलक्षणनिर्णयाय । वृकग्रस्तशिवत्रात्रे । नानावाक्यविशारदाय । नरगर्वविनाशार्थ-हृतब्राह्मणबालकाय । लोकालोकपरस्थानस्थितबालकदायकाय । द्वारकास्थमहाभोग-नानास्त्रीरतिवर्धनाय । मनस्तिरोधानकृत-व्यग्रस्त्रीचित्तभाविताय । (एकादशस्कन्धतः) मुक्तिलीलाविहरणाय । मौशलव्याजसंहृतये । श्रीभागवतधर्मादिबोधकाय। भक्तिनीतिकृते नमः। १०२०

ओं उद्धवज्ञानदात्रे नमः । पञ्चविंशतिधा गुरवे । आचारभक्तिमुक्त्यादिवक्त्रे। शब्दोद्धवस्थितये। हंसाय। धर्मप्रवक्त्रे। सनकाद्युपदेशकृते । भक्तिसाधनवक्त्रे । योगसिद्धिप्रदायकाय । नानाविभूतिवक्त्रे । शुद्धधर्मावबोधकाय । मार्गत्रयविभेदात्मने । नानाशङ्कानिवारकाय । भिक्षुगीताप्रवक्त्रे । शुद्धसांख्यप्रवर्तकाय । मनोगुणविशेषात्मने । ज्ञापकोक्तपुरूरवसे । पूजाविधिप्रवक्त्रे । सर्वसिद्धान्तबोधकाय। लघुस्वमार्गवक्त्रे नमः। १०४०

ओं स्वस्थानगतिबोधकाय नमः । यादवाङ्गोपसंहर्त्रे । सर्वाश्चर्यगतिक्रियाय । (द्वादशस्कन्धतः) कालधर्म-विभेदार्थवर्णनाशनतत्पराय । बुद्धाय । गुप्तार्थवक्त्रे । नानाशास्त्रविधायकाय । नष्टधर्ममनुष्यादिलक्षणज्ञापनोत्सुकाय । आश्रयैकगतिज्ञात्रे। कल्किने। कलिमलापहाय। शास्त्रवैराग्यसंबोधाय। नानाप्रलयबोधकाय । विशेषतः शुकव्याजपरीक्षिज्ज्ञानबोधकाय । शुकेष्टगतिरूपात्मने । परीक्षिद्देहमोक्षदाय । शब्दरूपाय । नादरूपाय । वेदरूपाय। विभेदनाय नमः। १०६०

ॐ व्यासाय नमः । शाखाप्रवक्त्रे । पुराणार्थप्रवर्तकाय । मार्कण्डेयप्रसन्नात्मने । वटपत्रपुटेशयाय । मायाव्याप्त-महामोहदुःखशान्तिप्रवर्तकाय । महादेवस्वरूपाय । भक्तिदात्रे । कृपानिधये। आदित्यान्तर्गताय। कालाय। द्वादशात्मने। सुपूजिताय। श्रीभागवतरूपाय। सर्वार्थफलदायकाय नमः। १०७५

—*—

## विष्णोः अष्टोत्तरशतनामस्तोत्रम्

विष्णुर्जिष्णुर्वषट्कारो देवदेवो वृषाकपिः ।
दामोदरो दीनबन्धुरादिदेवोऽदितेः सुतः ॥ १

पुण्डरीकः परानन्दः परमात्मा परात्परः ।
परशुधारी विश्वात्मा कृष्णः कलिमलापहः ॥ २

कौस्तुभोद्भासितोरस्को नरो नारायणो हरिः ।
हरो हरप्रियः स्वामी वैकुण्ठो विश्वतोमुखः ॥ ३

हृषीकेशोऽप्रमेयात्मा वराहो धरणीधरः ।
वामनो वेदवक्ता च वासुदेवः सनातनः ॥ ४

रामो विरामो विरजो रावणारी रमापतिः ।
वैकुण्ठवासी वसुमान् धनदो धरणीधरः ॥ ५

धर्मेशो धरणीनाथो ध्येयो धर्मभृतां वरः ।
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्॥ ६

सर्वगः सर्ववित्सर्वः शरण्यः साधुवल्लभः ।
कौसल्यानन्दनः श्रीमान् रक्षःकुलविनाशकः ॥ ७

जगत्कर्ता जगद्धर्ता जगज्जेता जनार्तिहा ।
जानकीवल्लभो देवो जयरूपो जलेश्वरः ॥ ८

क्षीराब्धिवासी क्षीराब्धितनयावल्लभस्तथा ।
शेषशायी पन्नगारिवाहनो विष्टरश्रवाः ॥ ९

माधवो मधुरानाथो मोहदो मोहनाशनः ।
दैत्यारिः पुण्डरीकाक्षो ह्यच्युतो मधुसूदनः ॥ १०

सोमसूर्याग्निनयनो नृसिंहो भक्तवत्सलः ।
नित्यो निरामयः शुद्धो नरदेवो जगत्प्रभुः ॥ ११

हयग्रीवो जितरिपुरुपेन्द्रो रुक्मिणीपतिः ।
सर्वदेवमयः श्रीशः सर्वाधारः सनातनः ॥ १२

साम्य सौम्यप्रदः स्रष्टा विष्वक्सेनो जनार्दनः ।
यशोदातनयो योगी योगशास्त्र परायणः ॥ १३

रुद्रात्मको रुद्रमूर्तिः राघवो मधुसूदनः ।
इति ते कथितं धिं नाम्नामष्टोत्तरं शतम्॥ १४

सर्वपापहरं पुण्यं विष्णोरमिततेजसः ।
दुःखदारिद्र्य दौर्भाग्यनाशनं सुखवर्धनम्॥ १५

सर्वसम्पत्करं सौम्यं महापातकनाशनम् ।
प्रातरुत्थाय विप्रेन्द्र पठेदेकाग्रमानसः ।

तस्य नश्यन्ति विपदां राशयः सिद्धिमाप्नुयात् ॥ १६

—शाक्तप्रमोदतः

—*—

# विष्णोरष्टोत्तरशतनामावलिः

ओं विष्णवे नमः । जिष्णवे । वषट्काराय । देवदेवाय । वृषाकपये । दामोदराय । दीनबन्धवे । आदिदेवाय । अदितेः सुताय । पुण्डरीकाय । परानन्दाय । परमात्मने । परात्पराय । परशुधारिणे । विश्वात्मने । कृष्णाय । कलिमलापहाय । कौस्तुभोद्भासितोरस्काय । नराय । नारायणाय नमः । २०

ओं हरये नमः । हराय । हरप्रियाय । स्वामिने । वैकुण्ठाय । विश्वतोमुखाय । हृषीकेशाय । अमेयात्मने । वराहाय । धरणीधराय । वामनाय । वेदवक्त्रे । वासुदेवाय । सनातनाय । रामाय । विरामाय । विरजाय । रावणारये । रमापतये । वैकुण्ठवासाय नमः । ४०

ओं वसुमते नमः । धनदाय । धरणीधराय । 'धर्मेशाय । धरणीनाथाय । ध्येयाय । धर्मभृतां वराय । सहस्रशीर्ष्णे । पुरुषाय । सहस्राक्षाय । सहस्रपदे । सर्वगाय । सर्वविदे । सर्वाय । शरण्याय । साधुवल्लभाय । कौसल्यानन्दनाय । श्रीमते । रक्षःकुलविनाशकाय । जगत्कर्त्रे नमः । ६०

ओं जगद्धर्त्रे नमः । जगज्जेत्रे । जनार्तिघ्ने । जानकीवल्लभाय । देवाय । जयरूपाय । जलेश्वराय । क्षीराब्धिवासिने । क्षीराब्धितनयावल्लभाय । शेषशायिने । पन्नगारिवाहनाय । विष्टरश्रवसे । माधवाय । मथुरानाथाय । मोहदाय । मोहनाशनाय । दैत्यारये । पुण्डरीकाक्षाय । अच्युताय । मधुसूदनाय नमः । ८०

सोमसूर्याग्निनयनाय नमः । नृसिंहाय । भक्तवत्सलाय । नित्याय । निरामयाय । शुद्धाय । नरदेवाय । जगत्प्रभवे । हयग्रीवाय । जितरिपवे । उपेन्द्राय । रुक्मिणीपतये । सर्वदेवमयाय । श्रीशाय । सर्वाधाराय ।

सनातनाय । सौम्याय । सौम्यप्रदाय । स्रष्ट्रे । विष्वक्सेनाय नमः । १००

ओं जनार्दनाय नमः । यशोदातनयाय । योगिने । योगशास्त्र परायणाय । रुद्रात्मकाय । रुद्रमूर्तये । राघवाय । मधुसूदनाय नमः । १०८

—*—

## श्रीरङ्गनाथाष्टोत्तरशतनामस्तोत्रम्

अस्य श्रीरङ्गनाथाष्टोत्तरशतनामस्तोत्रमहामन्त्रस्य, वेदव्यासो भगवानृषिः, अनुष्टुप् छन्दः, भगवान् श्रीमहाविष्णुर्देवता। श्रीरङ्गशायीति बीजम्, श्रीकान्त इति शक्तिः, श्रीप्रद इति कीलकम्, मम समस्तपापनाशार्थे जपे विनियोगः ।

धौम्य उवाच—

श्रीरङ्गशायी श्रीकान्तः श्रीप्रदः श्रितवत्सलः ।
अनन्तो माधवो जेता जगन्नाथो जगद्गुरुः ॥ १

सुरवर्यः सुराराध्यः सुरराजानुजः प्रभुः ।
हरिर्हतारिर्विश्वेशः शाश्वतः शम्भुरव्ययः ॥ २

भक्तार्तिभञ्जनो वाग्मी वीरो विख्यातकीर्तिमान् ।
भास्करः शास्त्रतत्वज्ञो दैत्यशास्ताऽमरेश्वरः ॥ ३

नारायणो नरहरिर्नीरजाक्षो नरप्रियः ।
ब्रह्मण्यो ब्रह्मकृद् ब्रह्मा ब्रह्माङ्गो ब्रह्मपूजितः ॥ ४

कृष्णः कृतज्ञो गोविन्दो हृषीकेशोऽघनाशनः ।
विष्णुर्जिष्णुर्जितारातिः सज्जनप्रिय ईश्वरः ॥ ५

त्रिविक्रमस्त्रिलोकेशस्त्रय्यर्थस्त्रिगुणात्मकः ।
काकुत्स्थः कमलाकान्तः कालियोरगमर्दनः ॥ ६

कालाम्बुदश्यामलाङ्गः केशवः क्लेशनाशनः ।
केशिप्रभञ्जनः कान्तो नन्दसूनुररिन्दमः ॥ ७

रुक्मिणीवल्लभः शौरिर्बलभद्रो बलानुजः ।
दामोदरो हृषीकेशो वामनो मधुसूदनः ॥ ८

पूतः पुण्यजनध्वंसी पुण्यश्लोकशिखामणिः ।
आदिमूर्तिर्दयामूर्तिः शान्त मूर्तिरमूर्तिमान् ॥ ९

परं ब्रह्म परं धाम पावनः पवनो विभुः ।
चन्द्रश्छन्दोमयो रामः संसाराम्बुधितारकः ॥ १०

आदितेयोऽच्युतो भानुः शङ्करः शिव ऊर्जितः ।
महेश्वरो महायोगी महाशक्तिर्महत्प्रियः ॥ ११

दुर्जनध्वंसकोऽशेषसज्जनोपास्तिसत्फलम् ।
पक्षीन्द्रवाहनोऽक्षोभ्यः क्षीराब्धिशयनो विधुः ॥ १२

जनार्दनो जगद्धेतुर्जितमन्मथविग्रहः ।
चक्रपाणिः शङ्खधारी शार्ङ्गी खड्गी गदाधरः ॥ १३

एवं विष्णोः शतं नाम्नां अष्टोत्तरमिहेरितम् ।
स्तोत्राणामुत्तमं गुह्यं नामरत्नस्तवाभिधम् ॥ १४

सर्वथा सर्वरोगघ्नं चिन्तितार्थफलप्रदम् ।
त्वं तु शीघ्रं महाराज गच्छ रङ्ग स्थलं शुभम् ॥ १५

स्नात्वा तुलार्के कावेर्यां माहात्म्यश्रवणं कुरु ।
गवाश्ववस्त्र धान्यान्नभूमिकन्या प्रदो भव ॥ १६

द्वादश्यां पायसान्नेन सहस्रं दश भोजय।
नामरत्नस्तवाख्येन विष्णोरष्टशतेन च।
स्तुत्वा श्रीरङ्गनाथं त्वं अभीष्टफलमाप्नुहि॥ १७

—*—

## श्रीरङ्गनाथाष्टोत्तरशतनामावलिः

ओं श्रीरङ्गशायिने नमः । श्रीकान्ताय । श्री प्रदाय । श्रितवत्सलाय । अनन्ताय । माधवाय । जेत्रे । जगन्नाथाय । जगद्गुरवे । सुरवर्याय । सुराराध्याय । सुरराजानुजाय । प्रभवे । हरये । हतारये । विश्वेशाय । शाश्वताय । शम्भवे । अव्ययाय । भक्तार्ति भञ्जनाय नमः । २०

ओं वाग्मिने नमः । वीराय । विख्यातकीर्तिमते । भास्कराय । शास्त्रतत्त्वज्ञाय । दैत्यशास्त्रे । अमरेश्वराय । नारायणाय । नरहरये । नीरजाक्षाय । नरप्रियाय । ब्रह्मण्याय । ब्रह्मकृते । ब्रह्मणे । ब्रह्माङ्गाय । ब्रह्मपूजिताय । कृष्णाय । कृतज्ञाय । गोविन्दाय । हृषीकेशाय नमः । ४०

ओं अघनाशनाय नमः । विष्णवे । जिष्णवे । जितारातये । सज्जनप्रियाय । ईश्वराय । त्रिविक्रमाय । त्रिलोकेशाय । त्रय्यर्थाय । त्रिगुणात्मकाय । काकुत्स्थाय । कमलाकान्ताय । कालियोरगमर्दनाय । कालाम्बुदश्यामलाङ्गाय । केशवाय । क्लेशनाशनाय । केशिप्रभञ्जनाय । कान्ताय । नन्दसूनवे । अरिन्दमाय नमः । ६०

ओं रुक्मिणीवल्लभाय नमः । शौरये । बलभद्राय । बलानुजाय । दामोदराय । हृषीकेशाय । वामनाय । मधुसूदनाय । पूताय । पुण्यजनध्वंसिने । पुण्यश्लोक शिखामणये । आदिमूर्तये । दयामूर्तये ।

शान्तमूर्तये । अमूर्तिमते । परस्मै ब्रह्मणे । परस्मै धाम्ने । पावनाय । पवनाय । विभवे नमः । ८०

ओं चन्द्राय नमः । छन्दोमयाय । रामाय । संसाराम्बुधितारकाय । आदितेयाय । अच्युताय । भानवे । शङ्कराय । शिवाय । ऊर्जिताय । महेश्वराय । महायोगिने । महाशक्तये । महत्प्रियाय । दुर्जनध्वंसकाय । अशेषसज्जनोपास्तिसत्फलाय । पक्षीन्द्रवाहनाय । अक्षोभ्याय । क्षीराब्धिशयनाय । विधवे नमः । १००

ओं जनार्दनाय नमः । जगद्धेतवे । जितमन्मथविग्रहाय । चक्रपाणये । शङ्खधारिणे । शार्ङ्गिणे । खड्गिने । गदाधराय नमः । १०८

—*—

# श्रीकृष्णस्तुतिः - मङ्गलम्

नमः परमकल्याण नमस्ते विश्वमङ्गल ।
वासुदेवाय शान्ताय यदूनां पतये नमः ॥ १

नमोस्तु ते महायोगिन् प्रपन्नमनुशाधि माम् ।
यथा त्वच्चरणाम्भोजे रतिः स्यादनपायिनी ॥ २

कृष्णाय वासुदेवाय देवकीनन्दनाय च ।
नन्दगोपकुमाराय गोविन्दाय नमो नमः ॥ ३

नमः पङ्कजनाभाय नमः पङ्कजमालिने ।
नमः पङ्कजनेत्राय नमस्ते पङ्कजाङ्घ्रये ॥ ४

नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥ ५

राधिकालिङ्गिताङ्गाय नमो रासविहारिणे।
राजीवायतनेत्राय रसिकेशाय ते नमः ॥ ६

मुग्धगोपवधूत्तुङ्गकुचमण्डलमर्दिने।
मुरलीगानलोलाय मुकुन्दायास्तु मङ्गलम् ॥ ७

नित्योत्सवो भवेत्तेषां नित्य श्रीर्नित्यमङ्गलम्।
येषां हृदिस्थो भगवान् मङ्गलायतनं हरिः ॥ ८

लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः।
येषामिन्दीवरश्यामो हृदये सुप्रतिष्ठितः ॥ ९

नन्दहस्तमवलम्ब्य पाणिना मन्दमन्दमरविन्दलोचनः।
सञ्चरन् क्वणितकिङ्किणीरवः सन्ततं मम तनोतु मङ्गलम् ॥ १०

—*—

